हेमाद्रिकृतचतुर्वर्गचिंतामणिस्थव्रतखंडोक्तविश्वकर्मशास्त्रवचनानुसारेण शिक्षासहितवेदस्वरूपाणि



# अथ शुक्लयजुर्वेदसंहितानुक्रमणिका ।

श्रीजगद्धात्र्यै परदेवतायै नमो नमः ॥

# प्रास्ताविकम्

भो समाराधितभारतीचरणाम्बुजा विद्वांसः!

मंत्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ (पा. शि.)

सन्दृश्यते शब्दाना साधुत्वासाधुत्वाववोधाय सम्यक्तया शुद्धोच्चारणाय च व्याकरणशास्त्राध्ययनस्यावश्यकता । न शक्नोत्यनधीततच्छास्त्रः कोऽपि सुस्पष्टतया शब्दप्रयोजनं शब्दोच्चारणं च प्रयोगविज्ञानमपि ज्ञातुं कर्तुञ्च वैदिकोऽवैदिको वा । एतत्प्रतिपादनाय पूर्वोक्तः श्लोकः स्वविरचिताया शिक्षाया महर्षिणा पाणिनिनोपनिबद्धः । तथैव सामान्यतया शब्दप्रयोगविधावुच्चारणवेलायामपि तत्तत्पदाना विपरीतासगतार्थदुर्बोधत्वादिदोषनिवारणाय सर्वथा "**व्याकरणशास्त्रज्ञानस्य**" वोध अत्यावश्यक इति प्रतिपादयता केनचिद्विदुषा "**यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् ॥ स्वजनः श्वजनो मा भूत्सकलं शकलं सकृच्छकृत्**" इति मनसि कृत्वा मत्पुत्रः "स्वजनस्य श्वजनेन, सकलस्य शकलेन, सकृत्पदस्य शकृदुच्चारणेन" च प्रयोगो न कुर्यादिति स्वपुत्र लक्ष्यीकृत्यैव विरचितोऽयं श्लोक इत्यपि वक्तुं शक्यत एव । अत एव अपशब्दवारणाय सामान्यतया शब्दशास्त्रज्ञानं मूर्ध्नि

तिष्ठतीति सर्वैरपि स्वीकृतम्। तर्हि ये वैदिकाश्चतुर्षु वेदेषु कृतपरिश्रमाः स्वस्ववेदमंत्रोच्चारणं विधाय वैदिककर्मणि तॉश्च मन्त्रान् संप्रयुज्य यजमानस्य कल्याणाय प्रत्यहं संहितापाठेन रुद्रपाठेन जपेनाग्नावाहुतिप्रक्षेपेण च वेदमंत्राणां प्रयोगं विदधते तेषां तूदात्तानुदात्तस्वरितादीनां ज्ञानं तत्तन्मत्रोच्चारणे तत्तत्स्वराणां तत्र तत्र सन्निवेशनं हस्तचालनविधौ ह्रस्व ं दीर्घ ं प्लुत ३ प्रभृतीनां तथैव ? ं ÷ म् न लोकॉ १ ॥ शत्रू २ ॥ इत्यादिषु चिह्नेषु कुत्र कया रीत्याऽङ्गुलिनिर्देशः कार्य इत्यादि ज्ञानमपि शब्दशास्त्रज्ञानमन्तरा कथं स्यात्।

एतदर्थमेव पाणिनिना पूर्वोक्तश्लोके स्पष्टतया **"स्वरतो वर्णतो हीनो मंत्रो मिथ्याप्रयुक्तो मंत्रार्थं नाभिव्यनक्ति उतान्वर्थरहितः सन् वाग्वज्रो भूत्वा यजमानं हन्यात् यथा इन्द्रस्य नाशाय कृतेऽपि इन्द्रशत्रुशब्दप्रयोगे स्वरतोऽपराधेन वृत्रासुर एव हतः।"** एवं मा भूयादित्येतदर्थं मत्रप्रयोगे स्वर-वर्णार्थज्ञानस्य प्राधान्यमिति सुस्पष्टमभिहितम्। अतः शब्दानां साधुत्वबोधाय व्याकरणज्ञानेन सह वेदमंत्राणां स्वरसन्धिज्ञानमुच्चारणज्ञानं याज्ञवल्क्यशिक्षाज्ञानं कात्यायनमहर्षिप्रणीतशुक्लयजुःप्रातिशाख्यज्ञानञ्च वैदिकानामत्यावश्यकमेवेति प्रतिभाति।

महर्षिणा याज्ञवल्क्येन शिक्षायां **स्वरप्रकरणे मात्राधिकारः, अध्ययनविधिः, हस्तचालनविधिः, स्वरसंहिताविधिः, वर्णप्रकरणे दैवताद्यधिकारः, सन्ध्यधिकारः, वर्णोच्चारणाधिकारः, पदाधिकारः, प्रकीर्णाधिकारश्च;** एवं प्रकरणानि निर्माय तत्तत्प्रकरणे सर्वोऽपि विधिः स्पष्टतया सोदाहरणः प्रदर्शितः, सोऽवश्यं वैदिकैः परिशीलनीयः। गुरोः सकाशात्परंपरया या तज्ज्ञानप्राप्तिमन्तरा वेदाध्ययनकर्तारो वेदपाठकाश्च केवलं स्वकीयबुद्ध्या वेदाध्ययनं संपादयितुं नार्हेयुरिति प्रदर्शनाय कानिचित् पदानामुदाहरणान्येतेभ्यः प्रकरणेभ्य उद्धृत्य कियद्वेदस्य दुर्बोधत्वमिति सर्वेषां ज्ञानाय मया प्रदीयते।

**अध्ययनविधौ स्वरप्रकरणम्** । तत्रोदात्तानुदात्तस्वरितादीनां ज्ञानाय तेषां लक्षणम्, तत्तत्स्वराणां स्थानम्, वर्णः, दैवतम्, जातिः, गोत्रम्, छन्दश्च । यथा—उदात्तस्वरस्य शुक्लो वर्णः, अग्निर्दैवतम्, ब्राह्मणजातिः, भारद्वाजगोत्रम्, गायत्रीच्छन्दः ॥ अनुदात्तस्य लोहितो वर्णः, सोमदैवतम्, क्षत्रियजातिः, गौतमगोत्रम्, त्रिष्टुप्छन्दः ॥ स्वरितस्वरस्य श्यामो वर्णः, सूर्यदेवतम्, वैश्यजातिः, गार्ग्यसगोत्रम्, जगतीच्छन्दः ॥ सामवेदे ये सप्त स्वराः षड्ज-ऋषभ गान्धार-मध्यम-पञ्चम-धैवत-निषादादयो गानविधौ उक्तास्तेषां यजुर्वेदे तु त्रिभिरुदात्तानुदात्तस्वरितस्वरैरेव व्यवहार (उच्चारणम्) उक्तः । यथा—उच्चौ निषाद-गान्धारौ उदात्तस्वरे, नीचौ ऋषभ-धैवतौ अनुदात्तस्वरे, शेषाः षड्ज-मध्यम-पञ्चमाः स्वराः स्वरितस्वरेऽन्तर्भूताः । एतेन त्रिषु स्वरेषु तेषां स्वराणामन्तर्भूतत्वं ज्ञेयम् । अक्ष्णोर्निमेषमात्रेण यो स्वरः समुच्चार्यते स काल एकमात्राकालः स ह्रस्वस्वरः ॥ तावान्द्विः द्विमात्राकालो दीर्घस्वरो ज्ञेयः । तावानेव त्रिमात्राकालः प्लुतस्वरो ज्ञेयः ॥ सर्वत्र मंत्रोच्चारणे कण्डिकाया अर्धोच्चारणे जाते द्विमात्राकालो विरामः कार्यः । यथा "निधीनान्त्वा निधिपतिꣳ हवामहे वसो मम" । अत्र ममेति पदोच्चारणानन्तर द्विमात्राकालं विरामं कृत्वैवाग्रिमाया अर्धकण्डिकाया उच्चारणं कर्तव्यम् । तथैव मंत्रसमाप्तावपि "त्वमजासिगर्भधम्" इत्यत्र त्रिमात्राकालो विरामः कार्यः । एवमेव वेदमंत्राणां पाठविधौ केवले मंत्रोच्चारणे वा सर्वत्राध्ययनस्याय नियमो बोध्यः, करणीयश्च वैदिकैरेवविधो निरामः । वैदिकैर्वेदमन्त्रोच्चारणावसरे प्रणवस्यादावुच्चारणं (त्रिमात्रिक) प्लुतं कृत्वा "भूर्भुवः स्वः" इति तिसृणां व्याहृतीनां तथैव सावित्रीमन्त्रस्याप्युच्चारणमन्तरा संहितापाठो मंत्रपाठो वा नारम्भणीयः ।

सर्वानुक्रमसूत्रे प्रथमेऽध्याये "ऋषिच्छन्दोदेवतादीन्येतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजति याजयते तस्य ब्रह्म निर्वीर्यं भवति यातयामं भवत्यथान्तराश्च गर्तं वाऽऽपद्यते स्थाणु वर्च्छति प्रमीयते पापीयान् भवतीति" । तथैव "अथ विज्ञाये-

तानि योऽधीते तस्य वीर्यवदथ योऽर्थवित्तस्य वीर्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते" इत्युक्तम्। अतश्च ऋषिच्छन्ददेवतादीनामिव मंत्राणा वर्णजातिदैवतानामपि ज्ञानेन वेदाध्ययनकर्तॄणां तत्तत्कर्मणि मंत्रप्रयोगश्च विदधतां फलाफलत्वेन योगो जायते तदपि न विस्मरणीयं वैदिकैः ।

**हस्तचालनविधावुदात्तादिस्वराणां ज्ञानम्**—वेदेषूदात्तानुदात्तस्वरितादयः स्वरा हस्तस्य चालनद्वारैव प्रदर्श्यन्ते । वेदपाठकाः स्वदक्षिणहस्तम् उपर्यधो मध्ये वामदक्षिणभागयोर्वा नयन्तस्तत्तत्स्वरान् दर्शयन्ति । (दक्षिणकर्णसमीपे इति यावत्), उदात्तस्वरोच्चारे गात्राणामायामेनोर्ध्वगमनं भवति ततश्च यः स्वरो निष्पद्यते तस्य स्वरस्य "उदात्तसंज्ञा" उक्ता । यथा—अग्ना ३ इ पत्नी । लाजी ३ न् ॥ अनुदात्तस्वरे हस्तस्याधोनयनम् हृदयप्रदेशे च नयनम् ॥ यस्य स्वरस्योच्चारणे गात्राणा मार्दवेन नीचैरधोगमन भवति ततश्च यः स्वर उत्पद्यते तस्य "अनुदात्तसंज्ञा" उक्ता । यथा—"आर्षेयऽऋषीणाम्" ॥ स्वरितस्वरे हस्तस्य मध्येऽधो वा सन्निवेशनम् । गात्राणामूर्ध्वाधोगमनेनोदात्तानुदात्तस्वरयोः समाहारेण यः स्वर उद्भवति तस्य "स्वरितसंज्ञा" उक्ता । यथा "धान्यमसि" वैष्णव्यौ" । एवं तत्तत्स्वरोच्चारे हस्तस्य सन्निवेशोऽपि त्र्यङ्गुलान्तरायो (न तु स्वमनसैव लघुर्दीर्घो वा हस्तप्रक्षेपः) हस्तचालनद्वारा तत्र तत्र तत्तत्स्वरप्रदर्शनपूर्वको नातिदीर्घो ह्रस्वो वा कार्यः । स्वदक्षिणवामपार्श्वयोस्तिर्यग्घस्तचालने स्वरविधौ तु षडङ्गुलान्तर बोध्यम् । अत्रोपर्यधोभागे निर्दिष्टानामुदात्तानुदात्तस्वरितस्वराणा प्रचयस्वराणाञ्च विज्ञानं लेखद्वारा न प्रदर्शनयोग्यमतस्तद्वेदाध्ययनकाल एव स्वगुरोः सकाशाद्याज्ञवल्क्यशिक्षातो महर्षिकात्यायनप्रणीतशुक्लयजुःप्रातिशाख्यस्याध्ययनद्वारा चावश्यं वेदपाठकैः सपादनीयं नान्यथा वेदाध्ययनं फलजनकं भवेत्स्वस्य परस्य वा ।

**वेदे सन्धिप्रकरणम्**—वेदे चतुर्विधः सन्धिरुक्तः। लोपाऽऽगमविकाराः प्रकृतिभावश्च। तस्यापि ज्ञानमावश्यकं वेदविदाम्। यत्र द्वयोः स्वरयोर्मध्ये मंत्रादौ सन्ध्यभावस्तत्र विवृत्तिनामा एका वृत्तिर्विज्ञेया। साऽपि "पिपीलिका-पाकवती-वत्सानुसारिणी-वत्सानु-सृजितेति चतुर्विधा। तथा च "करिणी कुर्वणी चैव हरिणी हरिता तथा। तद्वद्वंसपदा नाम पञ्चैताः स्वरभक्तयः" ॥ इति स्वरभक्त-योऽपि पञ्चविधा वर्तन्ते। आसामपि लक्षणान्युदाहरणानि च शिक्षाया ज्ञेयानि। यत्र मंत्राणा मध्येऽनुस्वारस्य ॐ इत्याकारकेन चिह्नेन गुरुभूतोच्चारणं, ॐ इत्याकारकेन चिह्नेन लघुभूतोच्चारणमपि यथा निर्दिष्टं तत्तत्र तथैवोच्चारणीय प्रदर्शनीयञ्च। वेदे वकारस्य कुत्र (व) गुरु-भूतोच्चारणं यकारस्य यकारोच्चारण कुत्र विभाषयाऽऽम्रेडितपदे कथमुच्चारणं कुत्र च वकारस्येपत्स्पृष्टत्व-(लघुभूतोच्चारणम्) तत्सर्वमपि मह-र्षिणा कात्यायनेन योगिवर्येण याज्ञवल्क्येन च स्वस्वविरचिते ग्रन्थे सुस्पष्ट सोदाहरण निर्दिष्टम्। तत उद्धृत्य कतिपयाः श्लोका लिख्यन्ते मया दिग्दर्शनाय। "पादान्यञ्च पदान्यञ्च तथाऽवग्रहकालिकम्। सुस्पष्ट (कालविलम्बेन गुरुभूतम्) तं विजानीयात्तत्तत्कालविलम्बनम् ॥ सन्धिजौ च पदान्तीयावुपसर्गपरो लघू। अथ-वकारस्त्रिविधः प्रोक्तो गुरुर्लघुर्लघूत्तरः। आदौ गुरुर्लघुर्मध्ये पादान्ते च लघूत्तरः ॥ पञ्चमादुत्तरो यो वो यदि नैकपदे भवेत्। संहिताया लघुः सोऽथ पदकाले गुरुर्भवेत् ॥ मा-न स-शब्देभ्यो विभाषाऽऽम्रेडिते यवौ ॥ उपसर्गपरो यस्तु स वकारो लघुर्मतः" ॥ इति वकारस्य सुस्पृष्टत्वमीषत्स्पृष्टत्वञ्च ज्ञेयम्। वो वा वा वै मंत्रपाठे लघवो गुरवः पदे। जशब्द इति विज्ञेयो योऽन्यः स य इति स्मृतः ॥ तथाच यकारस्य जकारोच्चारणे "पादादौ च पदादौ च सयोगावग्रहेषु यः। उपसर्गात्परो यस्तु पदादिरपि दृश्यते। ईषत्स्पृष्टो हकाररेफसयुक्त ऋवर्णादय एव वा। सुस्पृष्टं तं विजानीयाद्यकारो नान्ययुग् यदि ॥ विभाषया यकारश्च नित्यमाम्रेडितेऽपि च। यत्र यत्रेति मा यज्ञ तथामेति-(जकारोच्चारणरहितः) यथा वियन् पदच्छेदे परो भवेत् ॥

पदादिभिः ॥ अथात उत्तरो यः स्यात्तथा नेतिपदात्परः । भवतीत्यपि पूर्वंव तथा च सपदादपि ॥ अथावयमादित्यादावथो ये अस्य दृश्यते । न यत्परो यथा च स्यात्सपदे तदुदाहृतः ॥ यदेव लक्षणं यस्य वकारस्यापि तद्भवेत् । यत्र यत्र विशेषः स्यादिदानीं स स कथ्यते ॥ त्वदर्थवाचिनौ वो वां वा वै यदि निपातजौ । आदेशाश्च विकल्पार्था ईपत्स्पृष्टास्तु ते स्मृताः ॥ एते श्लोका अवश्यं सार्थां अध्येतव्याः ॥

**वेदे स्वरसन्धिप्रकरणम्**—उदात्ताद्यः परे स्वराः । "अभिनिहित-क्षैप्र-प्रश्लिष्ट-तैरोव्यञ्जन-तैरोभाव-पादवृत्त-ताथाभाव्य-भेदेन सप्तविधा अपि जात्येन सह अष्टौ स्वरितस्वराः । तेषा नीचस्वरपरा अभिनिहित-क्षैप्र-प्रश्लिष्टा ज्ञेयाः । वेदः असि वेदोसि । भागः असि भागोसि । कः असि कोसि । इत्यादौ "अकारे च" (शु य. प्रा. ३ अ सू. ६१) इति पूर्वरूपे वेदोसि । अत्र अभिनिहिताख्यः स्वरः । यत्र इवर्णं उवर्णश्च यकारं वकारं क्रमेणानुदात्तेऽसवर्णस्वरे परे प्राप्नोति तत्र क्षैप्राख्यः स्वरः । यथा-त्रि-अम्बकम्-त्र्यम्बकम् । यत्र इवर्णं इवर्णेन सह सयुतो (दीर्घः) उदात्तानुदात्तस्वरविशिष्टो भवति तत्र प्रश्लिष्टाख्यः स्वरः । यथा अभि-इन्धताम्-अभीन्धताम् । यत्रोदात्तपूर्वः स्वरः तस्मात्परः स्पर्शादिवर्णो व्यञ्जनयुतस्तत्र तैरोव्यञ्जनाख्यः स्वरः । यथा-इडे-रन्ते-हव्ये-काम्ये चन्द्रे इत्यादौ बोध्यम् । एव गोपताविति गो पतौ इत्यत्र तैरोविरामः । यत्र स्वरितमध्ये विवृत्तिः (स्वरयोर्मध्ये सन्ध्यभावः) तत्र पादवृत्ताख्यः स्वरः । यथा-श्वित्रऽआदित्त्योर्मर्त्त्यानाम् । यत्र द्वयोरुदात्ताक्षरयोर्मध्ये विरामस्तत्र ताथाभाव्याख्यः स्वरः । यथा-तनू-नात्र इति तनू नात्रे इत्यादौ ।

**वर्णप्रकरणे वर्णदैवताद्यधिकारः**—तत्र स्वराणां नानाविधवर्णत्वं प्रतिपादितम् । स्पर्शवर्णानां कृष्णत्वम् । अन्तःस्थानां

कपिलत्वम्। ऊष्माक्षराणाम् असवर्णत्वम्। एवं तत्तद्वर्णानां तत्तद्वर्णभेदेन मुखनासिकस्थानाद्युच्चारितत्वेन नीलत्वं पीतत्वं श्वेतत्वं हरितत्वम् अतिनीलत्वञ्च कथितम्। एवमेव कण्ठ्याद्युच्चार्यमाणाना वर्णाना दैवताधिकारे आग्नेयत्व नैर्ऋत्यत्वं सौम्यत्वं वायवत्वं रौद्रत्वम् आश्विनत्व शेषाणां वैश्वदेवत्वञ्च पदाना दैवतत्त्वमुक्तम्। स्वराणां ब्राह्मणत्वम्। प्रथमद्वितीयतृतीयचतुर्थवर्गाणामाद्याक्षराणां चतुर्णां (क च ट त प, ख छ ठ थ फ, ग ज ड द ब, घ झ ढ ध भ) क्षत्रियत्वम्। पञ्चाना वर्गानामन्तिमा ये ङ ञ ण न माः तथाच ये अन्तस्थाः य र ल वा एतेषा वैश्यत्वम्। ऊष्माणः स ष श हाः हकारश्च तेषा शूद्रत्वं बोध्यम्।

**वर्णप्रकरणे सन्ध्यधिकारः**—सन्ध्यविकारश्चतुर्विधः। लोपागमविकाराः प्रकृतिभावश्चेति। यथा—लोपे अयक्ष्माः मा अयद्मामा। शततेजाः द्यायुः शततेजाद्यायुः॥ अत्रोभयत्र विसर्गस्य लोपः। आगमे यथा—प्रत्यङ्सोमः प्रत्यङ्क्सोमः। प्राङ्सोमः प्राङ्क्सोमः। अत्र ककारस्यागमो विधीयते। तथैवात्र अस्मान्त्सीते। त्रीन्त्समुद्रान्। अत्र तकारागमो जातः। विकारे—आ इदम्। एदम्। आ इमे एमे। आ इक्षः एक्षः। प्र इपितः प्रेपितः। अत्र गुणो विधीयते। प्रकृतिभावे—यथा-आशुः शिशानः। युञ्जानः प्रथमम्। अदितिः षोडशाक्षरेण। इन्द्राग्नीऽआगतम् इत्यादिषु विसर्गस्य सन्धेश्च प्रकृतिभावः॥

**अध्ययनविधिर्वेदाध्ययने नियमाश्च**—अध्ययनविधौ वेदपाठचिकीर्षुः प्राङ्मुख उदङ्मुखः पूज्यपूजकयोर्मध्ये नाचीतिन्यायेन वा कुशकंबलाद्यासने उपविश्य नान्यमतिः स्वदक्षिणोरुभागे स्वदक्षिणहस्तकूर्परं निधाय स्वयमन्यैः सह वा प्रणवव्याहृतीसावित्रीपूर्वक मधुरस्वरैर्वेदपाठं विदध्यात्। तत्रापि काकस्वरं, शङ्कितं, भीतम्, उद्घृष्टम्, अव्यक्तं, मूर्ध्निगतं (अत्युच्चस्वरेणोच्चारणम्), विस्वरं, विश्लिष्टं, स्थानवर्जितम् (उदात्तानुदात्तस्वरितादीना तत्तत्स्थानानुच्चारणम्), विरसं, (शृण्वतामानन्दजनकादिधर्मरहितम्),

विपमाहतं, व्याकुलं (चित्तविक्षेपादिना पठनम्), तालहीनम् (मंत्राणां याथातथ्येन स्वरसहितोच्चारणरहितम्) इत्यादयश्चतुर्दशाध्ययनदोपाः परिवर्जनीया एव ।

वैदिकाः स्वस्य प्रमादेनोद्भूतान्यज्ञानेन कृतान्यपि सर्वपापानि वेदाध्ययने नित्यं निरताः सन्तः ऋक्सहिता यजुःसहितां सामसहितां वा सरहस्यां ज्ञात्वा पठन्तस्त्रिभिः पाठैर्दहन्ति अपि तु वेदमाश्रित्य पापं कुर्वतां वेदपाठञ्च कुर्वतां पापानि न नश्यन्त्वायान्तीत्यपि तत्रैव प्रतिपादितम् । यथा "न वेदबलमाश्रित्य पापकर्मरतिर्भवेत् । अज्ञानाच्च प्रमादाच्च दह्यन्ते कर्म नेतरत्" । तथा च न कदापि *स्वररहितो वेदपाठः कार्यः । ये स्वरविहीनम् ऋक्-यजुः-सामवेदाध्ययनं कुर्वन्ति ते अनृच ऋगादिभिर्दग्धा मरणानन्तर वियोनि सङ्गच्छन्ते ॥ †तथैव स्वरज्ञानेन सहार्थज्ञानमपि कर्मणा सिद्धये वेदविद्भिरवश्यं बोद्धव्यम् । अज्ञानेनोच्चारिता एकाऽपि स्वरादिरहिता मात्राऽनर्थजनका भूत्वोभयं (यजमानमृत्विजञ्च) पातयति । वेदाध्ययन कुर्वद्भिरेते "चुंलु-नौका-स्फुटो-दण्डी स्वस्तिको-मुष्टिकाकृतिः । एते वै हस्तदोपाः स्युः परशुश्चैव सप्तमः ॥" इति सप्त हस्तदोपाः सुतरां परित्याज्या एव । वेदमन्त्रोच्चारणकाले वर्णान्न हन्यान्नापि वेदमंत्रान्गानसदृशं गायेन्नापि शरीरमितस्ततः कम्पयेत् । वेदारम्भे प्रथमतो (प्रारम्भे) येन मध्यमनीचोच्चप्लुतस्वरेणाध्ययन समारब्धं तेनैव स्वरेण समापयेन्न तु मध्ये मंत्राणां नीचोच्चस्वरं विदध्यात् । दृष्टिरपि स्वकीयहस्ताग्रे संस्थाप्य मंत्रार्थमनुचिन्तयेत् । हस्तस्य चालनेऽपि हस्तस्योपरि वामदक्षिणभागयोर्यथागमनं तथैव मुखेन वर्णोच्चारण स्वरप्रक्षेपश्च सर्व युगपत् कुर्यात् ।

* "हस्तहीन तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजु सामभिर्दग्धो वियोनिमधिगच्छति ॥" † "हस्तेन वेद योऽधीते स्वरवर्णार्थसंयुतम् । ऋग्यजु सामभि पूतो ब्रह्मलोके महीयते ॥"

न कदापि हस्तभ्रष्टः स्वरभ्रष्टो वा वेदपाठफलं प्राप्नोति। स्वकीयकण्ठस्वरस्य माधुर्यत्वसंपादनाय प्रत्यहं वेदपाठकर्त्रा "आम्रपालाशबिल्वानामपामार्गशिरीषयोः। वाग्यतः प्रातरुत्थाय भक्षयेद्दन्तधावनम् ॥ खादिरश्च कदम्बश्च करवीरकरञ्जकौ। एते कण्टकिनः पुण्याः क्षीरिणस्तु यशस्विनः" इति वृक्षाणां दन्तधावनं कर्तव्यं तेनास्य कण्ठस्य सूक्ष्मत्वं माधुर्यञ्च जायते॥ तथैव "त्रिफलां लवणाक्तेन भक्षयेच्छिष्यकः सदा। क्षीणमेधाजनन्येषा स्वरवर्णकरी तथा" ॥ एतेन लवणेन सहिता त्रिफला प्राश्येत्युपायोऽपि मेधाविवर्धनः प्रदर्शितः। अध्ययनवेलायां मध्येऽवसाने दक्षिणवामयोः स्वरयोश्चोर्ध्वक्षेपेऽधःक्षेपे च यत्र यत्राङ्गुलिनिर्देशः प्रदर्शितस्तत्र तत्र शिक्षानुसारेण कुमारीकुचयोरिव न सस्य शृङ्गयोरिव एतादृश ÷ उभयक्षेपः, ६ एतादृशोऽधःक्षेपः, एतादृशः ६ ? दक्षिणवामयोः क्षेपोऽनुस्वारस्यैतादृशो ७ ह्रस्वः, एतादृशो ६ दीर्घः, मकारे मुखाकृतिस्तकारे कुण्डलाकृतिर्नकारे नसाग्रे स्पर्शनम् इत्यादि सर्वं गुरोः सकाशाज्ज्ञातव्यम्। अध्ययनविधौ के च सदेहमधिगच्छन्ति विद्याप्राप्नुवद्भिश्च के के दोषाः परिवर्जनीया इत्यपि तत्रोक्तम्। एतद्विषये भगवान् महर्षिर्याज्ञवल्क्यः स्वयं शिक्षायां कथयति वा यश्च वेदाध्ययनकाले उपांशु (अस्पष्टमात्रास्वरवर्णम्) अधीते यश्चाध्ययनकाले वित्रसन् (अनवधानपूर्वकम्) भीत इव पठति सोऽपि सर्वदा पाठकाले सदेहं प्राप्नोत्येव। यश्च जडः, अलसः, अतिरोगग्रस्तः, विस्मृतमनाश्च सोऽपि विद्यां नाधिगच्छति। अपि तु यश्च अहेर्गणाद् इव, सम्मानान्नरकाद् इव, स्त्रीभ्यो राक्षसीभ्य इव भयं हृदि सङ्गच्छते स एव विद्यामवाप्नोति। अथवा गुरोः शुश्रूषया पुष्कलधनप्रदानेन प्रतिविद्यया वा विद्या प्राप्यते नान्य उपायो विद्याप्राप्तये।

**वेदमंत्रोच्चारे कया रीत्या नादः कार्यः**—तत्तत्पदानां नादविधावपि शाखाया वानरा इव "इहेहैषाम्" इत्यादौ, भाद्रपदे मेघा इव "शुक्रन्दुदुहे" इत्यादौ, कामलुब्धः कुक्कुट इव "कुकुटोसि" इत्यादौ, पुत्रवती नारी स्नेहाद्यथा मधुरं स्वपुत्रं चुम्बते तद्वत्

"युञ्जानः" इत्यादौ, हयं दृष्ट्वा वडवा स्वां योनि शनैः शनैर्विकुरुते तद्वत् "सन्दुन्दुभे" इत्यादौ, दुर्दुरस्य-मण्डूकस्योदरं यथा प्रफुल्लते तद्वत् "अपाम्फेनेन" इत्यादौ भाराक्रान्तो यथा श्वास गृह्णाति तद्वत् "अब्भ्यः सम्भृतः" इत्यादौ, कामातुरा नारी यथा स्वं पति जारं वा "सि सि" इति शब्दविशेषेण यथाह्वयति तद्वत् "सि९ंहासि" इत्यादौ, आकाशे स्वीयौ पक्षौ विस्तार्यानन्तरं गृध्रस्तौ यथा संकोचयति तद्वत् "वाद्ध्रीनस्ते" इत्यादौ, यथानादं वर्णाः प्रयोक्तव्याः । नात्र वेदोच्चारणेषु केनापि मनःपूतमुच्चारणं कर्तुं शक्यते । परंपरयाऽऽप्तविद्या गुरूणां सन्निधौ स्थित्वा ये वेदविद्या क्रमपुरःसर नाधीतास्तेऽन्यशास्त्रेषु पारीणा अपि न याज्ञवल्क्यमहर्षिभिर्विरचितशिक्षानिर्दिष्टवर्णोच्चारणाद्यनुकूलोच्चारणं तथाच कात्यायनमहर्षिप्रणीत शुक्लयजुःप्रातिशाख्याध्ययनमन्तरा द्वित्वादिकञ्च सुस्पष्टतरं कर्तुं प्रभवन्ति ।

**ऋग्यजुःसाममंत्राणां सागरत्वम् ।**—शिक्षाया महर्षिणा याज्ञवल्क्येन "संहितासारबहुलः पदसङ्घासमाकुलः । क्रमसन्धिसमाकीर्णो दुस्तरो मंत्रसागरः ॥ ऋक्संहिता त्रिरभ्यस्य यजुषां वा समाहितः । साम्ना वा सरहस्याञ्च सर्वपापैः प्रमुच्यते ॥ संहिता नयते सूर्यं पदञ्च शशिनः पदम् । क्रमश्च नयते सूक्ष्मं यत्तत्पदमनामयम् ॥ कालिन्दी संहिता ज्ञेया पदमुक्ता सरस्वती । क्रमेणाऽऽवर्तिता गंगा शम्भोर्वाणी तु नान्यथा ॥ यथा महाह्रदं प्राप्य क्षिप्तो लोष्टो विनश्यति । एवं दुश्चरितं सर्वं वेदे त्रिवृति मज्जति" ॥ एतैः पञ्चभिः श्लोकैर्महर्षिणा ऋग्यजुःसाममंत्राणा दुस्तर सागरत्वमुक्तम् । तथैव ऋग्यजुःसाममंत्राणा तिसृभिरावृत्तिभिर्महापापादीना नाशसामर्थ्यमपि द्योतितम् । एवञ्च संहितापाठः कर्तारमादित्यलोकं नयति, पदपाठश्चन्द्रस्य लोकं प्रापयति । क्रमपाठश्चानामयमविक्रिय ब्रह्मणश्चिदात्मकस्य स्वरूपं नयति । वेदमंत्राणां गङ्गादिस्वरूपत्वमपि तत्रैव - यथा संहिताया कालिन्दी-यमुनास्वरूपं पदाना सरस्वतीस्वरूपं क्रमस्य गंगायाः स्वरूपं च ज्ञेयम् । यथा यमुनाद्या नद्यः स्वजले स्नानकर्तारं पवित्रीकुर्वन्ति तथैव वेदानां संहिता-

पदक्रमपाठकर्तारोऽपि तानधीत्य यमुनाप्रभृतिनदीषु कृतस्नानसदृशं पावित्र्य लभन्त इति । एतदन्यच्चावश्यकं भगवता योगिवर्येण महर्षिणा याज्ञवल्क्येन कात्यायनेन च वैदिकाना हितकाम्यया सर्वं स्वे स्वे ग्रन्थे व्याख्यातम् । तत उद्धृत्य दिग्दर्शनरूपेण किञ्चिन्मयाऽत्र प्रदत्तम् ॥

किन्न विदितं भवतामस्मिन्भारतवर्षे बहूना संस्कृतमुद्रणालयाना मध्ये पञ्च दशैव परिगणिता एव मूर्ध्नि मुद्रणालया वर्तन्त इति । तेषामपि मोहमयी(मुंबई)स्थः "**निर्णयसागरनामा मुद्रणालयः**" सर्वेषां मूर्ध्नि तिष्ठतीति च । अस्मिन्मुद्रणालये प्रायः संस्कृतभाषाया महाराष्ट्रीयभाषाया हिन्दीभाषायाश्च विविधा ग्रन्थाः प्रकाश्यन्ते । वेदवैदिककाव्यसाहित्यन्यायधर्मशास्त्रप्रभृतिसर्वेषु विषयेषु प्रकाश्यमाना ग्रन्थाः शुद्धाः सुस्पष्टाक्षरा विश्वसनीयाश्चेति प्रसिद्धमेव । प्रायो द्वित्रिषु वर्षेष्वपरिसमाप्तेषु सर्वविषयाणां ग्रन्थाना प्रकाशनं परंपरया भवत्येवानिशम् । पूर्वमियं शुक्लयजुर्वेदसंहिता तच्छास्त्रविद्भिरेव संशोधिताऽऽसीत् । अधुना क्रियमाणे मुद्रापणे तस्याधिकारिवर्गै-र्मह्य संशोधनायोक्तम् । मया त्वस्याः संशोधने सर्वेषा वैदिकब्राह्मणाना पूर्वतोऽप्यधिकतर समुपयोगः स्यादिति विचारितम् । ततोऽहं याज्ञवल्क्यमहर्षिभिर्विरचितयाज्ञवल्क्यशिक्षानुसारेण कात्यायनमहर्षिभिश्च विरचितकात्यायनशुक्लप्रातिशाख्यसूत्रानुसारेण च संशोधनाय प्रवृत्तोऽस्मि तथापि मन्येऽहं यद्गुरुतरेऽस्मिन्मंत्रसमुदायरूपमहासागरे मदीयावगाहनं मम "बालचेष्टैव" एतत्तच्छास्त्रज्ञातार एवाववोधि-ष्यन्तीति । कात्यायनमहर्षिप्रणीतं श्रीशुक्लयजुःप्रातिशाख्यसूत्रम् अष्टाध्यायैर्युक्तं वर्तते तदप्यधुना दुर्लभतरम् । मया च तस्योपरि "आनन्द-पुरवास्तव्यैर्वज्रसुतोवटनामभिः सुप्रसिद्धैः पण्डितप्रवरैर्विरचितं कालिकाताया मुद्रापितं भाष्य समाकलय्य मंत्रेषु यकारवकारयोर्भेदो वकारेऽपि द्वित्वैकत्वयोर्भेदः ७ ६ ८ ? ÷ व ह्य-स्व्न-ष्णण-द्वित्वादिकं तथैव व्याकरणरीत्या यत्र स्थले तथाविधं रूपं न जायते तत्र तथाविधस्य रूपस्य वैदिकव्याकरणरीत्या प्रदर्शनार्थं "अमृतवर्षिणी टिप्पणी" कृत्वा यथामति यथाशक्ति यथाज्ञानं मंत्राणां संशोधनं-

पुरःसरमियं संहिता तत्तच्छास्त्रेषु कृतपरिश्रमाणां विद्यासंपन्नानां भवतां पुरः समुपस्थाप्यते । शुक्लयजुर्वेदमंत्राणां द्वित्वादिकस्य संशोधनं कियद्दुर्बोधमनेकविधञ्च वरीवर्तते तत्तु त एव कल्प्स्यन्ते नात्र सामान्यतया सर्वेषामवसरः । प्रथमाध्यायमारभ्य त्र्यध्यायपर्यन्तं मदीयप्रकृतेरस्वास्थ्येन तत्तथैवान्यदपि दृष्टिदोषवशान्मानुषदोषत्वाद्वा कचित् संशोधने स्खलनं भवेत् तदेतत् "नीरक्षीरविवेकन्यायेन" द्रक्ष्यन्ति भवन्तो बहुश्रुता इति प्रार्थ्यते ।

मयात्र न विस्मर्तु योग्यं मदीयपरमसुहृद्भिर्वेदवेदाङ्गविद्भी "**राजपिप्पलाप्रदेशान्तर्वर्तिनर्मदातटस्थभालोदग्रामनिवासिभिरपि सम्प्रति मुम्बापुरीवास्तव्यैः पंड्योपाह्वैः शास्त्रिवर्यैस्तुलजाशंकरधीरजरामशास्त्रिभिः**" प्रारंभत आसमाप्ति प्रातिशाख्यशिक्षादिद्वारा संशोधने टिप्पण्याञ्च समयाभावेऽपि स्वस्य यत्साहाय्यं स्वकीयं मत्वा परिदत्तम् ।

इति शम् ।

शके १८७२ चैत्रशुक्लप्रतिपदि रविवासरे
ता. १९-३-५०

इति प्रार्थयते मोहमयीकृतनिवासो विदुषामनुचरः
**आचार्योपटङ्कस्त्रिकमजीतनुजनूरमृतलालशास्त्री**
(जामनगर-वास्तव्यः)

# ॥ अथ श्रीवाजसनेयसंहितामन्त्राणामकाराद्यनुक्रमणिका ॥

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| अक्क्रन्नकर्म्म | ३ | ४७ | अग्नये गृहपतये | १० | २३ | अग्निन्तम्मन्ये | १५ | ४१ |
| अक्क्रन्दद्ग्निः { | १२, १२, १२ | ६, ७१, ३३ | अग्नये त्वामह्यम् | ७ | ४७ | अग्निन्दूतम् | २२ | १७ |
| अक्षन्नमीमदन्त | ३ | ५१ | अग्नयेऽनीकवते प्रथमजान् | २४ | १६ | अग्नि पुरासीत् | २३ | १७ |
| अक्षराजायकितवम् | ३० | १८ | अग्नयेऽनीकवते रोहिताञ्जिः | २९ | ५९ | अग्नि पृथुर्धर्म्मणः | १० | २९ |
| अग्नऽआयू ᳪषि { | १९, ३५ | ३८, ११ | अग्नये पीवानम् | ३० | २१ | अग्नि प्रियेषु | १२ | ११७ |
| अग्नऽइन्द्र वरुण | ३३ | ४८ | अग्नये स्वाहा सोमाय | २२ | ६ | अग्निमुदु होतारम् { | ७१, २८, २८ | ५०, २३, ४६ |
| अग्नये कव्यवाहनाय | २ | २९ | अग्नये स्वाहा सोमाय स्वाहेन्द्राय | २२ | २७ | अग्निरुर्वज्जिम | १८ | ५१ |
| अग्नये कुटरून् | २४ | २३ | अग्ना३ऽइ पत्नीवन् | ८ | १० | अग्निरस्मि जन्मना | १८ | ६६ |
| अग्नये गायत्राय | २९ | ६० | अग्नावग्निश्चरति | ५ | ४ | अग्निरेकाक्षरेण | ९ | ३१ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| अग्निर्ऋषिः पवमानः | २६ | ९ | अग्निस्तिग्मेन | १७ | १६ | अग्नेत्त्वम्पुरीष्य॒ः | १२ | ५९ |
| अग्निर्ज्योतिर्ज्योतिः | ३ | ९ | अग्निᳬस्तोमेन | २२ | १५ | अग्नेत्त्वᳬसुजागृहि | ४ | १४ |
| अग्निर्ज्योतिषा | १३ | ४० | अग्निᳬहृदयेन | ३९ | ८ | अग्नेदक्षधायः | २ | २० |
| अग्निर्द्देवता | १४ | २० | अग्निᳬहोतारम् | १५ | ४७ | अग्नेदिवोऽअर्णम् | १२ | ४९ |
| अग्निर्म्मूर्द्धादिवः | ३<br>१३<br>१५ | १२<br>१६<br>२० | अग्नीषोमयोरुज्जितिम् | २ | १५ | अग्नेनयसुपथा | ५<br>७<br>४० | ३६<br>४३<br>१६ |
| अग्निर्वृत्त्राणि | ३३ | ९ | अग्नेऽअङ्गिरः | १२ | ८ | अग्नेःपक्षुतिर्व्वायोः | २५ | ४ |
| अग्निश्चपृथिवी | २६ | १ | अग्नेऽअच्छावदेहनः | ९ | २८ | अग्नेपत्नीरिहावह | २६ | २० |
| अग्निश्चमऽआपश्च | १८ | १४ | अग्नेगृहपते | २ | २७ | अग्नेपवस्व | ८ | ३८ |
| अग्निश्चमऽइन्द्रश्च | १८ | १६ | अग्नेजातान् | १५ | १ | अग्नेपावकरोचिषा | १७ | ८ |
| अग्निश्चमेघर्म्मश्च | १८ | २२ | अग्नेतमद्याश्वम् | १५<br>१७ | ४६<br>७७ | अग्नेप्रेहिप्रथमः | १७ | ६९ |
| अग्निष्वात्तानृतुमतः | १९ | ६१ | अग्नेतव | १२ | १०६ | अग्नेऽभ्यावर्त्तिन् | १२ | ७ |
| अग्निष्वात्ताः पितरः | १९ | ५९ | अग्नेत्त्वन्नः | ३<br>११<br>२५ | २५<br>६८<br>६७ | अग्नेब्रह्मगृभ्णीष्व | १ | १८ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| अदितिर्द्यौरदितिः | २५ | २२ | अद्भ्यः स्वाहा | २२ | २५ | अनु ते शुष्मम् | ३३ | ६७ |
| अदितिष्ट्वा देवी | ११ | ६१ | अद्याद्देवाऽउदिता | ३३ | ४२ | अनु त्त माता मघवन् | ३३ | ७९ |
| अदित्यास्त्वक् | ४ | ३० | अधा यथा न | १९ | ६९ | अनु त्वा माता मन्यताम् | ४ | २० |
| अदित्यास्त्वा पृष्ठे | १४ | ५ | अधा ह्यग्ने क्रतोः | १५ | ४५ | अनु त्वा रथोऽअनु | २९ | १९ |
| अदित्यास्त्वा मूर्द्धन् | ४ | २२ | अधि नऽइन्द्रैषाम् | ३३ | ४७ | अनु नोद्यानुमतिः | ३४ | ९ |
| अदित्यै रास्नासि विष्णोः | १ | ३० | अधिपत्न्यसि | १५ | १४ | अनु वीरैरनु पुष्यास्म | २६ | १९ |
| अदित्यै रास्नासी | ३८ | ३ | अद्ध्यर्वोचदधिवक्ता | १६ | ५ | अनेजदेकं मनसः | ४० | ४ |
| अदित्यै रास्नास्यदितिष्टे | ११ | ५९ | अद्ध्वरुर्वोऽअद्रिभिः | २० | ३१ | अन्तरग्ने रुचा त्वम् | १२ | १६ |
| अदित्यै व्युन्दनम् | २ | २ | अनड्वान्वयः | १४ | १० | अन्तरा मित्रावरुणा | २९ | ६ |
| अद्दश्रमस्य केतवः | ८ | ४० | अनड्वाहमन्वारभामहे | ३५ | १३ | अन्तश्चरति रोचना | ३ | ७ |
| अद्भ्यः क्षीरं व्यपिबत् | १९ | ७३ | अनाधृष्टा पुरस्तात् | २७ | १२ | अन्तस्ते द्यावापृथिवी | ७ | ५ |
| अद्भ्यः सम्भृतः | ३१ | १७ | अनाधृष्ट्योजातवेदाः | २७ | ७ | अन्धन्तमः प्रविशन्ति | ४० ४० | ९ १२ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| अन्धस्स्थान्धः | ३ | २० | अपाधमदभिशस्तीः | ३३ | ९५ | अपोदेवामधुमतीः | १० | १ |
| अन्नपतेन्नस्य | ११ | ८३ | अपान्त्वेमन् | १३ | ५३ | अपोदेवीरुपसृज | ११ | ३८ |
| अन्नात्परिस्रुतोरसम् | १९ | ७५ | अपाम्पृष्ठमसि | ११<br>१३ | २०<br>२ | अप्स्वस्वतीमश्विना | ३४ | २९ |
| अन्यदेवाहुर्विद्यायाः | ४० | १३ | अपाम्पेरुः | ६ | १० | अप्स्वग्नेसधिष्टवसौ | १२ | ३६ |
| अन्यदेवाहुःसम्भवात् | ४० | १० | अपाम्फेनेननमुचेः | १९ | ७१ | अप्स्वन्तरमृतम् | ९ | ६ |
| अन्यवापोर्द्धमासानाम् | २४ | ३७ | अपामिदन्न्ययनम् | १७ | ७ | अबोध्यग्निःसमिधा | १५ | २४ |
| अन्यावोऽअन्याम् | १२ | ८८ | अपाररुम्पृथिव्यै | १ | २६ | अभिगोत्राणिसहसा | १७ | ३९ |
| अन्वग्निरुषसा | ११ | १७ | अपाᳪंरसम् | ९ | ३ | अभित्यन्देवᳪंसवितारम् | ४ | २५ |
| अन्विदनुमतेत्त्वम् | ३४ | ८ | अपितेपुत्रिपु | २३ | ५० | अभित्वाशूरनोनुमो | २७ | ३५ |
| अपश्श्यङ्गोपाम् | ३७ | १७ | अपेतवीतविचसर्पता | १२ | ४५ | अभिधाऽअसिभुवनमसि | २२ | ३ |
| अपाघमपकिल्बिषम् | ३५ | ११ | अपेतोयन्तु | ३५ | १ | अभिप्रवन्तुसमनेव | १७ | ९६ |
| अपाङ्गम्भन् | १३ | ३० | अपोऽअद्य | २० | २२ | अभिभूररि | १० | २८ |
| अपातामश्विनाघर्मम् | ३८ | १३ | | | | | | |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| अभियुज्ज्वक्षूर्णीहिनः | २६ | २१ | अयन्दक्षिणाविश्वकर्म्मात | | | अयम्पुरश्चाद्विश्वव्यचास्तस्युरथ | १५ | १७ |
| अमीमर्म्मर्हिमादिवस् | ३८ | १७ | स्वरथस्युनक्षु | १५ | १६ | अयम्पुरोभुवः | १३ | ५४ |
| अभीषुणःसखीनाम् { | ३७, ३८ | ६१, ६ | अयन्नोऽअग्निः { | ५, ७ | ३७, ४४ | अयम्पुरोहरिकेशः | १५ | १५ |
| अभ्यर्षतसुष्टुतिम् | १७ | ९८ | अयमग्निःपुरीष्यः | ३ | ४० | अयंवामित्रावरुणा | ७ | ९ |
| अभ्यादधामिसमिधम् | २० | २४ | अयमग्निर्गृहपतिः | ३ | ३९ | अयंवेनः | ७ | १६ |
| अभ्यावर्त्तस्वपृथिवि | १२ | १०३ | अयमग्निर्वीरतमः | १५ | ५२ | अयःसहस्रमृषिभिः | ३३ | ८३ |
| अभ्रिरसिनार्य्यसि | ११ | १० | अयमग्निःसहस्रिणः | १५ | २१ | अयःसोऽअग्निः | १२ | ४७ |
| अमीपाश्चित्तम् | १७ | ४४ | अयमिहप्रथमः { | ३, १७, ३३ | १५, २, ६ | अर्थेतस्थ | १० | ३ |
| अमुत्रभूयादध | २७ | ९ | अयमुत्तरात् | १५ | १८ | अर्द्धऽऋचैरुक्थानाम् | १९ | २५ |
| अमेवनःसुहवाः | २६ | २४ | अयमुपर्य्यर्वाग्वसुः | १५ | १९ | अर्द्धमासाःपरूंषि | २३ | ४१ |
| अयन्तेयोनिर्ऋत्वियः { | ३, १२, १५ | ३४, ६२, ५६ | अयम्पुरश्चाद्विश्वव्यचास्तस्य | | | अश्मभ्योहस्तिपस् | ३० | ११ |
| अयन्दक्षिणाविश्वकर्म्मा | १३ | ५५ | चक्षुः | १३ | ५६ | अरुर्मणमृहस्पतिम् | ९ | २७ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| आक्ष्याजानु | १९ | ६२ | आतूर्नऽइन्द्र | ३३ | ६५ | आनुऽइन्द्रोहरिभिः | २० | ४९ |
| आच्छच्छन्दः | १५ | ५ | आर्तेवृत्तसः | १२ | ११५ | आनऽएतुमनः | ३ | ५४ |
| आजंघ्नन्ति | २९ | ५० | आत्मनैमे | ७ | २८ | आनासत्यात्रिभिः | ३४ | ४७ |
| आजिंघ्रकलशम् | ८ | ४२ | आत्मन्नुपस्थे | १९ | ९२ | आनोनियुद्भिः | २७ | २८ |
| आजुह्वानऽईड्यः | २९ | २८ | आत्मानन्ते | २९ | १७ | आनोभद्राः | २५ | १४ |
| आजुह्वानासरस्वती | २० | ५८ | आत्वाजिघर्म्मि | ११ | २३ | आनोमित्रावरुणा | २१ | ८ |
| आजुह्वानःसुप्रतीकः | १७ | ७३ | आत्वाहार्षम् | १२ | ११ | आनोयज्ञन्दिविस्पृशम् | ३३ | ८५ |
| आतम्भज | १२ | २७ | आदित्यङ्गर्भम् | १३ | ४१ | आनोयज्ञम्भारती | २९ | ३३ |
| आतत्तऽइन्द्रायवः | ३३ | २८ | आदित्यैर्नः | २९ | ८ | आन्त्राणिस्थालीः | १९ | ८६ |
| आतिथ्यरूपम् | १९ | १४ | आधत्तपितरः | २ | ३३ | आपतयेत्वा | ५ | ५ |
| आतिष्ठन्तम्परि | ३३ | २२ | आनुऽइडाभिः | ३३ | ३४ | आपयेस्वाहा | ९ | २० |
| आतिष्ठवृत्रहन् | ८ | ३३ | आनुऽइन्द्रोदूरात् | २० | ४८ | आपवस्व | ८ | ६३ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| आपश्चित् | ३३ | १८ | आयङ्गौः पृश्श्निः | ३ | ६ | आरोदसीऽअपृणत् | ३३ | ७५ |
| आपोऽअस्म्मान्मातरः | ४ | २ | आयदिषेनृपतिम् | ३३ | ११ | आवाचोमद्ध्यमरुहत् | १५ | ५१ |
| आपोदेवीः | १२ | ३५ | आयन्तुनः पितरः सोम्यासः | १९ | ५८ | आवायोभूषशुचिपाः | ७ | ७ |
| आपोहुयत् | २७ | २५ | आयातमुप | ३३ | ८८ | आविर्म्मर्य्याः | १० | ९ |
| आपोहिष्ठामयोभुवः | ११<br>३६ | ५०<br>१४ | आयात्त्विन्द्रः | २० | ४७ | आविश्वतः | ११ | २४ |
| आप्प्यायस्वमदिन्तम | १२ | ११४ | आयासायस्वाहा | ३९ | ११ | आवोदेवासः | ४ | ५ |
| आप्प्यायस्वसमेतुते | १२ | ११२ | आयुर्म्मेपाहि | १४ | १७ | आशुः शिशानः | १७ | ३३ |
| आब्रह्मन्ब्राह्मणः | २२ | २२ | आयुर्यज्ञेन | ९<br>१८<br>२२ | २१<br>२९<br>३३ | आशुस्त्रिवृद्भान्तः | १४ | २३ |
| आमन्द्रैरिन्द्र | २० | ५३ | आयुष्मानग्ने | ३५ | १७ | आश्श्वात्रयेति | १९ | २४ |
| आमावाजस्यप्रसवः | ९ | १९ | आयुष्यंवर्च्चस्यम् | ३४ | ५० | आसन्दीरूपम् | १९ | १६ |
| आमूरजप्रत्यावर्त्तय | २९ | ५७ | आयोध्वसदने | १५ | ६३ | आसीनासोऽअरुणीनाम् | १९ | ६३ |
| | | | आरात्रिपार्थिवम् | ३४ | ३२ | आसुतेसिञ्चत | ३३ | २१ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| आसुष्वयन्ती | २९ | ३१ | इदम्मेब्रह्म | ३२ | १६ | इन्द्रवायूऽइमे | ७, ३३ | ८, ५६ |
| आहम्पितॄन् | १९ | ५६ | इदंविष्णुर्विचक्रमे | ५ | १५ | इन्द्रवायूबृहस्पतिम् | ३३ | ४५ |
| इच्छन्तित्त्वा | ३४ | १८ | इदᳬहविः | १९ | ४८ | इन्द्रवायूसुसन्दृशा | ३३ | ८६ |
| इडऽएहि | ३, ३८ | २७, २ | इन्दुर्दक्षः | १८ | ५३ | इन्द्रश्चमरुतश्च | ८ | ५५ |
| इडाभिरग्निरीड्यः | २१ | १४ | इन्द्रऽआसान्नेता | १७ | ४० | इन्द्रश्चसम्राट् | ८ | ३७ |
| इडाभिर्भक्षानाप्नोति | १९ | २९ | इन्द्रगोमन्निहायाहि | २६ | ४ | इन्द्रः सुत्रामास्ववान् | २० | ५१ |
| इडामग्ने | १२ | ५१ | इन्द्रघोषस्त्वा | ५ | ११ | इन्द्रः सुत्रामाहृदयेन | १९ | ८५ |
| इडायास्त्वापदे | ३४ | १५ | इन्द्रन्दुरः कवष्यः | २० | ४० | इन्द्रस्यक्रोडः | २५ | ८ |
| इडेरन्तेहव्ये | ८ | ४३ | इन्द्रन्दैवीर्विशः | १७ | ८६ | इन्द्रस्यरूपम् | १९ | ९१ |
| इदमापः | ६ | १७ | इन्द्रंविश्वा— | १२, १५, १७ | ५६, ६१, ४१ | इन्द्रस्यवज्रोमरुताम् | २९ | ५४ |
| इदमुत्तरात् | १३ | ५७ | इन्द्रमरुत्वऽइह | ७ | ३५ | इन्द्रस्यवज्रोसि | ९, १० | ५, २१ |
| इदम्पितृभ्यः | १९ | ६८ | इन्द्रमिद्धरी | ८ | ३५ | इन्द्रस्यवृष्णः | १७ | ४१ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| इन्द्रस्यस्यूरसीन्द्रस्य | ५ | ३० | इन्द्रायेन्दुम् | २० | ५७ | इमम्मेवरुण | २१ | १ |
| इन्द्रस्यौजस्स्थ | ३७ | ६ | इन्द्रेमम्प्रतराम् | १७ | ५१ | इमꣳसाहस्रम् | १३ | ४९ |
| इन्द्राग्नीऽअपादियम् | ३३ | ९३ | इन्द्रेहिमत्स्यन्धसः | ३३ | २५ | इमꣳस्तनमूर्ज्जस्वन्तम् | १७ | ८७ |
| इन्द्राग्नीऽअव्यथमानाम् | १४ | ११ | इन्द्रोविश्वस्य | ३६ | ८ | इमाऽउत्त्वापुरूवसो | ३३ | ८१ |
| इन्द्राग्नीऽआगतम् | ७ | ३१ | इन्द्रोवृत्रम् | ३३ | २६ | इमान्तेधियम् | ३३ | २९ |
| इन्द्राग्नीमित्रावरुणा | ३३ | ४९ | इन्धानास्त्वा | ३ | १८ | इमागिरऽआदित्येभ्यः | ३४ | ५४ |
| इन्द्राग्न्योःपक्षतिः | २५ | ५ | इमञ्जीवेभ्यः | ३५ | १५ | इमातेवाजिन् | २९ | १६ |
| इन्द्रायत्त्वा | ६, ३८ | ३७, ८ | इमन्देवाः | ०, १० | ४०, १८ | इमानुकम्भुवना | २५ | ४६ |
| इन्द्रायाहिचित्रभानो | २० | ८७ | इमन्नोदेव | ११ | ८ | इमामगृभ्णन्नृशनाम् | २२ | २ |
| इन्द्रायाहितूतुजानः | २० | ८९ | इमम्मूर्णायुम् | १३ | ५० | इमामेऽअग्नऽइष्टकाः | १७ | २ |
| इन्द्रायाहिधियेषितः | २० | ८८ | इमम्माहिꣳसीरेकशफम् | १३ | ४८ | इमारुद्रायतवसे | १६ | ४८ |
| इन्द्रायाहिवृत्रहन् | २६ | ५ | इमम्माहिꣳसीर्द्विपादम् | १३ | ४७ | इमौतेपक्षावजरौ | १८ | ५२ |

| | अ० | म० | | अ० | म० | | अ० | म० |
|---|---|---|---|---|---|---|---|---|
| इयन्तेसुज्ज्ञियां | ४ | १३ | इपेरायेरमस्व | १३ | ३५ | ईशानायपरस्वतः | २४ | २८ |
| इयंवेदिःपरं– | २३ | ६२ | इष्कृत्तारमद्ध्वरस्यं | १२ | ११० | ईशाव्वास्यम् | ४० | १ |
| इयच्चग्ग्रेऽआसीत् | ३७ | ५ | इष्कृतिर्न्नामवः | १२ | ८३ | उक्ताऽसंश्चुराऽएताः { | ३४ ३४ | १५ १७ |
| इयंदुस्यायु– | १० | २५ | इष्टोऽअग्निराहुतः | १८ | ५७ | उक्ताऽसंश्चुराऽएताःशुनासी- | २४ | १९ |
| इयमुपरि | १३ | ५८ | इष्टोयज्ञः | १८ | ५६ | उक्थेभिर्वृत्रहन्तमा | ३३ | ७६ |
| इरुज्ज्यन्नग्ने | १२ | १०१ | इहरतिरिह | ८ | ५१ | उक्क्षासमुद्रः | १७ | ६० |
| इरावतीधेनुमती | ५ | १६ | इहैवाग्नेऽअधि | २७ | ४ | उखाङ्कृणोतु | ११ | ५७ |
| इपुमूर्ज्जमहमितः | १२ | १०५ | ईडितोदेवैर्हरिवान् | २० | ३८ | उग्र्ग्रँल्लोहितेन | ३९ | ९ |
| इपश्चोर्ज्जश्च | १४ | १६ | ईदृङ्चान्यादृङ्च | २९ | ३ | उग्ग्रश्चभीमश्च | ३९ | ७ |
| इपिरोविश्श्वव्यचा | १८ | ४१ | ईदृक्क्षासऽएतादृक्क्षासः | १७ | ८४ | उग्ग्राविघनिना | ३३ | ६१ |
| इपेत्त्वोर्ज्जेत्त्वा | १ | १ | ईदृङ्चान्यादृङ्च | १७ | ८१ | उच्चातेजातम् | २६ | १६ |
| इपेपिन्वस्वोर्ज्जे | ३८ | १४ | ईम्मान्तासः | ३४ | २१ | उच्छुष्म्माऽओषधीनाम् | १२ | ८२ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| ऊर्ज्जोनपाज्जातवेदः | १२ | १०८ | ऋजवेत्त्वासाधवेत्त्वा | ३७ | १० | ऋताषाडृतधामा | १८ | ३८ |
| ऊर्ज्जोनपातम् | २७ | ४४ | ऋजीतेपरि | २९ | ४९ | ऋतुथेन्द्रः | २० | ६५ |
| ऊर्द्ध्वऽऊषुणः | ११ | ४२ | ऋतञ्चमेमृतञ्चमे | १८ | ६ | ऋधगित्था | ३३ | ८७ |
| ऊर्द्ध्वमेनम् | २३ | २७ | ऋतꣳसत्यम् | ११ | ४७ | एकयाच | २७ | ३३ |
| ऊर्द्ध्वाऽअस्यसमिधः | २७ | ११ | ऋतजिच्च | १७ | ८३ | एकयास्तुवत | १४ | २८ |
| ऊर्द्ध्वामारोह | १० | ११ | ऋतयेस्तेनहृदयम् | ३० | १३ | एकस्त्वष्टुः | २५ | ४२ |
| ऊर्द्ध्वामेनाम् | २३ | २६ | ऋतवस्तेऽ | २३ | ४० | एकस्मैस्वाहा | २२ | ३४ |
| ऊर्द्ध्वोभवप्रति | १३ | १३ | ऋतवस्ते | २६ | १४ | एकाचमे | १८ | २४ |
| ऋक्सामयोःशिल्पे | ४ | ९ | ऋतवस्थऽऋतावृधः | १७ | ३ | एजतुदशमास्यः | ८ | २८ |
| ऋचंवाचम् | ३६ | १ | ऋतञ्चसत्यञ्च | १७ | ८२ | एण्यह्नोमण्डूकः | २४ | ३६ |
| ऋचेत्वारुचेत्वा | १३ | ३९ | ऋतवानम्महिषम् | १२ | १११ | एतञ्जानाथ | १८ | ६० |
| ऋचोनामास्मि | १८ | ६७ | ऋतावानंवैश्वानरम् | २६ | ६ | एतत्तेरुद्रावसम् | ३ | ६१ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| एतन्तैदेवसवितः | २ | १२ | एवश्छन्दः | १५ | ४ | एह्यूषुब्र्वाणि | २६ | १३ |
| एतꣳसधस्त्थ | १८ | ५९ | एवेदिन्द्रम् | २० | ५४ | ऐन्द्रःप्प्राणः | ६ | २० |
| एताऽअर्षन्ति | १७ | ९३ | एषच्छागः पुरोऽ | २५ | २६ | ओजश्चमे | १८ | ३ |
| एताऽउवःसुभगाः | २९ | ३ | एषतेगायत्रः | ४ | २४ | ओमासश्चर्षणीधृतः | ७ | ३३ |
| एताऽऐन्द्राग्नाः | २४ | ८ | एषतेनिर्ऋते | ९ | ३५ | ओषधयःप्प्रतिगृभ्णीत | ११ | ४८ |
| एतावद्रूपम् | १९ | ३१ | एषतेरुद्रभागः | ३ | ५७ | ओषधयःसम् | १२ | ९६ |
| एतावानस्य | ३१ | ३ | एषवस्तोमः | ३४ | ४८ | ओषधीःप्प्रति | १२ | ७७ |
| एदमगन्म | ४ | १ | एषस्यवाजी | ९ | १४ | ओषधीरिति | १२ | ७८ |
| एधोस्येधिषीमहि | २०<br>३८ | २३<br>२५ | एषातेऽअग्ने | २ | १४ | ककुभꣳरूपम् | ८ | ४९ |
| एनाविश्श्वान्न्यर्यऽआ | २६ | १८ | एषातेशुक्रतनूः | ४ | १७ | कत्त्यस्यविष्ठाः | २३ | ५७ |
| एनावोऽअग्निम् | १५ | ३२ | एषावःसासत्त्या | ९ | १२ | कदाचनप्प्रयुच्छसि | ८ | ३ |
| एभिर्नोऽअर्कैः | १५ | ४६ | एषोहदेवः | ३२ | ४ | कदाचनस्तरीरसि | ३<br>८ | ३४<br>२ |

| | अ० | मं० |
|---|---|---|
| कुत्स्याऽइव | १७ | ९७ |
| कयात्त्वन्नऽऊत्या | ३६ | ७ |
| कयानश्चित्रः | २७<br>३६ | ३९<br>४ |
| कल्पन्तान्ते | ३५ | ९ |
| कवष्ष्योनव्यर्चस्वतीः | २० | ६० |
| कस्त्वाच्छ्यति | २३ | ३९ |
| कस्त्वायुनक्ति | १ | ६ |
| कस्त्वाविमुञ्चति | २ | २३ |
| कस्त्वासत्यः | २७<br>३६ | ६०<br>५ |
| काऽईम्मरे | २३ | ५५ |
| काण्डात्काण्डात् | १३ | २० |
| कामङ्कामदुघे | १२ | ७२ |

| | अ० | मं० |
|---|---|---|
| कायस्वाहा | २२ | २० |
| कार्पिरसि | ६ | २८ |
| काव्ययोराजानेषु | ३३ | ७२ |
| कास्विदासीत् | २७<br>२६ | ११<br>५३ |
| किंस्वित्सूर्य्यसमम् | २३ | ४७ |
| किंस्विदासीत् | १७ | १८ |
| किंस्विद्वपनङ्कः | १७ | २० |
| कुक्कुटोसि | १ | १६ |
| कुतस्त्वमिन्द्र | ३३ | २७ |
| कुम्भोवनिष्टुः | १९ | ८७ |
| कुर्वन्नेवेहकर्म्माणि | ४० | २ |

| | अ० | मं० |
|---|---|---|
| कुलायिनीघृतवती | १४ | २ |
| कुविदङ्गयवम् | १०<br>१९<br>२३ | ३७<br>६<br>३८ |
| कृणुष्वपाजः | १३ | ९ |
| कृष्णग्रीवाऽआग्नेयाः | २४<br>२४<br>२४ | १०<br>६<br>१४ |
| कृष्णाभौमाः | २४ | १० |
| कृष्णोसि | २ | १ |
| केतुङ्कृण्वन् | २९ | ३७ |
| केष्वन्तःपुरुषः | २३ | ५१ |
| कोऽअस्यवेदभुवनस्य | २३ | ५९ |
| कोऽदात्कस्मा | ७ | ४८ |
| कोऽसिकतमः | ७<br>२० | २९<br>४ |
| कःस्विदेकाकी | २३<br>२३ | ९<br>४५ |

| | अ० | म० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| क्रमंद्ध्वमुग्निना | १७ | ६५ | गायुत्रञ्छन्दोंसि | ३८ | ६ | घृतम्मिमिक्षे | १७ | ८८ |
| क्रुव्यादंमुग्निम् | ३५ | १९ | गायुत्रीत्रिष्टुप् | २३ | ३३ | घृतवंतीभुवनानाम् | ३४ | ४५ |
| क्षुत्रस्यंत्त्वापुरस्तांय | ३८ | १९ | गायुत्रेणत्त्वा | १ | २७ | घृताचीस्त्थः | २ | १९ |
| क्षुत्रस्युयोनिंरसि | २० | १ | गावुऽउपावता | ३३ / ३३ | १९ / ७१ | घृताच्यंसिजुह्वः | २ | ६ |
| क्षुत्रस्योल्बंमसि | १० | ८ | गृहामाविंभीत | ३ | ४१ | घृतेनुसीता | १२ | ७० |
| क्षुत्रेणांग्नेस्वायुः | २७ | ५ | गोत्रुभिदंङ्गोविदंम् | १७ | ३८ | घृतेनाक्तौपुशून् | ६ | ११ |
| क्षुपोराजन् | १५ | ३७ | गोभिर्न्नसोमंम् | २० | ६६ | घृतेनाअन्त्सम्पुथः | २९ | २ |
| खुङ्गोवैंश्वदेवः | २४ | ४० | गोमंदूपुणासुत्त्या | २० | ८१ | चक्षुंष्पतःपिता | १७ | २५ |
| गुणानांन्त्वा | २३ | १९ | ग्रहाऽऊर्जाहुतयः | ९ | ४ | चत्त्वारिश्रुमेष्टौचंमे | १८ | २५ |
| गुन्धुर्वस्त्वा | २ | ३ | ग्रीष्मेणंऽऋतुना | २१ | २४ | चतुंस्त्रिंशःशुत्तन्तवः | ८ | ६१ |
| गर्भोऽअस्योषंधीनाम् | १२ | ३७ | घर्म्मैतत्तेपुरीषम् | ३८ | २१ | चतुंस्त्रिंशद्वाजिनः | २५ | ४१ |
| गर्भोदेवानांम् | ३७ | १४ | घृतङ्घृतपावानः | ६ | १९ | चतुं:स्त्रक्तिर्नाभिः | ३८ | २० |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| चुत्वारिशृङ्गात्रयं॑ | १७ | ९१ | जुवोयस्त्ते | ९ | ९ | तँऽसुज्ञम्बुर्हिषि | ३१ | ९ |
| चुन्द्रमाऽअुप्स्वुन्तरा | ३३ | ९० | जिह्वामैभुद्रम् | २० | ६ | तंवौदुस्म्मम् | २६ | ११ |
| चुन्द्रमुामर्नस॑ | ३१ | १२ | जीमूतस्येवभवति | २९ | ३८ | तच्चक्षुर्देवहितम् | ३६ | २४ |
| चित्तिंजुहोमि | १७ | ७८ | जुषाणोवुर्हि॑ | २० | ४ | ततौविराडंजायत | ३१ | ५ |
| चित्पतिर्म्मा | ४ | ४ | ज्यैष्ठ्यश्च्च मे | १८ | ४ | तत्सवितुर्वरेण्यम् | ३ २२ ३० | ३५ ० २ |
| चित्रन्देवानाम् | ७ १३ | ४२ १६ | ज्योतिरसि | ५ | ३५ | तत्सूर्य्यस्य | ३३ | ३७ |
| चिर्दसितयादेवतया | १२ | ५३ | तऽआयजन्त | १७ | २८ | तदश्विना | १९ | ८२ |
| चिर्दसिमुनासि | ४ | १९ | तम्पत्नीभि॑ | १५ | ५० | तर्दस्यरूपममृतम् | १९ | ८१ |
| चोदयित्रीसूनृतानाम् | २० | ८५ | तम्प्रत्नथा | ७ | १२ | तदिदासभुवनेषु | ३३ | ८० |
| जनयत्यैत्त्वा | १ | २२ | तत्त्वायामि | १८ २१ | ६ ० २ | तदेजतितन्नैजति | ४० | ५ |
| जनस्यगोपा॑ | १५ | २७ | तन्त्वाशोचिष्ठ | ३ | २६ | तदेव | ३२ | १ |
| जनिष्ठाऽउुग्र॑ | ३३ | ६४ | तन्त्वासमिद्धि॑ | ३ | ३ | तद्विप्रासोविपुन्यवं॑ | ३४ | ४४ |

| | अ० | मं० |
|---|---|---|
| तद्विष्णोः परमम् | ६ | ५ |
| तनूनपाच्छुचिव्रतः | २१ | १३ |
| तनूनपात्पथः | २९ | २६ |
| तनूनपादसुरः | २७ | १२ |
| तनूपाऽअग्नेसि | ३ | १७ |
| तनूपाभिषजा | २० | ५६ |
| तन्तुन्नारायस्पोषेण | १५ | ७ |
| तन्नस्तुरीपम् | २७ | २० |
| तन्नोवातः | २५ | १७ |
| तन्मित्रस्य | ३३ | ३८ |
| तपश्चतपस्यश्च | १५ | ५७ |
| तपसेकौलालम् | ३० | ७ |
| तपसेस्वाहा | ३९ | १२ |
| तप्सायनीमे | ५ | ९ |
| तमिद्धर्भम् | १७ | ३० |
| तमिन्द्रम्पशवः | २० | ६९ |
| तमीशानञ्जगतः | २५ | १८ |
| तमुत्वादध्यङ् | ११ | ३३ |
| तमुत्वापाथ्यः | ११ | ३४ |
| तरणिर्विश्वदर्शतः | ३३ | ३६ |
| तवश्रुमासः | १३ | १० |
| तवंवायवृतस्पते | २७ | ३४ |
| तवशरीरम् | २९ | २२ |
| तवायंसोमः | २६ | २३ |
| तस्माऽअरङ्गमामवः | ११<br>३६ | ५२<br>१६ |
| तस्मादश्वा | ३१ | ८ |
| तस्माद्यज्ञात्सर्वहुतःसम्भृतम् | ३१ | ७ |
| तस्माद्यज्ञात्सर्वहुतऽऋचः | ३१ | ६ |
| तस्यवयःसुमतौ | २० | ५२ |
| तस्यास्तेसत्यसवसः | ४ | १८ |
| ताऽअस्यसूददोहसः | १२<br>१५ | ५५<br>६० |
| ताऽउभौचतुरःपदः | २३ | २० |
| तानऽआवोढम् | २० | ८३ |
| तानासत्या | २० | ७४ |
| तान्पूर्वया | २५ | १६ |
| ताभिषजा | २० | ७५ |

| |
|---|
| ताᳪसवितुः |
| तिरश्चीनः |
| तिस्रऽइडा |
| तिस्रस्त्रेधा |
| तिस्रोदेवीर्बर्हिः |
| तिस्रोदेवीर्हविषा |
| तीव्रान्घोषान् |
| तुभ्यन्ताऽअङ्गिरः |
| तेऽअस्ययोषणे |
| तेऽआचरन्ती |
| तेजः पशूनाम् |
| तेजोसितेजः |

| अ० | म० | |
|---|---|---|
| १७ | ७४ | तेजोसिशुक्रम् |
| ३३ | ७४ | तेनोऽअर्वन्तः |
| २१ | १९ | तेहिपुत्रासः |
| २० | ६३ | त्र्यादेवाः |
| २७ | १९ | त्रातारमिन्द्रम् |
| २० | ४३ | त्रिधाहितम्पणिभिः |
| २९ | ४४ | त्रिᳪशद्धामविराजति |
| १२ | [illegible] | त्रिपादूर्ध्वः |
| २७ | १७ | त्रीणितऽआहुः |
| २९ | ४१ | त्रीणिपदा |
| १९ | ९५ | त्रीणिशता |
| १९ | ९ | त्रिवृदसि |

| अ० | मं० | |
|---|---|---|
| २२ | १ | त्रीन्त्समुद्रान् |
| ९ | १७ | त्र्यम्बकँयजामहे |
| ३ | ३३ | त्र्यवयोगायत्र्यै |
| २० | ११ | त्र्यविंञ्जमे |
| २० | ५० | त्र्यायुषञ्जमदग्नेः |
| १७ | १२ | त्वन्नोऽअग्नेतव |
| ३ | ८ | त्वन्नोऽअग्नेवरुणस्य |
| ११ | ४ | त्वमग्नऽईडितः |
| २९ | १५ | त्वमग्नेद्युभिः |
| ३४ | ४३ | त्वमग्नेप्रथमः |
| ३३ | ७ | त्वमग्नेव्रतपाः |
| १५ | ९ | त्वमुग्नप्रशᳪसिषः |

| अ० | मं० |
|---|---|
| १३ | ३१ |
| ३ | ६० |
| २४ | १२ |
| १८ | २६ |
| ३ | ६२ |
| ३४ | १३ |
| २१ | ३ |
| १९ | ६६ |
| ११ | २७ |
| ३४ | १२ |
| ४ | १६ |
| ६ | ३७ |

| | अ० | मं० |
|---|---|---|
| त्वमिन्द्रप्प्रतूर्त्तिष्व | ३३ | ६६ |
| त्वमिमाऽओषधीः | ३४ | २२ |
| त्वमुत्तमास्योषधे | १२ | १०१ |
| त्वँरुयविष्ठ | १३<br>१८ | ३२<br>७७ |
| त्वयाहिनं | १९ | ५३ |
| त्वष्टातुरीपं | २१ | २० |
| त्वष्टादधुच्छुष्मम् | २० | ४४ |
| त्वष्टावीरन्देवकामम् | २९ | ९ |
| त्वꣳसोमपितृभिः | १९ | ५४ |
| त्वꣳसोमप्प्रचिकितः | १९ | ५२ |
| त्वाङ्गन्धर्वा | १२ | ९८ |
| त्वाञ्चित्रश्श्रवस्तम | १५ | ३१ |

| | अ० | मं० |
|---|---|---|
| त्वामग्नेऽअङ्गिरसः | १५ | २८ |
| त्वामग्नेपुष्करात् | १५ | २२ |
| त्वामग्नेयजमानाः | १२ | २८ |
| त्वामग्नेवृणते | २७ | ३ |
| त्वामुद्यऽऋषे | २१ | ६१ |
| त्वामिद्धिहवामहे | २७ | ३७ |
| त्वाꣳहिमन्द्रतमम् | ३३ | १३ |
| त्वेऽअग्नेस्वाहुतः | ३३ | १४ |
| दक्षिणामारोह | ११ | ७८ |
| दधिक्राव्णोऽअकारिषम् | २३ | ३२ |
| दꣳष्ट्राभ्यांमलिम्लून् | ११ | ७८ |
| दस्रायुवाकवः | ३३ | ५८ |

| | अ० | मं० |
|---|---|---|
| दिग्भ्यः स्वाहा | ३९ | २ |
| दिवः पृथिव्याः | २९ | ५३ |
| दिवस्परि | ३२ | १८ |
| दिविधाऽइमम् | ३८ | ११ |
| दिविपृष्टः | ३३ | ९२ |
| दिविविष्णुः | २ | २५ |
| दिवोमूर्द्धासि | १८ | ५४ |
| दिवोवाविष्णऽउत | ५ | १९ |
| दीक्षायैरूपम् | १९ | १३ |
| दीर्घायुस्ते | १२ | १०० |
| दुरोदेवीर्दिशः | २१ | १६ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| इतेद्दछहंमा | ३६ | १८ | देवम्बर्हिर्व्वयोधसम् | २८ | ३५ | | | |
| इतेद्दछहंमामित्रस्य | ३६ | १८ | देवम्बर्हिर्वारितीनाम् | २१ | ५७ | | | |
| इशानोरुक्क्रमः | ११ / १२ | १ / २५ | देवम्बर्हिर्वारितीनान्देवमिन्द्रः | २८ | २१ | | | |
| इष्टापरिस्रुतं | १९ | ७९ | देवम्बर्हिर्वारितीनान्देवमि- | | | | | |
| इष्टारूपेव्याकरोत् | १९ | ७७ | न्द्रंवयोधसम् | २८ | ४४ | | | |
| दछहंस्वदेवि | ११ | ५९ | देवश्रुतौदेवेष्वघोषतम् | ५ | १७ | देवस्यसवितुर्म्मतिम् | २२ | १४ |
| देवऽइन्द्रः | २१ / २८ | ५५ / १० | देवसवितः | १० / ११ / ३० | १ / ७ / १ | देवस्याहछसवितुःसुवे | ६ / ९ | १० / १३ |
| देवकृतस्यैनसः | ८ | १३ | देवसवितरुपतै | ५ | ३९ | देवहूर्य्यज्ञऽआचं | १७ | ६२ |
| देवन्देवंवोवसे | ३३ | ९१ | देवस्त्त्वासवितः | ११ | ६३ | देवागातुविदः | ८ | २१ |
| देवम्बर्हिःसरस्वती | २१ | ४८ | देवस्यचेततः | २२ | ११ | देवादेवानांभिषजा | २१ | ५३ |
| देवम्बर्हिरिन्द्रम् | २८ | १२ | देवस्यत्वासवितुःप्रसवे | १ | १० | देवादैव्याहोतारा | २८ | ४० |

| अ. | मं. | अ. | मं. | अ. | मं. | अ. | मं. |
|---|---|---|---|---|---|---|---|
| १ | २१ | ५ | २६ | ६ | ३० | ११ | ९ |
| १ | २४ | ६ | १ | ९ | ३० | ११ | २८ |
| ५ | २२ | ६ | ९ | ९ | ३८ | १८ | ३७ |
| २० | ३ | ३७ | १ | ३८ | १ | | |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| देवानाम्भद्रा सुमतिः | २५ | १५ | देवीरापऽएषवो | ८ | २६ | देवोवनस्पतिः | २८ | ४९ |
| देवान्दिवमगन् | ८ | ६० | देवीरापःशुद्धाः | ६ | १३ | देव्योवम्रय | ३७ | ४ |
| देवायुज्ञंमतन्वत | १९ | १२ | देवीरापोऽअपान्नपात् | ६ | २७ | देहिमेददामिते | ३ | ५० |
| देवासोहिष्मा | ३३ | ९४ | देवीर्द्वारऽइन्द्रम् | २८ | १३ | दैव्याऽअध्वर्यवुस्त्वा | २३ | ४२ |
| देवीऽउषासानक्ता | २८ | ३७ | देवीर्द्वारोऽअश्विना | २१ | ४९ | दैव्यामिमाना | २० | ४२ |
| देवीऽउषासानक्तेन्द्रम् | २८ | १४ | देवीर्द्वारोवयोधसम् | २८ | ३६ | दैव्यायधर्त्रे | १७ | ५६ |
| देवीऽउषासाश्विना | २१ | ५० | देवीस्तिस्रस्तिस्रः | २८, २१ | १८, १४ | दैव्यावध्वर्यूऽ | ३३, ३३ | ३३, ७६ |
| देवीऽऊर्जाहुतीदुघे | २१, २८, २८ | ५२, ७६, ३९ | देवेन्नोमनसा | ३४ | २३ | दैव्याहोताराऽऊर्ध्वम् | २७ | १८ |
| देवीजोष्ट्रीवसुधिती | २८, २८ | १५, ३८ | देवेभ्योहि | ३३ | ५४ | दैव्याहोताराप्रथमा | २९ | ३२ |
| देवीजोष्ट्रीसरस्वती | २१ | ५१ | देवोऽअग्निःस्विष्टकृत् | २८, २८, २८ | ५७, २२, ४१ | दैव्याहोतारा | २१ | १८ |
| देवीद्यावापृथिवी | ३७ | ३ | देवोदेवैः | २१, २८ | १६, २० | द्याम्मालेखीः | ५ | ४३ |
| | | | देवोनराशंसः | २८ | ४२ | द्युभिरक्तुभिः | ३४ | ३० |

| | अ० | मं० | | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| द्यौःशान्तिः | ३६ | १७ | द्वेसृतीऽअशृणवम् | १९ | ४७ | धूरसिधूर्व्व | १ | ८ |
| द्यौरासीत्पूर्व्वचित्तिः | २३ / २३ | १२ / ५४ | धन्वन्वनुगाः | २९ | ३९ | धृष्टिरस्यपाग्ने | १ | १७ |
| द्यौस्तेपृथिव्युम् | २३ | ४३ | धुर्त्तादिवः | ३७ | १६ | ध्रुवक्षितिध्रुवयोनिः | १४ | १ |
| द्यौस्तेपृष्ठम् | ११ | २० | धातारातिः | ८ | १७ | ध्रुवसदन्त्वा | ९ | २ |
| द्रप्सश्चस्कन्द | १३ | ५ | धानाःकरुम्भः | १९ | २१ | ध्रुवासिधरुणा | १३ | १६ |
| द्रविणोदाःपिपीपति | २६ | २२ | धानानांरूपम् | १९ | २२ | ध्रुवासिधरुणेतः | १३ | ३४ |
| द्रापेऽअन्धसस्पते | १६ | ४७ | धानावन्तङ्करम्भिणम् | २० | २९ | ध्रुवासिद्ध्रोयम् | ५ | २८ |
| द्रुपदादिव | २० | २० | धान्यमसि | १ | २० | ध्रुवोसिपृथिवीम् | ५ | १३ |
| द्वन्नःसर्प्पिरासुतिः | ११ | ७० | धामच्छदग्निः | १८ | ७६ | नक्तोषासासमनसा | १२ / १७ | २ / ७० |
| द्वारोदेवीरन्वस्य | २७ | १६ | धामन्तेविश्वम् | १७ | ९९ | नक्षत्रेभ्यःस्वाहा | २२ | २८ |
| द्विपदायाश्चतुष्पदाः | २३ | ३४ | धूम्रान्वसन्तायालभते | २४ | ११ | नतांविदाथ | ३४ | ५१ |
| द्वेविरूपेचरतः | ३३ | ५ | धूम्रबभ्रुनीकाशाः | २४ | १८ | नतद्रक्षांसि | १७ | ३१ |

| | अ० | मं० |
|---|---|---|
| नतस्यप्रतिमाऽअस्ति | ३२ | ३ |
| नतेदूरेपरुमा | ३४ | १९ |
| नत्वावाँ२ऽअन्यः | २७ | ३६ |
| नदीभ्यः—पौञ्जिष्ठम् | ३० | ८ |
| नभश्चनभस्यश्च | १४ | १५ |
| नमऽआशवे | १६ | ३१ |
| नमऽउष्णीषिणे | १६ | २२ |
| नमः—कपर्दिने | १६ | २९ |
| नमःकूप्याय | १६ | ३८ |
| नमः—कृत्स्नायतया | १६ | २० |
| नमःपर्णाय | १६ | ४६ |
| नमःपार्याय | १६ | ४२ |

| | अ० | मं० |
|---|---|---|
| नमः—शङ्गवे | १६ | ४० |
| नमः—शम्भवाय | १६ | ४१ |
| नमःशुष्क्याय | १६ | ४५ |
| नमःश्वभ्यः | १६ | २८ |
| नमः—सभाभ्यः | १६ | २४ |
| नमः—सिकत्याय | १६ | ४३ |
| नमःसुतेनिर्ऋते | १२ | ६३ |
| नमःसेनाभ्यः | १६ | २६ |
| नमःसोभ्याय | १६ | ३३ |
| नमस्तऽआयुधाया | १६ | १४ |
| नमस्तकक्षभ्यः | १६ | २७ |
| नमस्तेऽअस्तु | ३६ | २१ |

| | अ० | मं० |
|---|---|---|
| नमस्तेरुद्रमन्यवे | १६ | १ |
| नमस्तेहरसे | १७ / ३६ | ११ / २० |
| नमस्त्रुत्याय | १६ | ३७ |
| नमोगणेभ्यः | १६ | २५ |
| नमोज्येष्ठाय | १६ | ३२ |
| नमोधृष्णवे | १६ | ३६ |
| नमोबभ्लुशाय | १६ | १८ |
| नमोबिल्मिने | १६ | ३५ |
| नमोमित्रस्य | ४ | ३५ |
| नमोरोहिताय | १६ | १९ |
| नमोवःपितरः | २ | ३२ |
| नमोवञ्चते | १६ | २१ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| नमोवन्र्याय | १६ | ३४ | नराशꣳसꣳप्रति | २० | ३७ | नाभ्याऽआसीत् | ३१ | १३ |
| नमोवास्त्याय | १६ | ३९ | नराशꣳसस्यमहिमानम् | २९ | २७ | नार्यस्तेपत्न्यः | २३ | २६ |
| नमोविसृजद्भ्यः | १६ | २३ | नुम्र्मायपुंश्चलूम् | ३० | २० | नाशयित्रीबलासस्या | १२ | ९७ |
| नमोव्रज्याय | १६ | ४४ | नुवदशभिरस्तुवत | १४ | ३० | निष्क्रमणन्निपदनम् | २५ | ३८ |
| नमोस्तुनीलग्रीवाय | १६ | ८ | नुवभिरस्तुवत | १४ | २९ | नियुत्वान्वायुवा | २७ | २९ |
| नमोस्तुरुद्रेभ्योयेन्तरिक्षे | १६ | ६५ | नवविꣳशत्यास्तुवत | १४ | ३१ | निवेशनꣳसङ्गमनꣳ | १२ | ६६ |
| नमोस्तुरुद्रेभ्योयेदिवि | १६ | ६४ | नवाऽउंऽएतत् | २३ ७५ | १६ ४४ | निपसादधृतव्रतꣳ | १० १० | २७ २ |
| नमोस्तुरुद्रेभ्योयेपृथिव्याम् | १६ | ६६ | नुहितेपामुमा | ३ | ३२ | निहोताहोतृपदने | ११ | ३६ |
| नमोस्तुसर्प्पेभ्यः | १३ | ६ | नुहिस्पशमविंदन् | ३३ | ६० | नीलग्रीवाःशितिकंठादिवम् | १६ | ५६ |
| नमोहिरण्यबाहवे | १६ | १७ | नानाहिवान्देवहितम् | १९ | ७ | नीलग्रीवाःशितिकंठाःशर्वाः | १६ | ५७ |
| नमोह्रस्वाय | १६ | ३० | नाभापृथिव्याः | ११ | ७६ | नृत्तायसूतम् | ३० | ६ |
| नयत्त्परोनान्तरꣳ | २० | ८२ | नाभिर्म्मेचित्तम् | २० | ९ | नृषदेवेडप्सुपदे | १७ | १२ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| प्रावकानः सरस्वती | २० | ८४ | पुनर्मनः पुनरायुः | ४ | १५ | पूषापञ्चाक्षरेण | ९ | ३२ |
| प्राहिनोऽअग्नऽएकया | २७ | ४३ | पुनस्त्वादित्यारुद्रा | १२ | ४४ | पृच्छामित्वाचितये | २३ | ४९ |
| पितानोऽसिपितानः | ३७ | २० | पुनातितेपरिस्रुतम् | १९ | ४ | पृच्छामित्वापरमन्तम् | २३ | ६१ |
| पितुन्नुस्तोषम् | ३४ | ७ | पुराक्रूरस्यविसृपो | १ | २८ | पृथिविदेवयजन्योषध्याः | १ | २५ |
| पितृभ्यः स्वधायिभ्यः | १९ | ३६ | पुरीष्यासोऽअग्नयः | १२ | ५० | पृथिवीचमऽइन्द्रश्च | १८ | १८ |
| पीवोऽअन्नारयिवृधः | २७ | २३ | पुरीष्योऽसिविश्वभराः | ११ | ३२ | पृथिवीच्छन्दः | १४ | १९ |
| पुत्रमिवपितरौ | १०<br>२० | ३४<br>७७ | पुरुदस्मोविषुरूपऽ | ८ | ३० | पृथिव्याऽअहम् | १७ | ६७ |
| पुनन्तुमादेवजनाः | १९ | ३९ | पुरुषऽएवेदम् | ३१ | २ | पृथिव्याः पुरीषम् | १४ | ४ |
| पुनरासद्यसदनम् | १२ | ३९ | पुरुषमृगश्चन्द्रमसः | २४ | ३५ | पृथिव्याः सधस्थात् | ११ | १६ |
| पुनन्तुमापितरः | १९ | ३७ | पूर्णादर्विपरापत | ३ | ४९ | पृथिव्यैस्वाहा | २२ | २९ |
| पुनरूर्जानिवर्त्तस्व | १२<br>१२ | ०<br>६० | पूपर्णवनिष्ठुना | २५ | ७ | पृश्निस्तिरश्चीनपृश्निः | २४ | ४ |
| पुनर्नः पितरो | ३ | ५५ | पूपुन्तवव्रतेवयं | ३४ | ४१ | पृषदश्वामरुतः | २५ | २० |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| पृष्ठीर्म्मैराष्ट्रम् | २० | ८ | प्रजापतौत्त्वा | ३५ | ६ | प्रथमाद्वितीयैः | २० | १२ |
| पृष्ठोदिविपृष्ठो | १८ | ७३ | प्रतद्विष्णुंस्तवते | ५ | २० | प्रथमावांॐसरथिनां | २९ | ७ |
| प्रघासिनोहवामहे | ३ | ४४ | प्रतद्वोचेदमृतन्नु | ३२ | ९ | प्रनूनंब्रह्मणस्पतिः | ३४ | ५७ |
| प्रजापतयेच | २४ | ३० | प्रतिक्षत्रेप्रातिं | २० | १० | प्रनोयच्छत्त्वठसुमा | ९ | २९ |
| प्रजापतयेत्त्वा | २२ | ५ | प्रतिपदसि | १५ | ८ | प्रपर्वतस्यवृषभस्य | १० | १९ |
| प्रजापतयेपुरुपान् | २४ | २९ | प्रतिपन्थाम् | ४ | २९ | प्रप्पायमग्निः | १२ | ३४ |
| प्रजापतिःसम्भ्रियमाणः | ३९ | ५ | प्रतिश्रुत्काया॑ऽअर्त्तनम् | ३० | १९ | प्रबाहवासिसृतम् | २१ | ९ |
| प्रजापतिर्विश्वाकर्म्मामनः | १८ | ४३ | प्रतिस्पशः | १३ | ११ | प्रमन्महेशवसानाय | ३४ | १६ |
| प्रजापतिश्चरति | ३१ | १९ | प्रतीचीमारोह | १० | १२ | प्रमुञ्चधन्वनस्त्व | १६ | ९ |
| प्रजापतिष्ठा | १३ | १७ | प्रतूर्त्तंवाजिन् | ११ | १२ | प्रयाभिर्य्यासिदाश्वाॐसम् | २७ | २७ |
| प्रजापतेनत्त्वदेतान् | १०<br>२३ | २०<br>६५ | प्रतूर्वन्नेह्यवक्रामन् | ११ | १५ | प्रवऽइन्द्रायबृहते | ३३ | ९६ |
| प्रजापतेस्तपसा | २९ | ११ | प्रत्युष्टःरक्षः | १<br>१ | ७<br>२० | प्रवायुमच्छाबृहती | ३३ | ५५ |

| | अ० | मं० | | अ० | मं० | | अ० | मं० |
|---|---|---|---|---|---|---|---|---|
| बृहस्पतेपरि | १७ | ३६ | ब्राह्मणोस्यमुखम् | ३१ | ११ | भूम्म्याँऽआखून् | २४ | २६ |
| बृहस्पतेवाजञ्जय | ९ | ११ | भर्गऽएवभर्गवान् | ३४ | ३८ | भूरसिभूमिरस्य | १३ | १८ |
| बृहस्पतेसवितः | २७ | ८ | भगप्रणेतर्भग | ३४ | ३६ | भूर्भुवःस्वः—तत्सवितुः | ३६ | ३ |
| बोधामेऽअस्य | १२ | ४२ | भद्रङ्कर्णेभिः | २५ | २१ | भूर्भुवःस्वर्द्यौरिव | ३ | ५ |
| ब्रह्मक्षत्रम्पवते | १९ | ५ | भद्राऽउतप्रशस्तयः | १५ | ३९ | भूर्भुवःस्वः—सुप्रजाः | ३ | ३७ |
| ब्रह्मजज्ञानम् | १३ | ३ | भद्रोनोऽअग्निराहुतः | १५ | ३८ | भेषजमसि | ३ | ५९ |
| ब्रह्मणस्पतेत्वमस्य | ३४ | ५८ | भद्रोमेसिप्रच्यवस्व | ४ | ३४ | मखस्यशिरोसि | ३७ | ८ |
| ब्रह्मणेब्राह्मणम् | ३० | ५ | भवतन्नःसमनसौ | ४ / १७ | ३ / ६० | मध्वेस्वाहा | २२ | ३१ |
| ब्रह्मसूर्यसमम् | २३ | ४८ | भायैदार्वाहारम् | ३० | १२ | मधुनक्तमुतोषसः | १३ | २८ |
| ब्रह्माणिमेमतयः | ३३ | ७८ | भुज्युःसुपर्णः | १८ | ४२ | मधुमतीर्नऽइषः | ७ | २ |
| ब्रह्मणमद्य | ७ | ४६ | भुवोयज्ञस्य | १३ / १५ | १५ / २३ | मधुवाताऽऋतायते | १३ | २७ |
| ब्रह्मणासःपितरः | २९ | ४७ | भूतायत्वानारातये | १ | ११ | मधुमान्नः | १३ | २९ |

मधुश्चमाधवश्च
मद्ध्वासुज्जन्नंक्षसे
मनसुत्कामुमाकूतिम्
मनस्तुऽआप्प्यायताम्
मनोजूतिर्ज्जुषताम्
मनोनयेषु
मनोन्वाह्वामहे
मनौमेतर्प्पयत
मन्न्यवेयस्तापम्
मयिगृह्णाम्म्यग्ग्रे
मयित्त्यदिन्द्रियम्
मयीदमिन्द्र॒ः

| अ० | मं० | |
|---|---|---|
| १३ | २५ | मयुःप्राजापुत्त्यः |
| २७ | १३ | मरुताᳬस्कुन्धाः |
| ३९ | ४ | मरुतोयस्यहि |
| ६ | १५ | मरुत्त्वन्तम्वृषभम् |
| २ | १३ | मरुत्त्वाँ२ऽइन्द्र |
| ७ | १७ | मर्म्माणितेवर्म्मणा |
| ३ | ५३ | मशकान्केशैः |
| ६ | ३१ | महाँ२ऽइन्द्रोनृवदा |
| ३० | १४ | महाँ२ऽइन्द्रोयऽओजसा |
| १३ | १ | महाँ२ऽइन्द्रोवज्रहस्तः |
| ३८ | २७ | महानाम्न्योरेवत्त्यः |
| २ | १० | महिन्त्रीणामवोस्तु |

| अ० | मं० | |
|---|---|---|
| २४ | ३१ | महीद्यौःपृथिवी |
| २५ | ६ | महीनाम्पयोसि |
| ८ | ३१ | महीमूषुमातरम् |
| ७ | ३६ | महोऽअग्ग्नेःसमिधानस्य |
| ७ | ३८ | महोऽअर्णःसरस्वती |
| १७ | ४९ | माच्छन्दःप्रमा |
| २५ | ३ | मातऽइन्द्रते |
| ७ | ३९ | माताचतेपिताचतेग्ग्रम् |
| ७ | ४० | माताचतेपिताचतेग्ग्रे |
| २६ | १० | मातेवपुत्रम् |
| २३ | ३५ | मात्त्वाग्ग्निर्द्ध्वनयीत् |
| ३ | ३१ | मात्त्वातपत्प्रियः |

| अ० | मं० |
|---|---|
| ८ / १३ | ३२ / ३२ |
| ४ | ३ |
| २१ | ५ |
| ३३ | १७ |
| २० | ८६ |
| १४ | १८ |
| १० | २२ |
| २३ | २४ |
| २३ | २५ |
| १२ | ६१ |
| २५ | ३७ |
| २५ | ४३ |

चाव्यक्तं व्यक्तं चापि न पीडितम् ॥ सनाथस्यैकदेशस्य न वर्णाः [1]शङ्करं गताः ॥ यथा सुमत्तनागेन्द्रः
पदात्पदं निधापयेत् ॥ एवं पदं पदाद्यन्तं दर्शनीयं पृथक् पृथक् ॥ गीती शीघ्री शिरःकम्पी
यथालिखितपाठकः ॥ अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु
सुस्वरः ॥ धैर्यं लयसमत्वं च षडेते पाठका गुणाः ॥ चतुरक्षरषट्कं च निवर्तेत पुनः पुनः ॥ आवर्तते
पदं यच्च द्विस्त्रिराम्रेडितं हि तत् ॥ यथा धाम्ने धाम्नेति यजुषे यजुषेति निदर्शनम् ॥ हीयते वर्धते चापि
पदं यत्र कृशोदरम् ॥ उपचारः स विज्ञेय उभे सुश्चन्द्रेति निदर्शनम् ॥ अथ सप्तविधाः संयोगपिण्डाः ॥
॥ अयःपिण्डो दारुपिण्ड ऊर्णापिण्डो ज्वालापिण्डो मृत्पिण्डो [2]वायुपिण्डो वज्रपिण्डश्चेति ॥
यमान्विद्याद्यःपिण्डान्सान्तःस्थं दारुपिण्डवत् ॥ अन्तःस्थं यमवर्जं तु ऊर्णापिण्डं विनिर्दिशेत् ॥
अन्तःस्थं यमसंयोगे विशेषो नोपलभ्यते ॥ अशरीरं यमं विद्यादन्तःस्थः पिण्डनायकम् ॥ ज्वाला-
पिण्डान्सनासिक्यान्सानुस्वारांस्तु मृन्मयान् ॥ सोपध्मा वायुपिण्डाश्च जिह्वामूले तु वज्रिणः ॥ अयः-
पिण्डो नाम यथा ॥ अग्नीः । पक्तीः । नातनक्ष्मि ॥ दारुपिण्डो नाम यथा ॥ अश्वः । सूर्ष्वः । विश्वाज-

---

निदर्शनम् ॥ पञ्चरङ्गाः प्रवर्तन्ते घात—निर्घात—वज्रिणः । अहिणः प्रहिणो ज्ञेय आ-ई-ऊ-ऋ ओ-निदर्शनम् । १ सङ्करङ्गताः । २ वायुवज्र ।

तीति भवति ॥ तत्र ऊर्णापिण्डो नाम यथा ॥ यस्म्मिन् । अत्यस्म्मिन् अमुष्म्मिन् । इति भवति ॥ तत्र ज्वालापिण्डो नाम यथा ॥ ब्रह्मा । वह्निः । गृह्णामीति भवति ॥ तत्र मृत्पिण्डो नाम यथा ॥ साꣳस्था सꣳस्कर्त्तारः । सꣳस्वर्त्तऽइति ॥ तत्र वायुपिण्डो नाम यथा ॥ देव सवितः । युञ्जानः प्रथमम् । प्रादिवः ककुत्सुतमिति भवति ॥ तत्र वज्रपिण्डो नाम यथा ॥ इष्कृतिः । निष्कृतिः । ऋक्साम इति भवति ॥ प्रथममेव षकारेण सकारेणैव संयुतम् ॥ एतत्स्वरं समासाद्य अग्निष्वात्तान्निदर्शनम् ॥ प्रथमेन ठकारेण थकारेणैव संयुतम् ॥ एतत्स्वरं समासाद्य अधिष्ठाननिदर्शनम् ॥ प्रथममेव णकारेण नकारेणैव संयुतम् ॥ एतत्स्वरं समासाद्य त्रिणवत्रयस्त्रिꣳशाविति निदर्शनम् ॥ प्रथममेव रङ्गेण नकारेणैव संयुतम् ॥ एतद्रञ्जितमासाद्य वृष्टिमानिति निदर्शनम् ॥ एते ककाराद्यो मकारपर्यवसानाः कृष्णा व्याख्याताः ॥ शनैश्चरदैवत्याः ॥ चत्वार्यन्तस्था यरलवाः कपिलवर्णाः अग्निदैवत्याः ॥ चत्वार्यूष्माणः शषसहा अरुणवर्णा आदित्यदैवत्याः ॥ त्रयस्त्रिꣳशद्व्यञ्जनानि स्पर्शा अन्तःस्था ऊष्माणश्चेति ॥ चतुर्विधं करणम् । स्पृष्टमस्पृष्टं संवृतं विवृतं चेति ॥ संवृतो घोषा विवृता अघोषाः ॥ विꣳशतिर्घोषास्ते गजडदबा घझढधभा ङञणनमाः यरलवाश्चेति ॥ त्रयोदश अघोषास्ते

कचटतपाः खछठथफाः शषसाश्चेति ॥ अष्टौ वर्णस्थानानि भवन्ति ॥ उरःकण्ठ्यमूर्द्धन्यतालु-
दन्त्ये । जिह्वामूलयमानुनासिक्याश्चेति ॥ द्वौ औरस्यौ । ह हा इति । अआआ ३ त्रयः कण्ठ्याः ॥
ऋषट्मूर्द्धन्याः । टठडढणष इति ॥ दश तालव्याः चछजझञयशइईई ३ इति ॥ अष्ट दन्त्याः ।
तथद्धनलॡलसाः ॥ एकादश ओष्ठ्याः । पफबभमा उऊऊ ३ छउपध्माचेत्यादयः ॥ एको दन्त-
मूलयो रेफः ॥ जिह्वामूलीयाः पञ्च । कुंखुंगुंघुंङुंइति ॥ क्मख्मग्मघ्मकुंखुंगुंघुं इति यमाश्चत्वारः ॥
रुक्मेति प्रथमो ज्ञेयः सक्‌ इत्यपरो भवेत् ॥ तृतीयः सघ्न इत्याहुः उपध्मेति चतुर्थकः ॥ प्रथमौ
चौष्ठनासिक्यावोष्ठनासे उपाश्रितौ ॥ द्वितीयः कण्ठ्यदन्त्यश्च नासामूलमुपाश्रितः ॥ तृतीयः
कण्ठ्यजिह्वाग्रे नासायामेव निर्दिशेत् ॥ चतुर्थो हृदि नासिक्यः कण्ठे चाभिहिता यमाः ॥
आपञ्चमैश्चैकपादः संयुक्तं पञ्चमाक्षरम् ॥ यमास्तत्र निवर्तन्ते श्मशानादिव बान्धवाः ॥ यत्किं-
चिद्वाङ्मयं लोके सर्वमत्र प्रतिष्ठितम् ॥ सर्वमत्र प्रतिष्ठितमिति ॥ ऋवर्णोतिपरे सादावनुस्वारो
द्विमात्रकः ॥ संयोगे परभूतेषु ह्रस्व एवोच्यते बुधैः ॥ इति श्रीयाज्ञवल्क्यशिक्षा समाप्ता ॥

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीवेदपुरुषाय नमः ॥ गणनाथसरस्वतीरविशुक्रबृहस्पतीन् ॥ पंचैतान् संस्मरेन्नित्यं वेदवाणीं प्रवर्तयेत् ॥ अथानुवाकसूत्रम् ॥ इषेत्त्वैका, वसोः पवित्रंतिस्रोऽग्नेव्रतपते सप्त, पवित्रेस्थो द्वे, शर्म्मासितिस्रो, धृष्टिरसिशर्म्मासिद्वेकौ, देवस्यत्त्वा तिस्रो, देवस्यत्त्वा पंच, प्रत्युष्टꣳरक्षास्तिस्रो, दशैकत्रिꣳशत् ॥ हरिःॐ ॥ इषेत्त्वा ॥

इषेत्त्वोर्ज्जेत्त्वाव्वायवस्स्थदेवोवं꣡सविताप्प्रार्प्पयतुश्रेष्ठतमाय

कर्म्मणऽआप्प्यायद्ध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवा
ऽअयक्ष्मामावस्तेनऽईशतमाघशꣳसोद्ध्रुवाऽअस्मिन्गोपतौ
स्यातबह्वीर्य्यजमानस्यपशून्पाहि ॥ १ ॥ [ १-१ ] वसोः
पवित्रम् ॥ वसोःपवित्रमसिद्यौरसिपृथिव्यसिमातरिश्वनो
घर्म्मोसिविश्वधाऽअसि ॥ परमेणधाम्नादृꣳहस्वमाह्वाम्मा ते
यज्ञपतिर्ह्वार्षीत् ॥ २ ॥ वसोःपवित्रम् ॥ वसोःपवित्रमसि
शतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातु

व्वसोःपवित्त्रेणशतधारेणसुप्प्वाकामधुक्षः ॥ ३ ॥ साविश्श्वा
युः ॥ साविश्श्वायुःसाविश्श्वकर्म्मासाविश्श्वधायाः ॥ इन्द्रस्य
त्वाभागꣳसोमेनातनच्मिविष्णोहव्यꣳरक्ष ॥ ४ ॥ [ ३-२ ]
अग्ग्नेव्रतपते । व्रतञ्चरिष्यामितच्छकेयन्तन्मेराध्यताम् ॥ इद
महमनृतात्सत्यमुपैमि ॥ ५ ॥ कस्त्त्वा ॥ युनक्तिसत्त्वायुनक्तिक
स्म्मैत्त्वायुनक्तितस्म्मैत्त्वायुनक्ति ॥ कर्म्मणेवांवेषायवाम् ॥ ६ ॥
प्रत्युष्टꣳरक्षः ॥ प्रत्युष्टꣳरक्षःप्रत्युष्टाऽअरातयोनिष्टप्तꣳरक्षो

निष्टप्ताऽअरातयः ॥ उर्व्वन्तरिक्षमन्वेमि ॥ ७ ॥ धूरसि ॥ धूर्
सिधूर्व्वधूर्व्वन्तन्धूर्व्वतँय्योऽस्मान्धूर्व्वतितन्धूर्व्वयंव्वयन्धूर्व्वामः ॥
देवानामसिवह्नितमꣳसस्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम्
॥ ८ ॥ अह्रुतमसि । हविर्द्धानन्दृꣳहस्वमाह्वार्म्मातेयज्ञपति
र्ह्वार्षीत् ॥ विष्णुस्त्वाक्क्रमतामुरुव्वातायापहतꣳरक्षोयच्छन्ता
म्पञ्च ॥ ९ ॥ देवस्यत्वा । सवितुः प्रसवेऽश्विनोर्ब्बाहुभ्यां
म्पूष्णोहस्ताभ्याम् ॥ अग्नयेजुष्टङ्गृह्णाम्यग्नीषोमाभ्या

जुष्टङ्गृह्णामि ॥ १० ॥ भूतायत्वा ॥ भूतायत्वानारातयेस्वर
भिविख्येषन्दृंहन्तान्दुर्याः पृथिव्यामुर्वन्तरिक्षमन्वेमि
पृथिव्यास्त्वानाभौसादयाम्यदित्याऽउपस्थेग्नेहव्यंरक्ष
॥ ११ ॥ [७-३] पवित्रेस्त्थः ॥ पवित्रेस्त्थोवैष्णव्यौ
सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेणपवित्रेणसूर्यस्यरश्मि
भिः ॥ देवीरापोऽअग्रेगुवोऽअग्रेपुवोग्रऽइममद्ययज्ञन्न
यताग्रेयज्ञपतिंसुधातुंयज्ञपतिन्देवयुवम् ॥ १२ ॥ युष्मा

इन्द्रं ॥ युष्माऽइन्द्रोऽवृणीतवृत्रतूर्य्येयूयमिन्द्रमवृणीध्वं
वृत्रतूर्य्येप्प्रोक्षितास्स्थ ॥ अग्नयेत्त्वाजुष्टम्प्रोक्षाम्म्यग्नीषोमा
भ्यान्त्वाजुष्टम्प्रोक्षामि ॥ दैव्यायकर्म्मणेशुन्धद्ध्वन्देवयज्ज्या
यैयद्वोशुद्धाःपराजघ्नुरिदंवस्तच्छुन्धामि ॥ १२ ॥ [ २-४ ]
शर्म्मासि ॥ शर्म्मास्यवधूतंरक्षोवधूताऽअरातयोदित्यास्त्व
गसिप्प्रतित्वादितिर्वेत्तु ॥ अद्रिरसिवानस्पत्योग्रावासिपृथु
बुध्नःप्प्रतित्वादित्यास्त्वग्वेत्तु ॥ १४ ॥ अग्नेस्तनूः ॥ अग्ने

स्तुनूरसिव्वाचोव्विसर्ज्जनन्देववीतयेत्त्वागृह्णामिबृहद्ग्रावासिवान
स्पत्त्यःसऽइदन्देवेब्भ्योहविःशमीष्ष्वसुशमिशमीष्ष्व॥ हवि
ष्कृदेहिहविष्कृदेहि ॥ १५ ॥ कुक्कुटोसि ॥ कुक्कुटोसिमधु
जिह्वऽइषमूर्ज्जमावदत्त्वयाव्वयꣳसङ्घातꣳसङ्घातञ्जेष्ष्मवर्षवृद्ध
मसिप्प्रतित्त्वाव्वर्षवृद्धंव्वेत्तुपरापूतꣳरक्षःपरापूताऽअरातयोप
हतꣳरक्षोव्वायुर्व्वोव्विविनक्तुदेवोवःसविताहिरण्ण्यपाणिःप्प्रति
गृब्भ्णात्त्वच्छिद्द्रेणपाणिना ॥ १६ ॥ [ ३-५ ] धृष्टिरसि ॥

ध्रुष्टिरस्यपाग्नेऽअग्निमामादञ्जहिनिष्क्रव्याद॑ᳬसेधादेवयजं वह ॥ ध्रुवमसिपृथिवीन्दृᳬह ब्रह्मवनित्वाक्षत्रवनिसजातव न्युपदधामिभ्रातृव्यस्यवधाय ॥ १७ ॥ अग्नेब्रह्म । गृभ्णी ष्वधरुणमस्यन्तरिक्षन्दृᳬहब्रह्मवनित्वाक्षत्रवनिसजातवन्यु पदधामिभ्रातृव्यस्यवधाय ॥ धर्त्रमसिदिवन्दृᳬहब्रह्मवनि त्वाक्षत्रवनिसजातवन्युपदधामिभ्रातृव्यस्यवधाय ॥ विश्वा भ्युस्त्वाशाभ्युऽउपदधामिचितस्त्थोर्द्ध्वचितोभृगूणामङ्गिर

सान्तपंसातप्प्यद्धम् ॥ १८ ॥ [ २-६ ] शर्म्मांसि ॥ शर्म्मास्यवंधूतꣳ
रक्षोवंधूताऽअरांतयोदिंत्त्यास्त्वगंसिप्प्रतित्त्वादिंतिर्व्वेत्तु ॥ धिषं
णांसिपर्व्वतीप्प्रतित्त्वादिंत्त्यास्त्वग्ग्वेत्तुदिवस्कम्भनीरंसिधिषं
णांसिपार्व्वतेयीप्प्रतिंत्त्वापर्व्वतीर्व्वेत्तुधान्न्यमसि ॥ १९ ॥ धान्न्य
मसि । धिनुहिदेवान्प्प्राणायंत्त्वोदानायंत्त्वाव्व्यानायंत्त्वा ॥
दीर्ग्घामनुप्प्रसितिमायुंषेधान्देवोवंः सवितान्हिरंण्ण्यपाणिꣳ
प्प्रतिगृब्भ्णात्त्वच्छिद्रेणपाणिनाचक्षुंषेत्त्वामहीनाम्पयोसि

॥ २० ॥ [२-७] देवस्यत्वा ॥ सवितुःप्प्रसवेश्विनोर्ब्बाहुब्भ्यां
प्पूष्णोहस्ताब्भ्याम् ॥ संव्वपामिसमापऽओषधीभिःसमोष
धयोरसेन ॥ सᳬंरेवतीर्ज्जगतीभिःपृच्च्यन्ताᳬंसम्मधुमतीर्म्म
धुमतीभिःपृच्च्यन्ताम् ॥ २१ ॥ जनयत्यैत्वा ॥ जनयत्यै
त्वासँय्यौमीदमग्नेरिदमग्नीषोमयोरिषेत्वाघर्म्मोसिव्विश्वा
युरुरुप्प्रथाऽउरुप्प्रथस्वोरुतेयज्ञपतिःप्प्रथतामग्निष्टेत्वचम्मा
हिᳬंसीद्देवस्त्वासविताश्रपयतुव्वर्षिष्ठेधिनाके ॥ २२ ॥ माभेः ॥

मा भेर्मा संविक्था ऽअतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भू
यात् त्रिताय त्वा द्विताय त्वैकताय त्वा ॥२३॥ [३-८] देवस्य त्वा।
सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्॥ आददेऽध्व
रकृतं देवेभ्यऽइन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा
वायुरसि तिग्मतेजा द्विषतो वधः ॥२४॥ पृथिवि देवयजनि॥ पृ
थिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषं व्रजं गच्छ गोष्ठानं व
र्षतु ते द्यौर्बधान देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशैर्योऽस्मा

स्म्मान्द्वेष्टियञ्चव्वयन्द्विष्मस्तमतोमामौक् ॥२५॥ अपाररुम्॥
अपाररुम्पृथिव्यैदेवयजनाद्वध्यासंव्व्रजङ्गच्छगोष्ठानंव्वर्षतुतेद्यौ
र्बधानदेवसवितःपरमस्याम्पृथिव्याꣳशतेनपाशैर्योस्म्मान्द्वे
ष्टियञ्चव्वयन्द्विष्मस्तमतोमामौक् ॥ अररोदिवम्मापप्प्तोद्र
प्प्सस्तेद्यास्म्मास्कन्व्व्रजङ्गच्छगोष्ठानंव्वर्षतुतेद्यौर्बधानदेवसवि
तःपरमस्याम्पृथिव्याꣳशतेनपाशैर्योस्म्मान्द्वेष्टियञ्चव्वयन्द्वि
ष्मस्तमतोमामौक् ॥ २६ ॥ गायत्रेणंत्वा ॥ गायत्रेणंत्वाच्छ

न्दसा परिगृह्णामि त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि जागतेन
त्वा छन्दसा परिगृह्णामि ॥ सुक्ष्मा चासि शिवा चासि स्योना चा
सि सुषदा चास्यूर्जस्वती चासि पयस्वती च ॥ २७ ॥ पुरा क्रूरस्य
विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम् ॥ यामैरयँश्चन्द्रम
सि स्वधाभिस्तामु धीरासोऽअनुदिश्य यजन्ते ॥ प्रोक्षणीरासाद
य द्विषतो वधोसि ॥ २८ ॥ [५-९] प्रत्युष्टꣳ रक्षः ॥ प्रत्युष्टꣳ रक्षः
प्रत्युष्टाऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ताऽअरातयः ॥ अनिशि

तोसिसपत्नक्षिद्वाजिनन्त्वावाजेध्यायैसम्मार्ज्मि। प्रत्युष्टꣳर
क्षःप्रत्युष्टाऽअरातयोनिष्टप्तꣳरक्षोनिष्टप्ताऽअरातयः॥ अनि
शितासिसपत्नक्षिद्वाजिनीन्त्वावाजेध्यायैसम्मार्ज्मि॥ २९॥
अदित्यैरास्नासिविष्णोर्वेष्पो[1]स्यूर्जेत्वादब्धेनत्वाचक्षुषावप
श्यामि॥ अग्नेर्जिह्वासिसुहूर्देवेभ्योधाम्नेधाम्नेमेभवयजुषे
यजुषे॥ ३०॥ सवितुस्त्वा। प्रसवऽउत्पुनाम्यच्छिद्रेणपवित्रे

१ वेष्पोसि इति काण्वाना पाठ । तत्संहिताभाष्ये छादस. पकारादेश इति सायणाचार्योक्ते । माध्यंदिनीयानां तु वेष्योसि इति पाठ. । अत्र उवटमहीधरादिभाष्यकारैः पकारादेशस्यानुक्ते ।

णसूर्य्यस्यरश्मिभिः ॥ सवितुर्व्वःप्प्रसवऽउत्त्पुनाम्म्यच्छिद्द्रे
णपवित्त्रेणसूर्य्यस्यरश्मिभिः ॥ तेजोसिशुक्क्रमस्यमृतमसि
धामनामासिप्प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ३१ ॥
[३-१०] इतिश्रीवाजसनेयसंहितायां प्रथमोध्यायः ॥ १ ॥
श्रीवेदपुरुषाय नमः । अनुवाकसूत्रम् ॥ कृष्णोसिषड्, ग्नेवाज
जित्तिस्रो, मयीद, मग्नीषोमयोः पंचका, वग्नेदब्धायोचतस्रः,
संवर्चसापंचा, ग्नयेकव्यवाहनायषट् सप्तचतुस्त्रिंशत् ॥ हरिः

ॐ ॥ कृष्णोऽसि ॥ कृष्णोस्याखरेष्ठोग्नयेत्वाजुष्टम्प्रोक्षामिवे
दिरसि बर्हिषेत्वाजुष्टम्प्रोक्षामिबर्हिरसिस्रुग्भ्यस्त्वाजुष्टम्प्रो
क्षाम्यदित्यैव्युन्दनम् ॥ १ ॥ अदित्यैव्युनन्दनमसिविष्णो
स्तुपोस्यूर्णम्म्रदसन्त्वास्तृणामिस्वासस्त्थान्देवेभ्योभुवपतये
स्वाहाभुवनपतयेस्वाहाभूतानाम्पतयेस्वाहा ॥२॥ गन्धर्वस्त्वा।
विश्वावसुःपरिदधातुविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्नि
रिडऽईडितः ॥ इन्द्रस्यबाहुरसिदक्षिणोविश्वस्यारिष्ट्यैयजमान

स्यपरिधिरस्यग्निरिडऽईडितः ॥ मित्रावरुणौत्त्वोत्तरतःपरिध
त्तान्ध्रुवेणधर्म्मणाविश्वस्यारिष्ट्यैयजमानस्यपरिधिरस्यग्निरि
डऽईडितः ॥ ३ ॥ वीतिहोत्रन्त्वा । कवेद्युमन्तꣳसमिधीमहि ॥
अग्नेबृहन्तमध्वरे ॥ ४ ॥ समिदसि ॥ समिदसिसूर्य्यस्त्वापुर
स्तात्पातुकस्याश्चिदभिशस्त्यै ॥ सवितुर्बाहूस्थऽऊर्णम्म्रद
सन्त्वास्तृणामिस्वासस्थन्देवेब्भ्यऽआत्त्वावसवोरुद्द्राऽआदि
त्त्याःसदन्तु ॥५॥ घृताच्च्यसि । जुहूर्न्नाम्नासेदम्प्रियेणधाम्ना

प्रियꣳ सदऽआसीद्घृताच्यैस्युपस्पृत्वा
प्रियꣳ सदऽआसीद्घृताच्यैस्युपस्पृत्वास्मात्सेदस्प्रियेणधाम्ना
प्रियꣳ सदऽआसीद्घृताच्यैसिद्धुवानास्मात्सेदस्प्रियेणधाम्ना
प्रियꣳ सदऽआसीदप्रियेणधाम्नाप्रियꣳ सदऽआसीद् ॥ ध्रुवा
ऽअसदन्नृतस्ययोनौताविष्णोपाहिपाहियज्ञम्पाहियज्ञपतिंपा
हिमाँय्यज्ञन्यम् ॥ ६ ॥ [६-१] अग्नेवाजजित् ॥ अग्नेवाज
जिद्वाजन्त्वासरिष्यन्तंवाजजितꣳ सम्मार्ज्मि ॥ नमोदेवे
भ्यः स्वधापितृभ्यः सुयमेमेभूयास्तमस्कन्नमद्य ॥७॥ अस्कं

नमुद्यं। देवेभ्युऽआज्युꣳ सम्भ्रियासुमङ्घ्रिणा विष्णो मा त्वाव
क्रमिषं वसुमतीमग्ने ते च्छायामुपस्थेषं विष्णोस्स्थानमसीतऽ
इन्द्रो वीर्यमकृणोदूर्ध्वोऽध्वरऽआस्थात् ॥८॥ अग्ने वेः ॥ अग्ने
वेर्होत्रं वेर्दूत्यमवतान्त्वान्द्यावापृथिवीऽअव त्वन्द्यावापृथिवी
स्विष्टकृद्देवेभ्युऽइन्द्रऽआज्येन हविषा भूत्स्वाहा सञ्ज्योतिषा
ज्योतिः ॥९॥ [३-२] मयीदम् ॥ मयीदमिन्द्रऽइन्द्रियन्दधा
त्वस्मान्रायो मघवानः सचन्ताम् ॥ अस्माकꣳ सन्त्वाशिषः

सत्यानः सन्त्वाशिषऽउपहूता पृथिवी मातोप माम्पृथिवी मा
ता ह्वयतामग्निराग्नीध्रात्स्वाहा ॥१०॥ उपहूतो द्यौः ॥ उपहूतो
द्यौष्पितोप माम्द्यौष्पिता ह्वयतामग्निराग्नीध्रात्स्वाहा ॥ देव
स्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ॥
प्रतिगृह्णाम्यग्नेष्ट्वास्येन प्राश्नामि ॥११॥ एतन्ते । देवसवित
र्यज्ञम्प्राहुर्बृहस्पतये ब्रह्मणे ॥ तेन यज्ञमव तेन यज्ञपतिन्तेन
मामव ॥१२॥ मनोजूतिः ॥ मनोजूतिर्जुषतामाज्यस्य बृहस्प

तिर्य्यज्ञमिमन्तनोत्वरिष्टँय्यज्ञꣳसमिमन्दधातु ॥ विश्वेदेवास
ऽइहमादयन्तामो ॥ ३म्प्रतिष्ठ ॥१३॥ एषाते ॥ एषातेऽअग्नेस
मित्तयावर्द्धस्वचाचप्प्यायस्व ॥ वर्द्धिषीमहिचवयमाचप्प्यासि
षीमहि ॥ अग्नेवाजजिद्वाजन्त्वाससृवाꣳसंवाजजितꣳसम्मा
र्ज्मि ॥१४॥[५-३] अग्नीषोमयोरुज्जितिम् ॥ अग्नीषोमयोरु
ज्जितिमनूज्जेषंवाजस्यमाप्रसवेनप्रोहामि ॥ अग्नीषोमौतमपनु
दताँय्योस्मान्द्वेष्टियञ्चवयन्द्विष्मोवाजस्यैनम्प्रसवेनापोहा

मि ॥ इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि ॥
इन्द्राग्नी तमपनुदतां योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मो वाजस्यै
नम्प्रसवेनापोहामि ॥ १५ ॥ वसुभ्यस्त्वा । रुद्रेभ्यस्त्वादि
त्येभ्यस्त्वा सञ्जानाथान्द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्या
वताम् ॥ व्यन्तु वयोक्तं रिहाणा मरुताम्पृषतीर्गच्छ वशा पृश्नि
र्भूत्वा दिवङ्गच्छ ततो नो वृष्टिमावह ॥ चक्षुष्पाऽअग्नेऽसि चक्षु
र्मे पाहि ॥ १६ ॥ यम्परिधिम् ॥ यम्परिधिम्पर्यधत्थाऽअग्ने देव

पृणिभिर्गुह्यमानः॥तन्तंऽएतमनुजोषम्भराम्म्येषनेत्त्वदपचे
तयाताऽअग्नेःप्प्रियम्पाथोपीतम् ॥ १७॥ सꣳस्रवभागास्त्थे
षाबृहन्तःप्प्रस्तरेष्ठाःपरिधेयाश्चदेवाः ॥ इमांवाचमभिविश्श्वे
गृणन्तऽआसद्यास्मिन्बर्हिषिमादयद्ध्वꣳस्वाहावाट् ॥ १८ ॥
घृताचीस्त्थः॥ घृताचीस्त्थोधुर्य्यौपातꣳसुम्नेस्त्थःसुम्नेमा
धत्तम् ॥ यज्ञनमश्चतऽउपचयज्ञस्यशिवेसन्तिष्ठस्वस्विष्टेमेस
न्तिष्ठस्व ॥१९॥[५-४]अग्नेदब्धायो ॥ शीतमपाहिमादिद्योः

पाहिप्प्रसित्यैपाहिदुरिष्ट्यैपाहिदुरद्मन्याऽअविषन्नः÷पितुङ्कृ
णुसुषदायोनौस्वाहावाडग्नयेसंवेशपतयेस्वाहासरस्वत्यैयशो
भगिन्यैस्वाहा ॥ २० ॥ वेदोसि ॥ वेदोसियेनत्वन्देववेददेवे
भ्योवेदोभवस्तेनमह्यंवेदोभूयाः ॥ देवागातुविदोगातुंवित्त्वा
गातुमित ॥ मनसस्पतऽइमन्देवयज्ञꣳस्वाहावातेधाः ॥२१॥
सम्बर्हिः ॥ सम्बर्हिरङ्क्ताꣳहविषाघृतेनसमादित्यैर्वसुभिःसम्म
रुद्भिः÷॥ समिन्द्रोविश्वेदेवेभिरङ्क्तान्दिव्यन्नभोगच्छतुयत्स्वाहा

॥ २२ ॥ कस्त्वा ॥ कस्त्वाविमुञ्चतिसत्वाविमुञ्चतिकस्मै
त्वाविमुञ्चतितस्मैत्वाविमुञ्चति ॥ पोषायरक्षसाम्भागोसि
॥ २३ ॥ [४] संवर्च्चसा ॥ संवर्च्चसापयसासन्तनूभिरगन्म
हिमनसासꣳशिवेन ॥ त्वष्टासुदत्रोविदधातुरायोनुमार्ष्टुतन्वो
यद्विलिष्टम् ॥२४॥ दिविविष्णुः ॥ दिविविष्णुर्व्यक्रꣳस्तजा
गतेनच्छन्दसाततोनिर्भक्तोयोस्मान्द्वेष्टियञ्चवयन्द्विष्मो

१ सच्चर्चसा । अत्र "पर तु रेफहकाराभ्याम्" (शु य प्रा ४ अ. १७१ सू ) इत्यनेन रकारात्परस्य चकारस्य द्वित्वम् । २ त्वष्टा । अन ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु य प्रा. ४ अ १०२-सू.) इत्यनेन टकारस्य द्वित्वम् । एव दिवि विष्णु । द्विष्मः । योस्मान् । इत्येतादृशेषु बोध्यम् ।

न्तरिक्षेविष्णुर्व्यक्रँस्तत्रैष्टुभेनच्छन्दसाततोनिर्भक्तोयो
स्मान्द्वेष्टियञ्चवयन्द्विष्मःपृथिव्यांविष्णुर्व्यक्रँस्तगाय
त्रेणच्छन्दसाततोनिर्भक्तोयोस्मान्द्वेष्टियञ्चवयन्द्विष्मो
स्मादन्नादस्यैप्रतिष्ठायाऽअगन्मस्वःसञ्ज्योतिषाभूम ॥२५॥
स्वयम्भूरसि ॥ स्वयम्भूरसिश्रेष्ठोरश्मिर्वर्चोदाऽअसिवर्चोमे
देहि ॥ सूर्यस्यावृतमन्वावर्त्ते ॥ २६ ॥ अग्नेगृहपते । सुगृ
हपतिस्त्वयाग्नेहङ्गृहपतिनाभूयासँ सुगृहपतिस्त्वम्मयाग्ने

गृहपतिनाभूयाᳬ ॥ अस्थूरिणौगार्हपत्यानिसन्तुशतᳬहिमाᳬ
सूर्यस्यावृतमन्वावर्त्ते ॥ २७ ॥ अग्नेव्रतपते । व्रतमचारिषं
न्तदशकन्तन्मेराधीदमहँय्यऽएवास्मिसोस्मि ॥ २८ ॥
[ ५ ] अग्नयेकव्यवाहनाय । स्वाहासोमायपितृमतेस्वाहा ॥
अपहताऽअसुरारक्षाᳬसिवेदिषदः ॥ २९ ॥ येरूपाणि ।
प्रतिमुञ्चमानाऽअसुराःसन्तःस्वधयाचरन्ति ॥ परापुरोनि
पुरोयेभरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ ३० ॥ अत्र

पितरः ॥ अत्रपितरोमादयध्वंयथाभागमावृषायध्वम् ॥
अमीमदन्तपितरोयथाभागमावृषायिषत ॥ ३१ ॥ नमोवः
पितरोरसायनमोवःपितरःशोषायनमोवःपितरोजीवायनमो
वःपितरःस्वधायैनमोवःपितरोघोरायनमोवःपितरोमन्यवेन
मोवःपितरःपितरोनमोवोगृहान्नः÷पितरोदत्तसतोवः÷पितरोदे
ष्मैतद्वः÷पितरोवासऽआधत्त ॥ ३२ ॥ आधत्त । पितरो
गर्भङ्कुमारम्पुष्करस्रजम् ॥ यथेहपुरुषोसत् ॥ ३३ ॥ ऊर्ज्जं

व्वहन्तीः ॥ ऊर्ज्जंव्वहन्तीरमृतंघृतम्पयः कीलालम्परिस्रुतम् ॥
स्वधास्त्थतर्प्पयतमेपितॄन् ॥ ३४ ॥ [ ६ ] इतिश्रीवाजसनेय
संहितायांद्वितीयोऽध्यायः ॥ २ ॥ श्रीवेदपुरुषायनमः ॥ अनुवा
कसूत्रम् । समिधाग्निं, भूर्भुवःस्वश्चतुष्का, वग्निर्ज्योतिर्द्वे, उपप्र
यन्तोऽअध्वरंषड्विंशतिः, भूर्भुवःस्वश्चतस्रो, गृहामातिस्रः,
प्रघासिनोहवामहे पञ्च, पूर्णादर्विद्वे,ऽअक्षन्नमीमदन्तषडे, षते

१ उर्ज्जम् । अत्र "पर तु रेफहकाराभ्याम्" ( शु य. प्रा ४ अ १०१ सू ) रेफहकाराभ्या पर व्यञ्जन द्विरुच्यते । तेन रकारात्परस्य जकारस्य द्विर्भावः.

सप्त, दश ॥ १० ॥ त्रिषष्टिः ॥ ६३ ॥ हरिः ॐ ॥ समिधा
ग्निम् ॥ समिधाग्निन्दुवस्यतघृतैर्ब्बोधयतातिथिम् ॥ आस्मिन्
हव्याजुहोतन॥१॥ सुसमिद्धायशोचिषे। घृतन्तीव्रञ्जुहोतन॥
अग्नयेजातवेदसे ॥ २ ॥ तन्त्वा। समिद्भिरङ्गिरोघृतेनवर्द्ध
यामसि॥ बृहच्छोचायविष्ठ्य॥ ३ ॥ उपत्त्वा। ग्नेहविष्मतीर्घृ
ताचीर्य्यन्तुहर्य्यत॥ जुषस्वसमिधोमम॥४॥[४-१]भूर्भुवः॥

१ घृतैर्ब्बोधयता। अत्र पर तु रेफहकाराभ्याम् ( शु. य. प्रा. ४ अ. १०१ सू. ) इत्यनेन रकारात्परस्य वकारव्यञ्जनस्य द्वित्वम्। २ सुसमिद्धाय। अत्र भाविभ्यः स प समानपदे ( शु. य प्रा. ३ अ. ५६ सू. ) इत्यनेन सुकारात्परस्य सकारस्य पकारे प्राप्ते अनुसन्तनोतु बृहस्पतिसुतस्यसुसमिद्धाय० ( शु. य. प्रा. ३ अ. ८२ क. ) इत्यनेन सकारस्य प्रकृतिभावः न षत्वम्।

भूर्भुवः स्वर्द्यौरिव भूम्ना पृथिवीव वरिम्णा ॥ तस्यास्ते पृथिवि दे
वयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ॥५॥ आयम् ॥ आयङ्गौः
पृश्निरक्रमीदसदन्मातरं पुरः ॥ पितरञ्च प्रयन्त्स्वः ॥ ६ ॥
अन्तश्चरति । रोचनास्य प्राणादपानती ॥ व्यख्यन्महिषो दि
वम् ॥ ७ ॥ त्रिंशद्धाम ॥ त्रिंशद्धाम विराजति वाक्[1]पतङ्गाय धी
यते ॥ प्रति वस्तोरह द्युभिः ॥८॥ [४-२] अग्निर्ज्योतिः ॥ अ

---

१ वाक्पति । अत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र ( शु य प्रा. ४ अ १०० सू. ) इत्यनेन ककारस्य द्वित्वम्, तत्र पूर्व. ककारो द्विरुक्तिज. पकार प्रयोग ।

ग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्य्यो ज्योतिर्ज्योतिः सूर्य्यः
स्वाहा ॥ अग्निर्वर्च्चो ज्योतिर्वर्च्चः स्वाहा सूर्य्यो वर्च्चो ज्योतिर्वर्च्चः
स्वाहा ॥ ज्योतिः सूर्य्यः सूर्य्यो ज्योतिः स्वाहा ॥ ९ ॥ सजूर्द्दे
वेन । सवित्रा सजूरात्र्येन्द्रवत्या ॥ जुषाणो ऽअग्निर्वेतु स्वाहा ॥
सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या ॥ जुषाणः सूर्य्यो वेतु स्वाहा
॥ १० ॥ [ २-३ ] उपप्रयन्तो ऽअध्वरम् ॥ उपप्रयन्तो ऽअध्वर ॥ १६ ॥

१ उपप्रयन्तोऽअद्ध्वरम् अत्र एदोत्त्या पूर्वमकार. ( शु. य. प्रा. ४ अ. ६१ सू. ) इत्यनेन सर्वत्र पूर्वरूपे प्राप्ते प्रकृतिभाव ऋक्षु ( शु. य. प्रा. ४ अ. ८१ सू. ) इत्यनेन गाहमानादिभिः सूत्रैरभिनिहितेभ्योऽन्यत्र ऋक्षु प्रकृतिभावविधानसामर्थ्यान्न पूर्वरूपम् ।

म्मन्त्रँवोचेमाग्नयेँ ॥ आरेऽअस्म्मेचँशृण्णवुते ॥ ११ ॥ अग्नि
र्म्मूर्द्धा । दिवः[1]कुकुत्पतिं÷पृथिव्याऽअयम् ॥ अपाꣳरेताꣳसि
जिन्न्वति ॥ १२ ॥ उभावाम् ॥ उभावामिन्द्राग्नीऽआहुवद्ध्या
ऽउभाराधंसꣳसुहमादुयद्ध्यै ॥ उभादातारांविषाꣳरयीणामुभा
वाजंस्यसातयेँहुवेवाम् ॥ १३ ॥ अयन्ते ॥ अयन्तेयोनिर्र्ऋुत्त्वि
योयतोजातोऽअरोचथाः ॥ तञ्जानन्नग्न्नऽआरोहाथांनोवर्द्धया

1 दिव ककुत्पति । अन दिवोऽककुप्पृथिव्यो (शु. य प्रा ३ अ. २४ सू ) इत्यनेन अक्कुत्पृथिव्योर्विसर्जनीयस्य सकारविधानात्र सकार ककुत्परत्वात् ।

रयिम् ॥ १४ ॥ अयमिह । प्प्रथमोधायिधातृभिर्होतायजिष्ठो
ऽअद्ध्वरेष्ष्वीड्यः ॥ यमप्प्नवानोभृगवोविरुरुचुर्व्वनेषुचित्रंव्वि
भ्भ्वंव्विशेविशे ॥ १५ ॥ अस्यप्प्रत्काम् ॥ अस्यप्प्रत्नामनुद्युतꣳ
शुक्रन्दुदुह्रेऽअह्रयः ॥ पयःसहस्स्रसामृषिम् ॥ १६ ॥ तनूपाऽ
अग्ग्नेसितन्न्वम्मेपाह्यायुर्द्दाऽअग्ग्नेस्यायुर्म्मेदेहिव्वर्च्चोदाऽअग्ग्ने
सिव्वर्च्चोमेदेहि ॥ अग्ग्नेयन्म्मेतन्न्वाऽऊनन्तन्म्मऽआपृण ॥ १७ ॥ ॥१७॥
इन्धानास्त्वा । शतꣳहिमाद्द्युमन्तꣳसमिधीमहि ॥ व्वयंस्वन्तो

वयस्कृतꣳ सहस्वन्तꣳ सहस्कृतम् ॥ अग्ने सपत्नदम्भनमदब्धासोऽअदाभ्यम् ॥ चित्रावसो स्वस्ति ते पारमशीय ॥ १८ ॥ सन्त्वम् ॥ सन्त्वमग्ने सूर्यस्य वर्च्चसागथाꣳ समृषीणाꣳ स्तुतेन ॥ सम्प्रियेण धाम्ना समहमायुषा संवर्च्चसा सम्प्रजया सꣳ रायस्पोषेण ग्मिषीय ॥ १९ ॥ अन्धस्स्थ ॥ अन्धस्स्थान्धो वो भक्षीय महस्स्थ महो वो भक्षीयोर्ज्जस्स्थोर्ज्जं वो भक्षीय रायस्पोषं

१ अन्धस स्थ इतिपदे प्रत्ययसवर्णम्मुदि शाकटायन. ( ३ अ. ९ क ) इत्यनेन शषसेषु मुत्सञ्ज्ञकेषु परेषु विसर्गस्य परसवर्णं भवति तन्ने सकारे मुदि परसवर्णं प्राप्त परन्तु जित्परे मुदि तु लुड्ड्मुदि जित्परे ( ३ अ १३ क. ) इत्यनेन स्थे जित्परे मुदि सति विसर्गस्य लोप. । तत ऊष्मान्तस्थाभ्यश्च स्पर्श ( ४ अ. १०२ क ) इत्यनेन द्वित्वे पस्य चर्त्वे अन्धस्स्थ इति ॥

स्त्थरायस्पोषंवोभक्षीय ॥ २० ॥ रेवतीरमध्वम् ॥ रेवतीरम
ध्वमस्मिन्योनावस्मिन्गोष्ठेस्मिँल्लोकेस्मिन्क्षये ॥ इहैव
स्त्तमापगात ॥ २१ ॥ संहितासि । विश्वरूप्यूर्जामाविश
गौपत्येन ॥ उपत्वाग्नेदिवेदिवेदोषावस्त्तर्द्धियावयम् ॥ नमोभ
रन्तऽएमसि ॥ २२ ॥ राजन्तमध्वराणाम् ॥ राजन्तमध्वराणाङ्गो
पामृतस्यदीदिविम् ॥ वर्द्धमानꣳस्वेदमे ॥ २३ ॥ सनः ॥ सनः
पितेवसूनवेग्नेसूपायनोभव ॥ सचस्वानःस्वस्त्तये ॥ २४ ॥

अग्नेत्त्वम् ॥ अग्नेत्त्वन्नोऽअन्तमऽउतत्त्राताशिवोभवाव्वरूत्थ्यः ॥ व्वसुरग्निर्व्वसुश्श्रवाऽअच्छानक्षिद्युमत्तमꣳरयिन्दाः ॥ २५ ॥ तन्त्वा ॥ तन्त्वाशोचिष्ठदीदिवꣳसुम्नायनूनमीमहे सखिब्भ्यः ॥ [1]सनोबोधिश्श्रुधीहवमुरु[2]ष्याणोऽअघायतꣳसमस्म्मात् ॥२६॥ इडऽएहि ॥ इडे[3]ऽएह्यदितऽएहिकाम्म्याऽएत ॥

१ स. नो वोधि । अत्र व्यञ्जने च ( शु य. प्रा २ अ. १६ सू ) इत्यनेन सः इति पदस्य विसर्जनीयस्य लोपे सनोबोधि इति सिध्यति । २ उरुष्याण । अत्र उरुष्यान इति पदम् । अत्र निपण्णायरथवाहणमिन्द्र० ( शु य प्रा ३ अ ८७ सू ) इत्यनेन नकारस्य णकारे, स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र ( शु य. प्रा ४ अ १०० सू ) इत्यनेन षस्य द्वित्वम् । ३ इडेएहि इतिपदम् । अत्र सन्ध्यक्षरमयवायावम् ( शु य प्रा. ४-अ-४७ सू ) इत्यनेन इडे इति एकारस्य अयादेशे यवयो पदान्तयो स्वरमध्ये लोप ( ४ अ १२५ सू ) इत्यनेन यकारस्य लोपे पुन. स्वरसन्धिप्राप्तौ "न परकाल" ( शु य प्रा ३ अ ४ सू ) इति निषेध ।

मयिवंकामधरंणम्भूयात् ॥ २७ ॥ सोमानंस्वरंणं । कृणु
हिब्रंह्मणस्पते ॥ कक्षीवंन्तुंयऽऔशिजः ॥ २८ ॥ योरेवान् ॥
योरेवान्योऽअंमीवहावंसुवित्पुष्टिवर्द्धनः ॥ सनंःसिषक्तुय
स्तुरः ॥ २९ ॥ मानंः ॥ मानंःशंसोऽअरंरुषोधूर्त्तिः प्रण
ङ्मर्त्यस्य ॥ रक्षांणोब्रह्मणस्पते ॥ ३० ॥ महित्रीणाम् ॥

१ "पुष्टिवर्द्धन." अत्र ऊष्मान्तस्थाभ्यश्च स्पर्शः ( शु य. प्रा. अ सू १०२ ) इति सूत्रेण पुष्टिपदे शषसहानां चतुर्णां वर्णानाम् ऊष्मसञ्ज्ञात्वात् षकारोष्मणः परस्य स्पर्शसञ्ज्ञकस्य टकारस्य द्वित्वं जातम् । तेनैकषकारो द्वौ टकारौ च संयोगः । तत्र प्रथमष्टकारः क्रमजो ज्ञेयः । अन्येष्वप्येतादृशेषु स्थलेषु द्वित्वं बोध्यम् । तथैव पुष्टिवर्द्धन इत्यत्र वर्द्धनः इति पदे पर तु रेफहकाराभ्याम् ( ४-१०१ ) इत्यनेन रकारोत्तरवर्तिनः धव्यञ्जनस्य द्वित्वे जश्त्वे धकारस्य दकारः । २ रक्षाणः । रक्षा नः इतिपदम् । अत्र निपणणाय रथवाहणम् ( शु. य. प्रा. ३ अ. ८७ सू. ) इत्यनेन नकारस्य णकारो निपात्यते ।

महित्रीणामवोस्तु द्युक्षम्मित्रस्यार्य्यम्णः ॥ दुराधर्षंव्वरुणस्य ॥ ३१ ॥ नहितेषामम् ॥ नहितेषाममाचनन्नाध्वसुव्वारणेषु ॥ ईशे रिपुरघशंसः ॥ ३२ ॥ तेहि । पुत्रासोऽअदितेः प्प्रजीवसेमर्त्याय ॥ ज्योतिर्य्यच्छन्त्यजस्रम् ॥३३॥ कदाचन । स्तरीरसिनेन्द्रसश्चसिदाशुषे ॥ उपोपेन्नुमघवन्भूयऽइन्नुतेदानन्देवस्य पृच्यते ॥ ३४ ॥ तत्सवितुः ॥ तत्सवितुर्व्वरेण्यम्भर्गोदेवस्य धीमहि ॥ धियोयोनः प्प्रचोदयात् ॥ ३५ ॥ शतम् ॥ १०० ॥

पारीते । [1]दूडभोरथोस्म्माँ२ ॥ ऽअश्नोतुविश्वतः ॥ येनुरक्ष
सिदाशुषः ॥ ३६ ॥ [२६-४] भूर्भुवः ॥ भूर्भुवस्वः
[2]सुप्प्रजाः प्प्रजाभिः स्याᳬसुवीरोव्वीरैः सुपोषः पोषैः ॥ नर्य्य
प्प्रजाम्मेपाहिशᳬस्यपशून्मेपाह्यथर्य्यपितुम्मेपाहि ॥३७॥
आगन्म । विश्ववेदसमुस्म्मभ्यंव्वसुवित्तमम् ॥ अग्ग्नेसम्म्राड
भिद्युम्म्नमुभिसहऽआयच्छस्व ॥ ३८ ॥ अयमग्ग्निः ॥ अय

---

१ दूडभो रथ । दु दभ. इतिपदम् अत्र "उकार दुर्दे ( शु. य. प्रा. ३ अ. ४२ सू )" इत्यनेन दुरित्यस्य विसर्गस्य उकारो दकारे परे दन्त्यश्च मूर्धन्यत्वमापद्यते। तेन दकारस्य उकारे दस्य मूर्धन्ये टुडडभ. । सवर्णयोरुकारयो. सवर्णदीर्घ. । २ सुप्प्रजा. अत्र "स्वरात्सयोगादिर्द्विरुच्यते सर्वत्र ( ४ अ. १०० सू )" इत्यने प्रजाशब्दघटितप्रकारे परे पकारस्य द्वित्वम् । एव वरेण्ण्यम् । पुन्नास । द्युम्म्नम् एतादृशेपु स्थलेपु ज्ञेयम् ।

मग्निर्गृहपतिर्गार्हपत्त्यᳲप्रजायांव्वसुवित्तमᳲ ॥ अग्नेगृहपते
भिद्युम्नमभिसहऽआयच्छस्व ॥ ३९ ॥ अयमग्निः ॥ अय
मग्निःपुरीष्ष्योरयिमान्पुष्टिवर्द्धनᳲ ॥ अग्नेपुरीष्ष्याभिद्युम्न
मभिसहऽआयच्छस्व ॥ ४० ॥ [ ४-५ ] गृहामा । बिभीतमा
वेपद्धमूर्ज्जम्बिब्भ्रतऽएमसि ॥ ऊर्ज्जम्बिब्भ्रद्वᳲसुमनाᳲ सुमेधा
गृहानैमिमनसामोदमानᳲ ॥ ४१ ॥ येषामद्ध्येति । प्प्रवसन्न्येषु

1 "प्रवसन्न्येषु" इत्यत्र "स्वरात्संयोगादेर्द्विरुच्यते सर्वत्र ( १०० शु. य. प्रा. ४ अ सू. )" इत्यनेन नकारस्य द्वित्वम् ।

सौमनुसोबुहुः ॥ गृहानुपंह्वयामहेतेनोंजानन्तुजानुतः ॥४२॥
उपंहूताऽइह । गावुऽउपंहूताऽअजाुवयंः ॥ अथोऽअन्नंस्य
कीलालुऽउपंहूतोगृहेषुंनः ॥ क्षेमांयवःशान्त्यैप्रपंद्येशिवꣳ
शुग्मꣳशंुय्योःशंुय्योः ॥ ४३ ॥ [ ३-६ ] प्रघासिनोंहवाम
हे । मुरुतंश्चरिशादंसः ॥ कुरम्भेणंसुजोषंसः ॥ ४४ ॥
यद्ग्रामे ॥ यद्ग्रामेयदरंण्येयत्सुभायाँय्यदींन्द्रिये ॥ यदेनं
श्चकृमावुयमिदन्तदवंयजामहेस्वाहां ॥ ४५ ॥ मोषूणंः ॥

मोषूणऽइन्द्रात्रपृत्सुदेवैरस्तिहि[2]ष्म्मातेशुष्मिन्नवयाः ॥ मह
श्चिद्यस्यमीढुषोयव्याहविष्म्मतोमरुतोवन्दतेगीः ॥४६॥ अक्र
न्कर्म्म । कर्म्मकृतंसहवाचामयोभुवा ॥ देवेब्भ्यकर्म्मकृ
त्वास्तमप्रेतसचाभुवः ॥ ४७ ॥ अवभृथनिचुम्पुण । निचेरुर
सिनिचुम्पुणः ॥ अवदेवैर्द्देवकृतमेनोयासिषमवमर्त्यैर्म्मर्त्यकृ
तम्पुरुराव्वणोदेवरि[3]षस्प्पाहि ॥ ४८ ॥ [५-७] पूर्णादर्व्वि ॥

---

१ मो पूग । अत्र मो पून. इतिपदम् । "निपणणाय रथवाहणम् ( ३ अ ८७ सू )" इत्यनेन णकारस्य निपात । २ हिष्माते । अत्र हेर्मिथोदय ( ३ अ ९८ सू ) इत्यनेन मकारोदये हिशब्दात्परस्य सकारस्य षकार । तत "ऊष्मान्तस्थाभ्यश्च स्पर्श" इति द्वित्वम् । ३ देवरिषस्पाहि । अत्र "अध्वनो रजसो रिप स्पृशस्पातौ ( ३ अ २८ सू )" इत्यस्मिन् पातौ इति धातुग्रहणात् पाधातो रूपे परेऽपि रिप विसर्गस्य सकार । तत ऊष्मान्तस्थाभ्यश्च स्पर्श ( ४ अ १०२ सू ) इत्यनेन पकारस्य द्वित्वम् ।

पूर्ण्णादर्व्विपरापतसुपूर्ण्णापुनरापत । व्वस्नेवव्विक्क्रीणावहाऽइष
मूर्ज्जᳬशतक्क्रतो ॥ ४९ ॥ देहिमे ॥ देहिमेददामितेनिमेधेहि
न्नितेदधे ॥ न्निहारंव्वहरासिमेन्निहारन्निहराणितेस्वाहा ॥ ५० ॥
[२-८] अक्षन्नमीमदन्त ॥ अक्षन्नमीमदन्तह्यवप्प्रियाऽअ
धूषत ॥ अस्तोषतस्वभानवोव्विप्प्रानविष्ठयामतीयोजान्विन्द्र
तेहरी ॥ ५१ ॥ सुसन्दृशन्त्वा ॥ सुसन्दृशन्त्वाव्वयम्मघवन्व

१ सुसन्दृशम् । अत्र "भाविभ्य· सः प समानपदे (३ अ. ५९ सू)" इत्यनेन पत्वापत्तौ "अनुसन्तनोतु बृहस्पतिसुतस्यसुसमिद्धायसुसन्दृशम्" (शु. य. प्रा ३ अ ८२ सू) इत्यनेन प्रकृतिभाव न पत्वम् ।

न्दिषीमहि ॥ प्रनूनम्पूर्णबन्धुरस्तुतोयासिवशाँ २ ॥ ऽअनु
योजान्विन्द्रतेहरी ॥ ५२ ॥ मनोन्नु ॥ मनोन्वाह्वामहेनारा
शꣳसेनस्तोमेन ॥ पितृणाञ्चमन्मभिꣳ ॥ ५३ ॥ आन÷ ॥
आनऽएतुमनꣳपुनꣳक्रत्वेदक्षायजीवसे ॥ ज्योक्चसूर्य्यन्दृशे
॥ ५४ ॥ पुनर्नꣳ । पितरोमनोददातुदैव्योजन÷ ॥ जीवंव्रा
तꣳसचेमहि ॥ ५५ ॥ व्वयꣳसोम । व्रतेतवमनस्तनूषुबिभ्रं
तꣳ ॥ प्रजावन्तꣳसचेमहि ॥ ५६ ॥ [६-९] एषते । रुद्र

भागः सह स्वस्राम्बिकया तञ्जुषस्व स्वाहैष ते रुद्र भागऽआखुस्ते[1]

पशुः ॥ ५७ ॥ अवरुद्रम् ॥ अवरुद्रमदीमह्यवदेवन्त्र्यम्बकम् ॥

यथानो वस्यसस्करद्[2]यथानः श्रेयसस्करद्[3]यथानो व्यवसाययात्

॥ ५८ ॥ भेषजमसि । भेषजङ्गवेऽश्वाय पुरुषाय भेषजम् ॥

सुखम्मेषाय मेष्यै ॥ ५९ ॥ त्र्यम्बकँ यजामहे । सुगन्धिम्पु



---

१ आखु.ते। अत्र "तथयोः सम् ( ३ अ ८ सू )" इत्यनेन तकारे परे सत्वे आखुस्ते इति रूपम्। २ वस्यसस्करत् अत्र "समानपदे च ( ३ अ. ३० क. )" इत्यप्राप्तौ "कविष्करत्कृधिषु ( ३ अ. ३२ सू. )" इत्यनेन करत्परे विसर्जनीयस्य सकारः। तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" इति ककारस्य द्वित्वम्। ३ श्रेयसस्करत् अत्र "समानपदे च ( ३ अ. ३० सू )" इत्यनेन समानपदे विसर्गस्य ककारे परे सकारः। तत "ऊष्मान्तस्थाभ्यश्च-स्पर्शः ( ४ अ. १०२ सू. )" इत्यनेन ककारस्य द्वित्वम्।

ष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥
त्र्यम्बकँय्यजामहेसुगन्धिम्पतिवेदनम् ॥ उर्व्वारुकमिवबन्धं
नादितोमुक्षीयमामुतः ॥ ६० ॥ एतत्ते । रुद्रावसन्तेन
परोमूजवतोतीहि ॥ अवततधन्न्वापिनाकावसः कृत्तिवासाऽ
अहिंसन्नः शिवोतीहि ॥ ६१ ॥ त्र्यायुषञ्जमदग्ग्नेः कश्य
पस्यत्र्यायुषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥६२॥
शिवोनाम ॥ शिवोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमा

माहिꣳसीः ॥ निवर्त्तयाम्म्यायुषेन्नाद्याय प्रजननाय रायस्पो
षाय सुप्रजास्त्वाय सुवीर्य्याय ॥ ६३ ॥ १० ॥ [७-१०]
इतिश्रीवाजसनेयसंहितायांतृतीयोऽध्यायः ॥ ३ ॥ श्रीवेदपुरु
षायनमः ॥ अनुवाकसूत्रम् ॥ एदंद्वे, महीनाम्पयश्चतस्र, आकू
त्याऋक्सामयोर्द्विकौ, व्रतंकृणुतषड्, एषाते चतस्रो, वस्व्य
सितिस्र, एषतेद्वे, शुक्रंत्वाचतस्रो, ऽऽदित्यास्त्वगष्टौ, दश सप्त
त्रिꣳशत् ॥ १० ॥ ३७ ॥ ४ ॥ हरिः ॐ ॥ एदम् ॥ ऐदमगन्म[1]

१ एदमगन्। अत्र आ इदम् अत्र "कण्ठ्यादिवर्णे एकारम् (४ अ. ५३ सू.)" इत्यनेन कण्ठ्यात्पर. इवर्णः पूर्वस्वर परश्च एकारमापद्यते। तेन एदमगन्।

देवयजनम्पृथिव्यायत्रदेवासोऽअजुषन्तविश्वे ॥ ऋक्सामा
भ्यांꣳसन्तरन्तोयजुर्भीरायस्पोषेणसमिषामदेम ॥ इमाऽ
आपꣳशमुमेसन्तुदेवीरोषधेत्रायस्वस्वधितेमैनꣳहिꣳसीः[1] ॥ १ ॥
आपोऽअस्मान् ॥ आपोऽअस्मान्मातरः[2]शुन्धयन्तुघृतेन
नोघृतप्वः पुनन्तु ॥ विश्वꣳहिरिप्रम्प्रवहन्तिदेवीरुदिदाभ्यः

१ हिसी. । ( हिꣳसी ) अत्र अनुस्वाराच्च तत्पूर्वात् ( शु य. प्रा ३ अ. ५७ सू. ) इत्यनेन पकारापत्तौ अनुसन्तनोतु ( शु य प्रा ३ अ ८२ सू. ) इत्यनेन प्रकृतिभावे अथानुस्वारस्य गूमित्यादेश शपसहरेफेषु ( शु य प्रा. परिशिष्ट सू. ) इत्यनेन अनुस्वारस्य दीर्घगूत्वम् । २ शुन्धयन्तु । अन स्वरात्० इति सूत्रेण द्वित्वे प्राप्तेऽपि स्ववर्गीये चानुत्तमे ( शु य प्रा ४ अ. ११५ सू. ) इत्यनेन स्ववर्गीये द्वित्वनिषेधादत्र नकारात्परे स्ववर्गीये धकारे नकारस्य न द्वित्वम् । एवमेवैतादृशेषु स्थलेषु ज्ञेयम् । यथा पुनन्तु । शान्ति. । माच्छन्दः । सन्तु । अन्तरिक्षात् । अजुषन्त । सन्तरन्त. ।

शुचिरापूतऽएमि ॥ दीक्षातपसोस्तनूरसितान्त्वाशिवाꣳश
ग्ग्मांम्परिदधेभद्रंव्वर्णम्पुष्ष्यन् ॥२॥ [२-१] महीनाम्पयः ॥
महीनाम्पयोसिव्वर्च्चोदाऽअसिव्वर्च्चोमेदेहि ॥ वृत्रस्यासिकनीन
कश्चक्षुर्दाऽअसिचक्षुर्म्मेदेहि ॥ ३ ॥ चित्पतिर्म्मा ॥ चित्पति
र्म्मापुनातुव्वाक्पतिर्म्मापुनातुदेवोमासवितापुनात्वच्छिद्रेणप
वित्रेणसूर्य्यस्यरश्मिभिः ॥ तस्यंतेपवित्रपतेपवित्रपूतस्यय
त्कामंपुनेतच्छकेयम् ॥४॥ आवः ॥ आवोदेवासऽईमहेव्वामम्प्र

१ पुष्ष्यन् । अत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र (शु. य. प्रा. -अ. १०० सू.) इत्यनेन षकारस्य द्वित्वम् ।

युत्त्युद्धरे ॥ आवोदेवासऽआशिषोयज्ञियांसोहवामहे ॥ ५ ॥
स्वाहायज्ञम् ॥ स्वाहायज्ञम्मनंसःस्वाहोरोरन्तरिक्षात्त्स्वाहा
द्यावापृथिवीब्भ्याᳬंस्वाहाव्वातादारंभेस्वाहा ॥ ६ ॥ [४-२]
आकूत्त्यैप्प्रयुजे ॥ आकूत्त्यैप्प्रयुजेग्ग्नयेस्वाहामेधायैमनंसेग्ग्न
येस्वाहादीक्षायैतपसेग्ग्नयेस्वाहासरंस्वत्त्यैपूष्णेग्ग्नयेस्वाहा ॥
आपोदेवीर्बृहतीर्व्विश्श्वशम्भुवोद्यावापृथिवीऽउरोऽअन्तरिक्ष ॥
बृहस्प्पतयेहविषाव्विधेमस्वाहा ॥ ७ ॥ व्विश्श्वोदेवस्य ॥ व्विश्श्वो

देवस्यनेतुर्म्मर्त्तोवुरीतसख्यम् ॥ विश्वोरायऽइषुध्यतिद्युम्नंवृ
णीतपुष्यसेस्वाहा ॥८॥ [२-३] ऋक्सामयोःशिल्पे ॥ ऋक्सा
मयोःशिल्पेस्त्थस्तेवामारभेतेमापातमास्ययज्ञस्योदृचः ॥ श
र्म्मासिशर्म्ममेयच्छनमस्तेऽअस्तुमामाहिꣳसीः ॥ ९ ॥ ऊर्ग्ग
सि ॥ ऊर्ग्गस्याङ्गिरस्यूर्ण्णम्रदाऽऊर्ज्जंमयिधेहि ॥ सोमस्यनी
विरसिविष्णोःशर्म्मासिशर्म्मयजमानस्येन्द्रस्ययोनिरसिसुस
स्याःकृषीस्कृधि ॥ उच्छ्रयस्व[illegible]मतऽऊर्ध्वोमापाह्यꣳहसऽ

आस्यय॒ज्ञस्योद्दृचं॑÷ ॥ १० ॥ [२-४] व्र॒तङ्कृ॑णुत । व्र॒तङ्कृ॑णुता
ग्निर्ब्रह्माग्निर्य॒ज्ञो वन॒स्पति॑र्य॒ज्ञियं॑÷ ॥ दैवीन्धियं॑म्मनाम
हेसुमृडीका॒मभिष्टं॑ये वर्चो॒धाँ॑ य॒ज्ञवा॑हसꣳसुती॒र्त्था नोऽअस॒द्व
शे॥ येदे॒वा मनो॒जाता॑मनो॒युजो॒दक्ष॑क्क्रतवस्ते नो॑वन्तु ते नः॑÷ पान्तु
तेभ्य॒ꣳस्वाहा॑ ॥ ११ ॥ श्वा॒त्त्राः॑पीताः॒ ॥ श्वात्त्राः॑पीता॑भवतयू॒य
मापोऽअ॒स्माक॑म॒न्तरु॒दरे॑सु॒शेवाः॑÷ ॥ ताऽअ॒स्मभ्य॑मय॒क्ष्मा

१ अत्र वृनम् कृणुत इति पदम् । स्पर्शे परपञ्चमम् (शु य. प्रा. ४ अ. १२ सू ) इत्यनेन मकारस्य स्पर्शवर्णपरे स्पर्शवर्णस्य पञ्चमाक्षरो भवति तेन ङकार । एतन्ते तत्र नकार ।

ऽअनमीवाऽअनागसः स्वदन्तुदेवीरमृताऽऋतावृधः ॥ १२ ॥
इयन्ते । यज्ञियांतनूरपोमुञ्चामिनप्प्रजाम् ॥ अँहोमुचः
स्वाहाकृताः पृथिवीमाविशतपृथिव्यासम्भव ॥ १३ ॥ अग्ने
त्वम् ॥ अग्नेत्वँसुजागृहिवयँसुमन्दिषीमहि ॥ रक्षाणोऽ
अप्प्रयुच्छन्प्रबुधेनः पुनस्कृधि ॥ १४ ॥ पुनर्मनः ॥ पुनर्मनः पु
नरायुर्मऽआगन्पुनः प्प्राणः पुनरात्मामऽआगन्पुनश्चक्षुः

१ पुनस्कृधि । अत्र ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु य. प्रा. ४ अ १०२ सू ) इत्यनेन ककारस्य द्वित्वे प्राप्ते ऋवर्णे ( शु य प्रा ४ अ १११ सू ) इत्यनेन ऋवर्णपरे स्पर्शो निषेधान्न ककारस्य द्वित्वम् । यत्र यत्र ऊष्मभ्योऽन्तःस्थेभ्यश्च परः स्पर्शवर्णः ऋविशिष्टश्चेत्तत्र तत्र द्वित्वाभावो ज्ञेय । यथा-कृपीस्कृधि ।

पुनःश्रोत्रम्मऽआगन् ॥ वैश्वानरोऽअदब्धस्तनूपाऽअग्निर्न्नः
पातुदुरितादवद्यात् ॥ १५ ॥ त्वमग्ने । व्रतपाऽअसिदेवऽ
आमर्त्त्येष्ष्वा ॥ त्वँय्यज्ञेष्ष्वीड्यः ॥ रास्वेयत्सोमाभूयो
भरदेवोनःसविताव्वसोर्द्दाताव्वस्वदात् ॥ १६ ॥ [ ६-५ ]
एषाते । शुक्रतनूरेतद्वर्च्चस्तयासम्भवभ्राजङ्गच्छ ॥ जूरसि
धृतामनसाजुष्टाव्विष्णवे ॥ १७ ॥ तस्यास्ते । सत्यसवसः
प्प्रसवेतन्न्वोयन्त्रमशीयस्वाहा ॥ शुक्रमसिचन्द्रमस्यमृतमसिवै

श्वदे॒वमा॑सि ॥ १८ ॥ चिद॑सि । म॒नासि॒धीर॑सि॒दक्षि॑णासिक्ष॒
त्रि॒यासि॑य॒ज्ञियास्यदि॑तिरस्युभय॒तःशी॒र्ष्णी ॥ सानः॒सुप्प्राची॒
सुप्प्रतीच्च्येधि॒मि॒त्रस्त्वा॑प॒दिब॑ध्नीता॒म्पूषाद्ध्व॑नस्प्पा॒त्विन्द्राया॑
द्ध्यक्षाय ॥ १९ ॥ अनु॑त्त्वा । मा॒ताम॑न्न्यता॒मनु॑पि॒तानु॒भ्भ्राता॒
सग॑भ्भ्योनु॒सखा॒सयू॑त्थ्यः ॥ सादे॑वि॒दे॒वमच्छे॒हीन्द्रा॑य॒सोम॑ꣳरु॒
द्रस्त्वाव॑र्त्तयतुस्व॒स्त्तिसोम॑सखा॒पुन॒रेहि॑ ॥ २० ॥ [४-६]
व॒स्व्यसि ॥ व॒स्व्य॒स्यदि॑तिरस्यादि॒त्त्यासि॑रु॒द्रासि॑च॒न्द्रासि॑ ॥

बृहस्प्पतिष्ट्वासुम्म्नेरंम्म्णातुरुद्द्रोव्वसुंभिराचंके ॥ २१ ॥ अदि॑
त्यास्त्त्वा । मूर्द्धन्नाजिंघर्म्मिंदेवयजंनेपृथिव्याऽइडांयास्प्पद
मंसिघृतवत्त्स्वाहा ॥ अस्म्मेरंमस्वास्म्मेतेबन्धुस्त्वेरायोमेरायो
माव्वयहृरायस्प्पोषेंणव्वियौष्म्मतोतोरायं÷ ॥ २२ ॥ सम्मंख्ख्ये ।
देव्याधियासन्दक्षिंणयोरुचंक्षसा ॥ मामऽआयुःप्प्रमोषीम्म्मोऽ
अहन्तवंव्वीरंव्विंदेयतवंदेविसन्द्दृशि ॥ २३ ॥ [३-७] एषते ।

१ समख्ख्ये। भा स्वरात्सयोगा० (शु य प्रा. ४ अ. १०० सू.) इत्यनेन खकारस्य द्वित्वे जाते प्रथमैर्द्वितीयास्तृतीयैश्चतुर्थो (शु य प्रा ४ अ १०८ सू.) इत्यनेन खस्थाने ककारो विहित.।

गायत्त्रोभागऽइतिमेसोमायब्रूतादेषतेत्त्रैष्टुभोभागऽइतिमेसो
मायब्रूतादेषतेजागतोभागऽइतिमेसोमायब्रूताच्छन्दोनामा
नाꣳसाम्म्राज्ज्यङ्गच्छेतिमेसोमायब्रूतादास्म्माकोसिशुक्क्रस्ते
ग्ग्रह्योविचितस्त्वाविचिन्न्वन्तु ॥ २४ ॥ अभित्त्यम् ॥ अभि
त्त्यन्देवꣳसवितारमोण्ण्योः कविक्क्रतुमर्च्चामिसत्त्यसवꣳरत्नधा
मभिप्प्रियम्मतिङ्कविम् ॥ ऊर्द्ध्वायस्यामतिर्ब्भाऽअदिद्युतत्सवी



१ देवꣳसवितारमोण्ण्यो । अत्र देवम् इत्यस्य मकारस्य अनुस्वार रोष्मसु मकार. ( शु य प्रा. ४ अ-१ सू ) इत्यनेन उष्मणि सकारे परे अनुस्वारे अथानुस्वारस्य गुमित्यादेश. शषसहरेफेषु ( का प. १ सू ) इत्यनेन ( गुंकारे ) कृते गुंविशिष्टं रूपम् । एवम् उरुꣳहिराजा । अꣳहोमुचः । इत्यादिस्थलेषु गुंकारोऽनेन ज्ञेय. । वयꣳसुम. । अग्ने त्वꣳसुजा । सोमꣳरुद्रस्त्वा. ।

मनिर्हिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः ॥ प्रजाभ्यस्त्वा
प्प्रजास्त्वानुप्प्राणन्तुप्प्रजास्त्वमनुप्प्राणिहि ॥२५॥ [२-८]
शुक्रन्त्वा । शुक्रेणक्क्रीणामिचन्द्रञ्चन्द्रेणामृतममृतेन ॥ सग्ग्मे
तेगोरस्म्मेतेचन्द्राणितपसस्तनूरसिप्प्रजापतेर्व्वर्णःपरमेणप
शुनाक्क्रीयसेसहस्रपोषम्पुषेयम् ॥२६॥ मित्रोनः ॥ मित्रोनऽए
हिसुमित्रधऽइन्द्रस्योरुमाविशदक्षिणमुशन्नुशन्तᳫंस्योनःस्यो
नम् ॥ स्वानभ्भ्राजाङ्घारेबम्भारेहस्तसुहस्तकृशानवेतेवःसोम

क्षयंणास्त्वाक्रंक्षद्ध्मावोदभन्॥ २७॥ परिस्मा । ग्नेदुश्चंरिता
द्धाधस्वामासुचंरितेभज ॥ उदायुंषास्वायुषोदंस्थामृताँ२ ॥
ऽअनुं ॥ २८ ॥ प्रतिपन्थांम् ॥ प्रतिपन्थांमपद्महिस्वस्तिगा
मंनेहसंम् ॥ येनविश्वाःपरिद्विषोवृणक्तिविन्दतेवसु ॥ २९ ॥
[ ४-९ ] अदिंत्यास्त्वक् ॥ अदिंत्यास्त्वगस्यदिंत्यैसदऽआ
सींद ॥ अस्तंभ्नाद्यांवृषभोऽअन्तरिंक्षममिंमीतवरिमाणंपृ
थिव्याः ॥ आसींदद्विश्वाभुवंनानिसम्म्राड्विश्वेत्तानिवरुंणस्य

व्व्रतानि ॥ ३० ॥ व्वनेषुवि ॥ व्वनेषुव्यन्तरिक्षन्ततानुव्वाजम
र्व्वत्सुपयंऽउस्रियासु ॥ हृत्सुक्क्रतुंव्वरुणोव्विक्ष्वग्ग्निन्दिवि
सूर्य्यमदधात्सोममद्रौ ॥ ३१ ॥ सूर्य्यस्यचक्षुः ॥ सूर्य्यस्य
चक्षुरारोहाग्ग्नेरक्ष्णःकनीनकम् ॥ यत्रैतशेभिरीयसेभ्भ्राजमा
नोव्विपश्चिता ॥ ३२ ॥ उस्रावेतम् ॥ उस्रावेतन्धूर्षाहौयुज्ज्येथा
मनश्रूऽअवीरहणौब्ब्रह्मचोदनौ ॥ स्वस्तियजमानस्यगृहा

१ अत्र स्वरात्संयोगा० (शु य प्रा ४ अ १०० सू ) इत्यनेन द्वित्वे प्राप्ते न क्षवृचिश्विसतयेभ्यस्तैकम् (शु य प्रा ६ अ २७ सू ) इत्यनेनैतेभ्य परस्य त्रशब्दस्य द्वित्व न भवति तेन क्षत्र, वृत्र, चित्रम् । श्वित्रम्, सत्रस्य । तत्र गच्छ, यत्र पूर्वे । इत्येतेषु द्वित्वाभावो ज्ञेय ।

न्त्गांच्छतम् ॥ ३३ ॥ भुद्रोमे । सि॒प्प्रञ्च्यंवस्वभुवस्प्पते॒व्विश्श्वां
न्त्युभिधामांनि ॥ मात्त्वांपरिपुरिणोंव्विदुन्न्मात्त्वांपरिपुन्न्थिनों
व्विदुन्न्मात्त्वाव्वृकांऽअघायवोंव्विदन् ॥ श्येनोभूत्त्वापरांपतयज्
मांनस्यगृहान्त्गांच्छुतन्नौसँस्कृतम् ॥ ३४ ॥ नमोमित्रस्यं ॥ नमो
मित्रस्यव्वरुंणस्यचक्षंसेमुहोदेवायतदृतश्सपर्य्यत ॥ दूरेदृशेदेव
जांतायकेतवेदिवस्प्पुत्त्रायसूर्य्यायशश्सत ॥ ३५ ॥ व्वरुंणस्यो
त्तम्भंनम् ॥ व्वरुंणस्योत्तम्भंनमासिव्वरुंणस्यस्कम्भुसर्ज्जनीस्त्थो

व्वरुणस्यऽऋतसदंन्यसिव्वरुणस्यऽऋतसदंनमासिव्वरुणस्यऽऋत
सदंनमासींद ॥ ३६ ॥ यातें ॥ यातेधामानिहविषायजंन्ति
तातेव्विश्वांपरिभूरंस्तुयज्ञम् ॥ गयस्फानंः प्प्रतरंणः सुवीरो
वीरहाप्प्रचंरासोमदुर्य्यान् ॥ ३७ ॥ [ ८-१० ] इतिश्रीवाज
सनेयसंहितायांचतुर्थोऽध्यायः ॥ ४ ॥ श्रीवेदपुरुषायनमः ॥
अनुवाकसूत्रम्–अग्नेस्तनू,रापतयेत्वाचतुष्कौ,तपायनीमेद्वे,
इन्द्रघोषस्त्वास्तिस्रो, युंजतेमनाष्टौ, देवस्यत्वाचतस्रो, देव

स्यत्वापंच, विभूरसिचतस्रो, ज्योतिरासिष, ड्डुरुव्विष्णोतिस्रो,
दश त्रिचत्वारिꣳशत् ॥ [ अ. ५ मं. ४३-अनु० १० ] हरिःॐ ॥
अुग्नेस्तुनूः ॥ अुग्नेस्तुनूरसिुव्विष्णवेत्त्वासोमस्यतुनूरसिुव्वि
ष्णवेुत्त्वातिथेरातुित्थ्यमसिुव्विष्णवेत्त्वाश्श्येुनायत्त्वासोमु
भृतेुव्विष्णवेत्त्वुाग्नयेत्त्वारायस्प्पोषुदेव्विष्णवेत्त्वा ॥ १ ॥
अुग्नेर्ज्जनित्त्रम् ॥ अुग्नेर्ज्जनित्त्रमसिुवृषणौस्त्थऽउुर्व्वश्श्यस्युा
युरसिपुरूरवाऽअसि ॥ गुायत्त्रेणत्त्वुाच्छन्दसामन्थामित्रैष्टुभे

नस्त्वाच्छन्दसामन्थामिजागतेनत्वाच्छन्दसामन्थामि ॥ २ ॥
भवतन्नः ॥ भवतन्नःसमनसौसचेतसावरेपसौ ॥ मायज्ञꣳ
हिꣳसिष्टम्मायज्ञपतिञ्जातवेदसौशिवौभवतमद्यनः ॥ ३ ॥
अग्नावग्निः ॥ अग्नावग्निश्चरतिप्प्रविष्टऽऋषीणाम्पुत्रोऽअ
भिशस्तिपावा ॥ सनःस्योनःसुयजायजेहदेवेभ्योहव्यꣳ
सदमप्प्रयुच्छन्त्स्वाहा ॥ ४ ॥ [ ४-१ ] आपतयेत्त्वा ॥ आ
पतयेत्त्वापरिपतयेगृह्णामितनूनप्त्रेशाक्वरायशक्वनऽओजि

ष्टाय ॥ अनाधृष्टमस्यनाधृष्यन्देवानामोजोनभिशस्त्यभि
शस्तिपाऽअनभिशस्तेन्यमञ्जसासत्यमुपगेषꣳस्वितेमाधाः
॥ ५ ॥ अग्नेव्रतपाः ॥ अग्नेव्रतपास्त्वेव्रतपायातवतनूरियꣳ
सामयियोममतनूरेषासात्वयि ॥ सहनौव्रतपतेव्रतान्यनुमे
दीक्षान्दीक्षापतिर्म्मन्यंतामनुतपस्तपस्पातिः ॥ ६ ॥ अꣳ
शुरꣳशुष्टे । देवसोमाप्यायतामिन्द्रायैकधनविदे ॥ आतुभ्य
मिन्द्रःप्यायतामात्वमिन्द्रायप्यायस्व ॥ आप्याययास्मा

न्त्सखीन्त्सन्यामेधयास्वस्तितेदेवसोमसुत्यामशीय ॥ एष्टा
रायःप्प्रेषेभगायऽऋतमृतवादिब्भ्योनमोद्यावापृथिवीब्भ्याम्
॥ ७ ॥ यातें ॥ यातेऽअग्नेयःशयातनूर्वर्षिष्ठागह्वरेष्ठा ॥ उग्रं
वचोऽअपावधीत्त्वेषंवचोऽअपावधीत्स्वाहा ॥ यातेऽअग्नेरजः
शयातनूर्वर्षिष्ठागह्वरेष्ठा ॥ उग्रंवचोऽअपावधीत्त्वेषंवचोऽ
अपावधीत्स्वाहा ॥ यातेऽअग्नेहरिशयातनूर्वर्षिष्ठागह्वरेष्ठा ॥
उग्रंवचोऽअपावधीत्त्वेषंवचोऽअपावधीत्स्वाहा ॥ ८ ॥ [४-२]

तप्तायंनीमे ॥ तप्तायंनीमेसिवित्तायंनीमेस्यवतान्मानाथिता
दवतान्माव्यथितात् ॥ विदेदग्निर्न्नभोनामाग्नेऽअङ्गिरऽआयुं
नानाम्नेहियोस्याम्पृथिव्यामसियत्तेनाधृष्टन्नामंयज्ञियन्तेन
त्त्वादंधेविदेदग्निर्न्नभोनामाग्नेऽअङ्गिरऽआयुंनानाम्नेहियो
द्वितीयंस्याम्पृथिव्यामसियत्तेनाधृष्टन्नामंयज्ञियन्तेनत्त्वादंधे
विदेदग्निर्न्नभोनामाग्नेऽअङ्गिरऽआयुंनानाम्नेहियस्तृतीयं ॥३४॥
स्याम्पृथिव्यामसियत्तेनाधृष्टन्नामंयज्ञियन्तेनत्त्वादंधे ॥ अनुं

त्वा देववीतये ॥ ९ ॥ सिꣳहृयसि । सपत्नसाही देवेभ्यः कल्प
स्वसिꣳहृयसि सपत्नसाही देवेभ्यः शुन्धस्वसिꣳहृयसि सपत्न
साही देवेभ्यः शुम्भस्व ॥ १० ॥ [२-३] इन्द्रघोषस्त्वा ॥ इन्द्र
घोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु म
नोजवास्त्वा पितृभिर्दक्षिणतः पातु विश्वकर्मा त्वादित्यैरुत्तर
तः पात्विदमहन्तप्तं वार्बहिर्धा यज्ञान्निःसृजामि ॥ ११ ॥

---

१ अत्र अनुस्वार रोप्मसु मकार (शु य प्रा ४ अ० १ सू) इत्यनेन मकारस्यानुस्वारे कृते अथानुस्वारस्य गूमित्यादेश शपसहरेफेषु (शु य प्रा परिशि सू) इत्यनेन दीर्घगूकारे प्राप्ते नानुस्वार (शु य. प्रा ४ अ १०९ सू) इत्यनेन स्योन इति सयोगे परे सकारे न दीर्घगुकार किन्तु ह्रस्व ।

सि॒ꣳह्य॑सि ॥ सि॒ꣳह्य॑सि॒स्वाहा॑सि॒ꣳह्य॒स्या॑दि॒त्त्य॒वनि॒ꣳस्वाहा॑
सि॒ꣳह्य॑सि॒ब्ब्रह्म॒वनि॑ꣳ क्षत्त्र॒वनि॒ꣳस्वाहा॑सि॒ꣳह्य॑सि॒सुप्प्र॒जा॒व
नी॑रायस्पोष॒वनि॒ꣳस्वाहा॑सि॒ꣳह्य॒स्या॒वंह॒दे॒वान्न्य॒जमा॑नाय॒स्वा
हा॑भू॒तेब्भ्यं॑स्त्वा ॥ १२ ॥ ध्रु॒वो॑सि । पृ॒थि॒वीन्दृꣳ॑ह॒ध्रु॒व॒क्षि॒द॑स्य॒
न्तरि॑क्षन्दृꣳ॑हान्न्यु॒त॒क्षि॒द॑सि॒दिव॑न्दृꣳ॑हा॒ग्ग्नेः॑पुरी॑षमसि ॥ १३ ॥
[ ३-४ ] यु॒ञ्ज॒ते॒मनः॑ ॥ यु॒ञ्ज॒ते॒मन॑ऽउ॒तयु॑ञ्ज॒ते॒धियो॒व्विप्प्रा॒व्वि
प्प्र॑स्यबृह॒तो॒व्वि॑प॒श्चितः॑ ॥ व्विहोत्त्रा॑दधेव्वयुना॒विदेक॒ऽइन्म॒ही

देवस्यंसवितुःपरिंष्टुतिंस्वाहा ॥ १४ ॥ इदंविष्णुं॑ ॥ इदं
विष्णुर्विचंक्रमेत्रेधानिदंधेपदम् ॥ समूंढमस्यपाꣳसुरेस्वाहा
॥१५॥ इरावतीधेनुमती ॥ इरावतीधेनुमतीहिभूतꣳसूंयवसिनी
मनवेदशस्या ॥ व्यंस्कभ्नारोदंसीविष्णवेतेदाधर्त्थपृथिवीम
भितोमयूखैःस्वाहा ॥ १६ ॥ देवश्रुतौदेवेषु ॥ देवश्रुतौदेवेष्वा
घोषतम्प्राचीप्प्रेतंमध्वरङ्कल्पयंन्तीऽऊर्ध्वँय्यज्ञन्नंयतम्माजिह्व
रतम् ॥ स्वङ्गोष्ठमावंदतन्देवीदुर्य्येंऽआयुर्म्मानिर्वादिष्टम्प्रजा

1 अत्र रकारात्परस्य यकारस्य परतु रेफहकाराभ्याम् (शु य प्रा ४ अ. १०१ सू ) इत्यनेन द्वित्वम् ।

स्मानिर्व्वादिष्टमत्त्ररमेथांव्वर्ष्म्मन्पृथिव्याः ॥ १७ ॥ व्विष्णोर्न्नु । कंव्वीर्य्याणिप्प्रवोचँय्यः पार्त्थिवानिव्विममेरजाँसि ॥ योऽ अस्कभायदुत्तरँ सधस्त्थंव्विचक्रमाणस्त्रेधोरुगायोव्विष्णवे त्वा ॥ १८ ॥ द्दिवोवा । व्विष्णऽउतवापृथिव्यामहोवाव्वि ष्णऽउरोरन्तरिक्षात् ॥ उभाहिहस्ताव्वसुनापृणस्वाप्प्रयच्छद क्षिणादोतसव्याद्विष्णवेत्त्वा ॥ १९ ॥ प्रतत् ॥ प्रतद्विष्णु



१ अत्र ऊष्मान्तस्थास्थश्च स्पर्शः. ( शु य प्रा. ४ अ १०२ सू ) इत्यनेन द्वित्वम् ॥ यथा–विष्णाऽउत वा । विष्णऽ उरोर० । द्विष्णवे त्वा । प्रतद्विष्णु. । विष्णोरराटम् । इत्यादिषु बोध्यम् ।

स्तवतेव्वीर्य्येणमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषु
व्विक्क्रमणेष्ष्वधिक्षियन्तिभुवनानिव्विश्श्वा ॥ २० ॥ व्विष्ण्णोरररा
टम् ॥ व्विष्ण्णोरराटमसिव्विष्ण्णोःश्नप्त्रेस्त्थोव्विष्ण्णोःस्यूर
सिव्विष्ण्णोर्द्ध्रुवोसि ॥ व्वैष्ण्णवमसिव्विष्ण्णवेत्त्वा ॥२१॥ [८-५]
देवस्यत्त्वा । सवितुःप्प्रसवेश्श्विनोर्बाहुब्भ्याम्पूष्ण्णोहस्त्ता
ब्भ्याम् ॥ आददेनार्य्यसीदमहंरक्षसाङ्ग्रीवाऽअपिकृन्तामि ॥
बृहन्नसिबृहद्रवाबृहतीमिन्द्रायवाचंव्वद ॥ २२ ॥ रक्षोहणंव्व

लगहनम् ॥ रक्षोहणंव्वलगहनंव्वैष्णवीमिदमहन्तंव्वलगमुत्कि
रामियम्मेनिष्ट्योयममात्योनिचखानेदमहन्तंव्वलगमुत्किरा
मियम्मेसमानोयमसमानोनिचखानेदमहन्तंव्वलगमुत्किरा
मियम्मेसबन्धुर्यमसबन्धुर्निचखानेदमहन्तंव्वलगमुत्किरा
मियम्मेसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि ॥२३॥
स्वराडसि । सपत्नहासत्रराडस्यभिमातिहाजनराडसिरक्षोहा ॥ ३७ ॥
सर्वराडस्यमित्रहा ॥ २४ ॥ रक्षोहणोवः ॥ रक्षोहणोवो

लगुहनं प्प्रोक्षामिव्वैष्णुवान्रक्षोहणौवोव्वलगुहनोवनयामिव्वै
ष्णुवान्रक्षोहणौवोव्वलगुहनोवंस्तृणामिव्वैष्णुवान्रक्षोहणौवां
व्वलगुहनाऽउपदधामिव्वैष्णुवीरक्षोहणौवांव्वलगुहनौपर्य्यूहा
मिव्वैष्णुवीव्वैष्णुवमंसिव्वैष्णुवास्त्थ ॥ २५॥ [ ४-६ ] देवस्य
त्वा । सवितुः प्प्रसवेश्विनोर्ब्बाहुब्भ्यां पूष्णोहस्ताब्भ्याम् ॥
आददेनार्य्यसीदमहꣳ रक्षसाङ्ग्रीवाऽअपिकृन्तामि ॥ सवोसि
सुवयास्म्मद्द्वेषोसुवयारातीर्हिवेत्त्वान्तरिक्षायत्त्वापृथिव्यैत्त्वा

शुन्धन्ताँल्लोकाःपितृषदनाःपितृषदनमसि ॥ २६ ॥ उद्दि
वम् ॥ उद्दिवꣳस्तभानान्तरिक्षम्पृणदृꣳहस्वपृथिव्यान्द्युतान
स्त्वामारुतोमिनोतुमित्रावरुणौध्रुवेणधर्म्मणा ॥ ब्रह्मवनि
त्वाक्षत्रवनिरायस्पोषवनिपर्य्यूहामि ॥ ब्रह्मदृꣳहक्षत्रन्दृꣳ
हायुर्दृꣳहप्रजान्दृꣳह ॥ २७ ॥ ध्रुवासि । ध्रुवोयँयजमानो
स्मिन्नायतनेप्रजयापशुभिर्भूयात् ॥ घृतेनद्यावापृथिवी
पूर्य्येथामिन्द्रस्यच्छदिरसिविश्वजनस्यच्छाया ॥ २८ ॥ परि


॥ ३८ ॥

त्वा । गिर्व्वणोगिरंऽइमाभंवन्तुव्विश्श्वतं÷ ॥ वृद्धायुमनुवृद्धंयो
जुष्टांभवन्तुजुष्टंयः ॥ २९ ॥ इन्द्रंस्युस्यूः ॥ इन्द्रंस्युस्यूरसी
न्द्रंस्यद्ध्रुवोसि ॥ ऐन्द्रमंसिव्वैश्श्वदेवमंसि ॥ ३० ॥ [ ५-७ ]
व्विभूरंसि । प्प्रवाहंणोव्वह्निरसिहव्व्यवाहंनः ॥ श्श्वात्रोसिप्प्रचे
तास्तुथोसिव्विश्श्ववेदाऽउशिगंसि ॥ ३१ ॥ उशिगंसि । कवि
रङ्घारिरसिबम्भारिरवस्यूरंसिदुवस्वाञ्छुन्ध्यूरंसिमार्ज्जालीयं÷
सम्म्राडंसिकृशानुं÷परिषद्योसिपवंमानोनभोसिप्प्रतक्कामृष्टो

सिहव्यसूदनऽऋतधामासिस्वर्ज्योतिꣳसमुद्रोसि ॥ ३२ ॥
समुद्रोसि। विश्वव्यचाऽअजोस्येकपादहिरसिबुध्न्योवागस्यैन्द्र
मसिसदोस्यृतस्यद्वारौमामासन्ताप्तमध्वनामध्वपतेप्रमातिर
स्वस्तिमेस्मिन्पथिदेवयानेभूयान्मित्रस्यमा ॥ ३३ ॥ मित्र
स्यमा ॥ मित्रस्यमा चक्षुषेक्षध्वमग्नयꣳसगराꣳसगरास्थ
सगरेणनाम्नारौद्रेणानीकेनपातमाग्नयꣳपिपृतमाग्नयोगोपा
यतमानमोवोस्तुमामाहिꣳसिष्ट ॥ ३४ ॥ [ ४-८ ] ज्योति

रसि । विश्वरूपंविश्वेषान्देवानांꣳसमित् ॥ त्वꣳसोमतनू
कृद्भ्योद्वेषोभ्योऽन्यकृतेभ्यऽउरुयन्तासिवरूथꣳस्वाहाजुषा
णोऽअप्तुराज्यस्यवेतुस्वाहा ॥ ३५ ॥ शतम् ॥ २०० ॥
अग्नेनय । सुपथारायेऽअस्मान्विश्वानिदेववयुनानिवि
द्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंविधेम
॥ ३६ ॥ अयन्नः ॥ अयन्नोऽअग्निर्वरिवस्कृणोत्वयम्मृधः

पुरऽएतुप्प्रभिन्दन् ॥ अयंव्वाजाञ्जयतुव्वाजेसातावयᳬंशत्रू
ञ्जयतुजर्हृषाणᳬंस्वाहा ॥ ३७ ॥ उरुव्विष्णो ॥ उरुव्विष्णो
विक्क्रमस्वोरुक्षयायनस्कृधि ॥ घृतङ्घृतयोनेपिबप्प्रप्प्रयज्ञपति
न्तिरस्वाहा ॥ ३८ ॥ देवसवितः ॥ देवसवितरेषतेसोमस्तᳬं
रक्षस्वमात्वादभन् ॥ एतत्त्वन्देवसोमदेवोदेवाँ २ ॥ ऽउपा
गाऽइदमहम्मनुष्ष्यान्त्सहरायस्प्पोषेणस्वाहानिर्व्वरुणस्यपा

१ अत्र वाजान् जयतु इति पदे तकारवर्गश्चकारवर्गे चकारवर्गम् । (शु य. प्रा ४ अ ९५ सू ) इत्यनेन वाजान् पदघटिततवर्गस्य नकारस्य जयतुपदघटिते चकारवर्गे परे चवर्गत्वं जातम् । तेन वाजाञ्जयतु । एवं शत्रूञ्जयतु ।

शोऽस्मुच्चये ॥ ३९ ॥ अग्नेव्व्रतपाः ॥ अग्नेव्व्रतपास्त्वेव्व्रतपाया
तवतनूम्मय्य्यभूदेषासात्त्वयियोममतनूस्त्वय्य्यभूदियᳪसाम
यि ॥ यथायथन्नौव्व्रतपतेव्व्रतान्यनुमेदीक्षान्दीक्षापतिरमᳪ
स्तानुतपस्तपस्पतिः ॥४०॥ [६-९] उरुव्विष्ण्णो ॥ उरुव्वि
ष्ण्णोव्विक्क्रमस्वोरुक्षयायनस्कृधि ॥ घृतङ्घृतयोनेपिबप्प्रप्प्रयज्ञ
पतिन्तिरस्वाहा ॥ ४१ ॥ अत्त्यन्न्यान् ॥ अत्त्यन्न्याँ २ ॥
ऽअगान्नान्न्याँ २ ॥ ऽउपागामर्व्वाक्त्वापरेब्भ्योविदम्परोवरे

ब्भ्यः ॥ तन्त्वाजुषामहेदेवव्वनस्पतेदेवयुज्ज्यायैदेवास्त्वादेव
युज्ज्यायैजुषन्तांविष्णवेत्वा ॥ ओषधेत्रायस्वस्वधितेमैनंऽ
हिंऽसीः ॥ ४२ ॥ द्याम्मा ॥ द्याम्मालेखीरन्तरिक्षम्माहिंऽ
सीःपृथिव्यासम्भव ॥ अयंऽहित्वास्वधितिस्तेतिजानःप्प्रणि
नायमहुतेसौभगाय ॥ अतस्त्वन्देवव्वनस्पतेशतवल्शोवि
रोहसहस्रवल्शाव्वियंऽरुहेम ॥ ४३ ॥ [ ३-१०। ] ॥
इति श्रीवाजसनेयसंहितायां पंचमोऽध्यायः ॥ ५ ॥ ॥

श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ देवस्यत्त्वाषड्, पावी
रसिपंच, माहिःषट्, संतेतिस्रः, समुद्रंगच्छ, हविष्मतीरिमा
द्विकौ, हृदेत्वापंच, देवस्यत्वाष्टौ, अष्टौ सप्तत्रिꣳशत् ॥
[अ. ६ मं. ३७ अनु. ८] हरिः ॐ ॥ देवस्यत्त्वा । सवितुः प्प्रसवे
श्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्याम् ॥ आददेनार्य्यसीदम्
हꣳरक्षसाङ्ग्रीवाऽअपिकृन्तामि ॥ यवोसियवयास्स्मद्द्वेषोयव
यारातीर्द्दिवेत्त्वान्तरिक्षायत्त्वापृथिव्यैत्त्वाशुन्धन्ताँल्लोकाः

पितृषदंनांᳪपितृषदंनमसि ॥ १ ॥ अग्रेणीरसि । स्वावेशऽ
उन्नेतॄणामेतस्यंवित्तादधित्वास्थास्यतिदेवस्त्वांसवितामद्ध्वा
नक्तुसुपिप्पलाभ्यस्त्वौषधीभ्यः ॥ द्यामग्रेणास्पृक्षऽआ
न्तरिक्षम्मद्ध्येनाप्राःपृथिवीमुपरेणादृᳪंहीः ॥ २ ॥ याते ॥
यातेधामान्युश्मसिगमद्ध्यैयत्रगावोभूरिशृङ्गाऽअयासः ॥
अत्राहतदुरुगायस्यविष्णोःपरमम्पदमवभारिभूरि ॥ ब्रह्म
वनिन्त्वाक्षत्रवनिंरायस्पोषवनिपर्य्यूहामि ॥ ब्रह्मदृᳪंहक्ष

१ अत्र देव. त्वा इति पदम्। तथयो सम् ( शु. य. प्रा ३ अ. ८ सू ) इत्यनेन त्वाघटिते तकारे परे विसर्जनीयस्य सत्वे देवस्त्वेति।

अन्नन्दृꣳहायुर्द्दृꣳहप्प्रजान्दृꣳह ॥ ३ ॥ व्विष्णोःकर्म्माणि ।
पश्श्यतयतोव्व्रतानिपस्प्पशे ॥ इन्द्रस्ययुज्ज्यःसखा ॥ ४ ॥
तद्विष्ण्णोः÷ । परमम्पदꣳसदापश्श्यन्तिसूरयः÷ ॥ दिवीवचक्षु
राततम् ॥ ५ ॥ परिवीरसि ॥ परिवीरसिपरित्त्वादैवीर्व्विशो
व्ययन्ताम्परीमँय्यजमानꣳरायोमनुष्ष्याणाम् ॥ दिवःसूनु
रस्येषतेपृथिव्याँल्लोकऽआरण्ण्यस्तेपशुः ॥ ६ ॥ [ ६-१ ] उपा
वीरसि ॥ उपावीरस्युपदेवान्दैवीर्व्विशःप्प्रागुरुशिजोवह्नित

मानू ॥ देवंस्त्वष्टर्वसुरम्हव्यातैस्वदन्ताम् ॥ ७ ॥ रेवतीर
मध्वम् ॥ रेवतीरमध्वम्बृहस्पते[1]धारयावसूनि ॥ ऋतस्यत्वा
देवहविःपाशेनप्प्रतिमुञ्चामि[2]धर्षामानुषः ॥ ८ ॥ देवस्यत्वा ।
सवितुःप्प्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ अग्नी
षोमाभ्याञ्जुष्टन्नियुनज्मि ॥ अद्भ्यस्त्वौषधीभ्योनुत्वा
मातामन्यतामनुपितानुभ्रातासगर्भ्योनुसखासयूथ्यः ॥

१ धारय वसूनि पदम् । अत्र अश्वरश्मिमतिसुमतिश्वसुतचारयघृणिसेदिमेन्द्रियधारय० ( शु य. प्रा. ३ अ. ९८ सू ) इत्यनेन वकारे परे धारयघटिताकारस्य दीर्घत्व विधीयते । तेन धारयावसूनि । २ अत्र पिबासोमम् ( शु य. प्रा. ३ अ १२९ सू ) इत्यनेन धर्षं इत्यकारस्य दीर्घः ।

अग्नीषोमाभ्यान्त्वाजुष्टम्प्रोक्षामि ॥ ९ ॥ अपाम्पेरुः ॥
अपाम्पेरुरस्यापोदेवीस्स्वदन्तुस्वात्तञ्चित्सद्देवहविः ॥ सन्ते
प्प्राणोव्वातेनगच्छताᳬसमङ्गानियजत्रैᳬसँय्यज्ञपतिराशिषा
॥ १० ॥ घृतेनाक्तौ । पशूँस्त्रायेथाᳬरेवतियजमानेप्प्रिय
न्धाऽआविश ॥ उरोरन्तरिक्षात्सजूर्देवेनव्वातेनास्यहविष
स्त्मनायजसमस्यतन्वाभव ॥ व्वर्षोव्वर्षीयसियज्ञेयज्ञपतिन्धाᳬ
स्वाहादेवेभ्योदेवेभ्यᳬस्वाहा ॥ ११ ॥ [ ५-२ ] माहिं÷ ॥

माहिर्भूर्म्मा पृदाकुर्न्नमस्त्तऽआतानानर्व्वा प्प्रेहि ॥ घृतस्यकु
ल्याऽउपऽऋतस्य पत्थ्याऽअनु ॥ १२ ॥ देवीरापः । शुद्धा वो
ढ्वꣳसुपरिविष्टा देवेषु सुपरिविष्टा व्वयम्परिवेष्टारो भूयास्म ॥ १३ ॥
वाचन्ते ॥ व्वाचन्ते शुन्धामि प्प्राणन्ते शुन्धामि चक्षुस्त्ते शुन्धा
मि श्श्रोत्रन्ते शुन्धामि नाभिन्ते शुन्धामि मेढ्रन्ते शुन्धामि पायु
न्ते शुन्धामि चरित्राँस्त्ते शुन्धामि ॥ १४ ॥ मनस्त्ते ॥
मनस्त्तऽआप्प्यायतां व्वाक्क्तऽआप्प्यायताम्प्राणस्त्तऽआप्प्याय

ताञ्चक्षुस्त्तऽआप्प्यायताᳬंश्श्रोत्रन्तऽआप्प्यायताम् ॥ यत्तेक्रू
रँऽयदास्त्थितन्तत्तऽआप्प्यायतान्निष्ट्यायतान्तत्तेशुद्ध्यतुशम
होब्भ्यः ॥ ओषधेत्त्रायस्वस्वधितेमैनᳬहिᳬसीः ॥ १५ ॥ रक्षᳬ
साम्भागः ॥ रक्षसाम्भागोऽसिनिरस्तᳬरक्षऽइदमहᳬरक्षोभि
तिष्ठामीदमहᳬरक्षोवबाधऽइदमहᳬरक्षोधमन्तमोनयामि ॥ घृ
तेनद्यावापृथिवीप्प्रोर्णुवाथांव्वायोव्वेस्तोकानामग्निराज्ज्यस्यव्वे

१ निष्ट्यायताम् । अत्र नि स्त्यायताम् इति पदम् । अत्र ने स्त्यास्तनो (शु य प्रा ३ अ ७० सू) इत्यनेन नेरुपसर्गात्परयो स्त्यास्तन्योर्धात्वो सकारस्य षकारो भवति संहितायाम् । इति षत्वे षात्तथौ मूर्धन्यम् इति ष्टुत्वे (शु य प्रा ३ अ ८० सू) ऊष्मान्तस्थाभ्यश्च स्पर्शं इत्यनेन टकारस्य द्वित्वम् ।

तुस्वाहास्वाहाकृतेऽऊर्ध्वन्नभसम्मारुतङ्गच्छतम् ॥ १६ ॥
इदमापः ॥ इदमापुःप्रवहतावद्यञ्चमलञ्चयत् ॥ यच्चाभिदु
द्रोहानृतँयच्चशेपेऽअभीरुणम् ॥ आपोमातरस्मादेनसःपव
मानश्चमुञ्चतु ॥ १७ ॥ [ ६-३ ] सन्ते ॥ सन्तेमनोमन
सासम्प्राणःप्राणेनगच्छताम् ॥ रेडस्यग्निष्ट्वाश्रीणात्त्वाप
स्त्वासमरिणन्वातस्यत्वाध्राज्यैपूष्णोरꣳह्याऽऊष्मणोव्य
थिषत्प्रयुतन्द्वेषः ॥ १८ ॥ घृतङ्घृतपावानः ॥ घृतङ्घृतपा

वानꣳपिबतुवसाँव्वसापावानꣳपिबतान्तरिक्षस्यहविरसिस्वाहा ॥
दिशः प्प्रदिशऽआदिशोव्विदिशऽउद्दिशोदिग्भ्यः स्वाहा ।१९।
ऐन्द्रः प्प्राणः ॥ ऐन्द्रः प्प्राणोऽअङ्गेऽअङ्गेनिदीध्यदैन्द्रऽउदानो
ऽअङ्गेऽअङ्गेनिधीतः ॥ देवत्वष्टर्भूरितेसꣳसमेतुसलक्ष्मायद्वि
षुरूपम्भवाति ॥ देवत्रायन्तमवसेसखायोनुत्वामातापितरो
मदन्तु ॥ २० ॥ [३-४] समुद्रङ्गच्छ ॥ समुद्रङ्गच्छस्वाहा
न्तरिक्षङ्गच्छस्वाहादेवꣳसवितारङ्गच्छस्वाहामित्रावरुणौगच्छ

स्वाहाहोरात्रेगंच्छुस्वाहाच्छन्दांसिगच्छुस्वाहाद्यावांपृथिवी
गंच्छुस्वाहायुज्ञङ्गंच्छुस्वाहासोमंङ्गच्छुस्वाहादिव्यन्नभोंगच्छु
स्वाहाग्निंवैंश्वानुरङ्गंच्छुस्वाहामनोंमेहार्दिंयच्छुदिवंन्तेधूमो
गंच्छतुस्वर्ज्योतिंःपृथिवीम्भस्मुनापृंणस्वाहा॥२१॥ मापः॥
मापोमौषधीर्हिंᳪसीर्द्धाम्नोधाम्नोराजुँस्ततोंवरुणनोमुञ्च ॥
यदाहुरघ्न्याऽइतिवरुणेतिशपामहेततोंवरुणनोमुञ्च ॥ सुमि
त्रियानुऽआपुऽओषंधयᳪसन्तुदुर्म्मित्रियास्तस्मैंसन्तुयो

स्स्मान्द्वेष्टियञ्चवयन्द्विष्म्मः ॥ २२ ॥ [२-५] हविष्म्मतीरिमाः ॥ हविष्म्मतीरिमाऽआपोहविष्म्माँ २ ॥ ऽआविवासति ॥ हविष्म्मान्देवोऽअद्ध्वरोहविष्म्माँ २ ॥ ऽअस्तुसूर्य्यः ॥ २३ ॥ अग्नेर्व्वः ॥ अग्नेर्व्वोपन्नगृहस्यसदसिसादयामीन्द्राग्न्योर्भागधेयीस्त्थमित्रावरुणयोर्भागधेयीस्त्थविश्वेषान्देवानांम्भागधेयीस्त्थ ॥ अमूर्य्याऽउपसूर्य्येयाभिर्व्वासूर्य्यः सह ॥ तानोहिन्वन्त्वद्ध्वरम् ॥ २४ ॥ [२-६] हदेत्वा ॥

हृदेत्त्वामनसेत्त्वादिवेत्त्वासूर्य्यायत्त्वा ॥ ऊर्द्ध्वमिमम्मद्ध्वरन्दि
विदेवेषुहोत्राय्यच्छ ॥ २५ ॥ सोमंराजन् ॥ सोमंराजन्वि
श्श्वास्त्वम्प्रजाऽउपावरोहविश्श्वास्त्वाँम्प्रजाऽउपावरोहन्तु ॥
शृणोत्त्वग्निस्समिधाहवम्मेशृण्वन्त्वापोधिषणाश्चदेवीः ॥
श्रोताग्ग्रावाणोविदुषोनयज्ञꣳशृणोतुदेवस्सविताहवम्मेस्वाहा
॥ २६ ॥ देवीरापꣳ ॥ देवीरापोऽअपान्नपाद्योवऽऊर्म्मिर्हवि

१ अत्र विश्वाऽऊष्मान्त परीढ्विपरस्त्वं त्वाम् (शु य. प्रा ४ अ. २७ सू.) इत्यनेन विश्वापदम् ऊष्मान्तं (सान्तम्) जाते विश्वास्त्वम् विश्वास्त्वाम् ।
२ श्रोताग्ग्रावाण । पिबासोमम् (शु य प्रा ३ अ १२९ सू.) इत्यनेन श्रोत इति क्रियापदस्थह्रस्वाकारस्य दीर्घः ।

ष्ण्यऽइन्द्रियावान्मदिन्तमः ॥ तन्देवेभ्योदेवत्रादत्तशुक्रपे
भ्योयेषाम्भागस्त्थस्वाहा ॥ २७ ॥ कार्षिरसि ॥ कार्षिरसि
समुद्रस्यत्त्वाक्षित्त्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमो
षधीभिरोषधीः ॥ २८ ॥ यमग्ने ॥ यमग्नेपृत्सुमर्त्यमवा
वाजेषुयञ्जुनाः ॥ सयन्ताशश्वतीरिषःस्वाहा ॥ २९ ॥ [५-७]
देवस्यत्त्वा ॥ देवस्यत्त्वासवितुःप्प्रसवेश्विनोर्ब्बाहुब्भ्याम्पूष्णो
हस्ताब्भ्याम् ॥ आददेरावासिगभीरमिममद्ध्वरङ्कृधीन्द्रायसु

घृतमम् ॥ उत्तमेनंपविनोर्ज्जस्वन्तम्मधुमन्तम्पयस्वन्तंनिग्ग्रा
भ्यास्त्थदेवश्श्रुतस्तर्प्पयतमामनोमे ॥ ३० ॥ मनोमे । तर्प्प
यतव्वाचम्मेतर्प्पयतप्प्राणम्मेतर्प्पयतचक्षुर्म्मेतर्प्पयतश्श्रोत्रम्मे
तर्प्पयतात्मानम्मेतर्प्पयतप्प्रजाम्मेतर्प्पयतपशून्मेतर्प्पयतग
णान्मेतर्प्पयतगणामेमावितृषन् ॥ ३१ ॥ इन्द्रायत्त्वा ॥ इन्द्रा
यत्त्वावसुमतेरुद्द्रवतऽइन्द्रायत्त्वादित्त्यवतऽइन्द्रायत्त्वाभिमा
तिग्घ्ने ॥ श्येनायत्त्वासोमभृतेग्नयेत्त्वारायस्प्पोषदे ॥ ३२ ॥

यत्ते । सोमदिविज्ज्योतिर्य्यत्पृथिव्याँय्यदुरावन्तरिक्षे । तेना
स्मैयजमानायोरुरायेकृध्यधिदात्रेवोचः॥३३॥ श्वात्रास्त्थ ॥
श्वात्रास्त्थवृत्रतुरोराधोगूर्त्ताऽअमृतस्यपत्नीः ॥ तादेवीर्देवत्रे
मँय्यज्ञन्नयतोपहूताःसोमस्यपिबत ॥ ३४ ॥ माभेः ॥
माभेर्म्मासंविक्थाऽऊर्ज्जन्धत्स्वधिषणेवीड्वीसतीवीडयेथामू
र्ज्जन्दधाथाम् ॥ पाप्माहतोनसोमः ॥ ३५ ॥ प्रागपां
क् ॥ प्रागपागुदगधराक्सर्वतस्त्वादिशऽआधावन्तु ॥ अम्ब

सं. ९

निष्प्परस्समरीर्व्विदाम् ॥ ३६ ॥ त्वमङ्ग ॥ त्वमङ्गप्प्रशर्ठ्ठ-
सिषोदेवश्शविष्ठुमर्त्यम् ॥ नत्त्वदन्न्योमघवन्नस्तिमर्डितेन्द्र
ब्ब्रवीमितेव्वचः ॥ ३७ ॥ [८-८] इति श्रीवाजसनेयसंहिता-
यां षष्ठोऽध्यायः ॥ ६ ॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसू-
त्त्रम् ॥ व्वाचस्पतयेत्त्रिको, पयामगृहीतोसित्त्रिका, वायोद्विका,
यंव्वांद्विको, यावामेका, तंप्प्रत्नथाचतस्रो,ऽयंव्वेनस्त्त्रिका, ॥ ४९ ॥

१ निष्पर अत्र नि. इति विसर्गस्य आविर्निरिड इडाया वसतिर्वैरिवः (शु. य. प्रा. ३ अ. २३ सू.) इत्यनेन यथायोगं ककारपकारपरयो. विसर्जनीयस्य पकार. क्रियते इति पकारे कृते निष्पर । तत ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वम् ।

येदेवासस्त्रिका, इन्द्राय मूर्द्धानंद्विकौ, यस्तएका, प्राणायमे तिस्रो, मघवऽएकेन्द्राग्नीऽआगतमेका, धैको, मासऽएका, विश्वेदेवासऽआगतऽएके, न्द्रमरुत्वऽएका, मरुत्वन्तंवृषभमेका, मरुतान्त्वा, सजोषाऽइन्द्रऽएका, मरुत्वाँ २ ॥ ऽइन्द्रऽएका, महाँ २ ॥ ऽइन्द्रऽएका, महाँ २ ॥ ऽइन्द्रऽएको, हुत्यमष्टौ पंचविꣳशतिरष्टाचत्वारिꣳशत् [अ. ७ मं. ४८ अनु. २५]

१ इति शतपथब्राह्मणपाठः ।

हरिः ॐ ॥ व्वाचस्प्पतये पवस्व व्वृष्ष्णोऽअंशुब्भ्यां गभस्तिपूतः ॥
देवो देवेब्भ्यः पवस्व येषां भागोसि ॥ १ ॥ मधुमतीर्न्नः ॥ मधुम
तीर्न्नऽइषस्कृधि यत्ते सोमादाब्भ्यन्नाम जागृवि तस्मै ते सोम सो
माय स्वाहा स्वाहोर्व्वन्तरिक्षमन्वेमि स्वाङ्कृतोसि ॥ २ ॥ स्वाङ्कृ
तोसि । व्विश्वेब्भ्यऽइन्द्रियेब्भ्यो दिव्येब्भ्यः पार्थिवेब्भ्यो मन
स्त्वाष्टु स्वाहा त्वा सुभव सूर्य्याय देवेब्भ्यस्त्वा मरीचिपेब्भ्यो दे ॥५०॥

१ व्वाचस्प्पतये अत्र प्रकृत्या कखयोः पफयोश्च (शु य प्रा. ३ अ. ११ सू.) इत्यनेन विसर्गस्य प्रकृतिभावे प्राप्ते पतितालव्यस्वरोदये (शु य. प्रा. ३ अ. ३५ सू.) इत्यनेन पतिशब्दे परे विसर्जनीयस्य सकारे कृते ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु य प्रा ४ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वम् ।

वांऽशुर्यस्मैत्त्वेडेतत्त्सत्त्यमुंपरिप्प्रुताभङ्गेनंहतोऽसौफट्प्रा
णायत्त्वाव्व्यानायत्त्वा ॥ ३ ॥ [३-१] उपयामगृंहीतोसि ॥
उपयामगृंहीतोस्यन्तर्य्यच्छमघवन्पाहिसोमम् ॥ उरुष्ष्यराय्
ऽएषोयजस्व ॥ ४ ॥ अन्तस्त्ते ॥ अन्तस्तेद्यावापृथिवीदधा
म्म्यन्तर्द्धाम्म्युर्व्वन्तरिक्षम् ॥ सजूर्द्देवेभिरवरैःपरैश्चान्तर्य्या
मेमघवन्मादयस्व ॥ ५ ॥ स्वाङ्कृतोसि ॥ स्वाङ्कृतोसिविश्श्वेब्भ्यऽ

१ अन्तस्त्ते । अत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र ( शु य प्रा ४ अ १०० सू ) इत्यनेन नकारस्य द्वित्वे प्राप्ते स्ववर्गीये चानुत्तमे ( शु य प्रा. ४ अ ११५ सू ) इत्यनेन स्ववर्गीये तकारे परे द्वित्वनिषेधान्न द्वित्वम् ।

इन्द्रियेभ्योदिव्येभ्युःपार्थिवेभ्योमनस्त्वाष्टुस्वाहात्वासु
भवसूर्यायदेवेभ्यस्त्वामरीचिपेभ्यएउदानायत्त्वा ॥ ६ ॥
[ ३-२ ]आवायो ॥ आवायो भूषशुचिपाउपनःसहस्रन्तेनि
युतोविश्ववार ॥ उपोतेअन्धोमद्यमयामियस्यदेवदधिषेपूर्व
पेयंवायवेत्त्वा ॥ ७॥ इन्द्रवायूइमे । सुताउपप्रयोभिराग
तम् ॥ इन्दवोवामुशन्तिहि ॥ उपयामगृहीतोसिवायवइन्द्र

१ इन्द्रवायुभ्याम् । अत्र पूर्वो द्वन्द्वेष्ववायुषु (शु य प्रा ३ अ १२८ सू) इत्यनेन अत्रायौ द्वन्द्वसमासे पूर्वस्य पदान्तस्याकारस्य दीर्घविधानाभावेन्द्रशब्दाकारस्य दीर्घाकारो वायुशब्दपरत्वात् ।

वायुभ्यान्त्वैषतेयोनिः सजोषोभ्यान्त्वा ॥ ८ ॥ [२-३]
अयंवाम् ॥ अयंवाम्मित्रावरुणासुतः सोमऽऋतावृधा ॥ म
मेदिहश्रुतहवम् ॥ उपयामगृहीतोसिमित्रावरुणाभ्यान्त्वा
॥ ९ ॥ रायावयम् ॥ रायावयꣳससवाꣳसोमदेमहव्येनदेवा
यवसेनगावः ॥ तान्धेनुम्मित्रावरुणायुवन्नोविश्वाहाधत्तमन
पस्फुरन्तीमेषतेयोनिर्ऋतायुभ्यान्त्वा ॥ १० ॥ [२-४]
यावाम् ॥ यावाङ्कशामधुमत्यश्विनासूनृतावती ॥ तया

यज्ञम्मिमिक्षतम् ॥ उपयामगृहीतोस्यश्विभ्यान्त्वैषतेयोनि
र्म्माध्वीभ्यान्त्वा ॥ ११ ॥ [१-५] तम्प्रत्क्नथा । पूर्व्वं
थाविश्वथेमथाज्येष्ठतातिम्बर्हिषदᳫंस्वर्व्विदम् ॥ प्रतीचीनं
वृजनन्दोहसेधुनिमाशुञ्जयन्तमनुयासुवर्द्धसे ॥ उपयामगृ
हीतोसिशण्डायत्त्वैषतेयोनिर्व्वीरताम्पाह्यपमृष्टᳫंशण्डोदेवा
स्त्वाशुक्रपाःप्प्रणयन्त्वनाधृष्टासि ॥ १२ ॥ सुवीरोव्वीरान् ॥
सुवीरोव्वीरान्प्रजनयन्परीह्यभिरायस्पोषेणयजमानम् ॥

सुञ्ज्ग्ग्मानोदिवापृथिव्याशुक्रःशुक्रशोचिषानिरस्तःशण्डः
शुक्रस्याधिष्ठानमसि ॥१३॥ अच्छिन्नस्यते । देवसोमसुवीर्य्य
स्यरायस्पोषस्यददितारःस्याम ॥ साप्प्रथमासँस्कृतिर्व्विश्ववा
रासप्प्रथमोवरुणोमित्रोऽअग्निः॥१४॥ सप्प्रथमः॥ सप्प्रथमो
बृहस्पतिश्चिकित्वाँस्तस्माऽइन्द्रायसुतमाजुहोतस्वाहा ॥
तृ[2]म्पन्तुहोत्राम्मध्वोयाःस्विष्टाःसुप्प्रीताःसुहुतायत्स्वाहाया

1 तययो सम् ( शु य प्रा ३ अ १२९ सू ) इत्यनेन नकारस्य सकारे अनुनासिकमुपधा प्रागन्तस्थाया ( शु य प्रा ३ अ १३१ सू ) इत्यनेन चोपधायामनुनासिके कृते रूपम् । ना१ धामन्छन्नून् ( शु य प्रा ३ अ १४६ सू ) इति निषेधरत्वपरत्वाभावात् ॥ 2 तृम्पन्तु होत्रा । अत्र ऋपरेभ्य ( शु. य. प्रा ३ अ. ८५ सू ) इत्यनेन समानपदे विधीयमान णत्व प्राप्त परश्च तवर्गे च ( शु य. प्रा. ३ अ ९७ सू ) इत्यनेन निषेधान्न णत्वम् ।

डुग्गीत् ॥ १५ ॥ [ ४-६ ] अयंव्वेनः ॥ अयंव्वेनश्चोदय
त्पृश्निगर्ब्भाज्ज्योतिर्ज्जरायूरजसोव्विमाने ॥ इममपाथंसङ्गमे
सूर्य्यस्यशिशुन्नव्विप्प्रामतिभीरिहन्ति ॥ उपयामगृहीतोसिम
र्क्कायत्त्वा ॥ १६ ॥ मनोन । येषुहवंनेषुतिग्ग्मंव्विपृःशङ्घ्यांव्वनु
थोद्द्रवन्ता ॥ आयःशर्य्याभिस्तुविनृम्म्णोऽअस्याश्श्रीणीता
द्दिशङ्गभंस्त्तावेषतेयोनिः प्प्रजाःपाह्यपंमृष्टोमर्क्कोदेवास्त्वाम
न्थिपाःप्प्रणयन्त्त्वनाधृष्टासि ॥ १७ ॥ सुप्प्रजाः । प्प्रजाः

प्प्रजांजनयन्परीह्याभिरायस्प्पोषेणयजमानम् ॥ सञ्जग्ग्मानो दिवापृथिव्यामन्थीमन्थिशोचिषानिरस्तोमर्क्कोमन्थिनोधिष्ठानमसि ॥ १८ ॥ [३-७] येदेवासः ॥ येदेवासोदिव्येकादशस्त्थपृथिव्यामध्येकादशस्त्थ ॥ अप्प्सुक्षितोमहिनैकादशस्त्थतेदेवासोयज्ञमिमञ्जुषद्ध्वम् ॥ १९ ॥ उपयामगृहीतोसि ॥ उपयामगृहीतोस्याग्ग्रयणोसिस्वाग्ग्रयणःपाहियज्ञम्पाहियज्ञपतिंविष्ष्णुस्त्वामिन्द्रियेणपातुविष्ष्णुन्त्वम्पाह्यभिसवना

निपाहि ॥ २० ॥ सोम॑÷पवते ॥ सोम॑÷पवतेसोम॑÷पवतेस्मै
ब्रह्मणेस्मैक्षत्रायास्मैसुन्वतेयजमानायपवतऽइषऽऊर्जेप
वतेद्भ्यऽओषधीभ्यःपवतेद्यावापृथिवीभ्यांपवतेसुभूताय
पवतेविश्वेभ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्यस्त्वादेवे
भ्यः ॥ २१ ॥ [ ३-८ ] उपयामगृहीतोसीन्द्रायत्वाबृहद्व
तेवयस्वतऽउक्थाव्यङ्गृह्णामि ॥ यत्तऽइन्द्रबृहद्वयस्तस्मै
त्वाविष्णवेत्वैषतेयोनिरुक्थेभ्यस्त्वादेवेभ्यस्त्वादेवाव्यँ

यज्ञस्यायुषेगृह्णामिमित्रावरुणाभ्यान्त्वा ॥ २२ ॥ मित्रा
वरुणाभ्यान्त्वा । देवाव्यँयज्ञस्यायुषेगृह्णामीन्द्रायत्त्वादेवा
व्यँयज्ञस्यायुषेगृह्णामीन्द्राग्निभ्यान्त्वादेवाव्यँयज्ञस्यायु
षेगृह्णामीन्द्रावरुणाभ्यान्त्वादेवाव्यँयज्ञस्यायुषेगृह्णामी
न्द्राबृहस्पतिभ्यान्त्वादेवाव्यँयज्ञस्यायुषेगृह्णामीन्द्रावि
ष्णुभ्यान्त्वादेवाव्यँयज्ञस्यायुषेगृह्णामि ॥ २३ ॥ [२-९]
मूर्द्धानन्दिवः ॥ मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽ

आजातमग्निम् ॥ कविꣳसम्राजमतिथिञ्जनानामासन्नापा
त्रञ्जनयन्तदेवाः ॥ २४ ॥ उपयामगृहीतोसि । ध्रुवोसिध्रुव
क्षितिर्ध्रुवाणान्ध्रुवतमोच्युतानामच्युतक्षित्तमऽएषतेयोनिर्वै
श्वानरायत्वा ॥ ध्रुवन्ध्रुवेणमनसावाचासोममवनयामि ॥ अथा
नऽइन्द्रऽइद्विशोसपत्नाःसमनसस्करत् ॥ २५ ॥ [२-१०] यस्ते
द्रप्सस्कन्दतियस्तेऽअꣳशुर्ग्रावच्युतोधिषणयोरुपस्थात् ॥
अध्वर्य्योर्वापरिवायःपवित्रात्तन्तेजुहोमिमनसावषट्कृतꣳस्वा

हादेवानांमुत्क्रमणमसि ॥ २६ ॥ [ १-११ ] प्राणायमे । वर्च्चो
दावर्च्चसेपवस्वव्यानायमेवर्च्चोदावर्च्चसेपवस्वोदानायमेवर्च्चोदा
वर्च्चसेपवस्ववाचेमेवर्च्चोदावर्च्चसेपवस्वक्रतूदक्षाभ्याम्मेवर्च्चो
दावर्च्चसेपवस्वश्श्रोत्रायमेवर्च्चोदावर्च्चसेपवस्वचक्षुर्भ्याम्मेव
र्च्चोदसौवर्च्चसेपवेथमात्मनेमे ॥ २७ ॥ आत्मनेमे । वर्च्चोदा
वर्च्चसेपवस्वौजसेमेवर्च्चोदावर्च्चसेपवस्वायुषेमेवर्च्चोदावर्च्चसेपव
स्वविश्वाभ्योमेप्रजाभ्योवर्च्चोदसौवर्च्चसेपवेथाम् ॥ २८ ॥

कोसि । कतमोसिकस्यासिकोनामासि ॥ यस्यतेनामामन्महि यन्त्वासोमेनातीतृपाम ॥ भूर्भुवस्वः सुप्रजाः प्रजाभिः स्याᳪं सुवीरोवीरैः सुपोषः पोषैः ॥ २९ ॥ [३-१२] उपयामगृहीतोसिमधवेत्वोपयामगृहीतोसिमाधवायत्वोपयामगृहीतोसिशुक्रायत्वोपयामगृहीतोसिशुचयेत्वोपयामगृहीतोसिनभसेत्वोपयामगृहीतोसिनभस्यायत्वोपयामगृहीतोसीषेत्वोपयामगृहीतोस्यूर्जेत्वोपयामगृहीतोसिसहसेत्वोपयामगृ

हीतोसिसहस्यायत्त्वोपयामगृहीतोसितपंसेत्त्वोपयामगृहीतो सितपस्यायत्त्वोपयामगृहीतोस्यꣳहसस्प्पतयेत्त्वा ॥ ३० ॥

[१-१३] इन्द्राग्नीऽआगंतम् ॥ इन्द्राग्नीऽआगतꣳसुतङ्गी र्भिर्न्नभोव्वरेण्ण्यम् ॥ अस्यपातन्धियेषिता ॥ उपयामगृहीतो सीन्द्राग्निभ्यान्त्वैषतेयोनिरिन्द्राग्निभ्यान्त्वा ॥ ३१ ॥

[१-१४] आघं ॥ ओघासेऽअग्निमिन्धतेस्तृणान्तिबर्हिरानु

१ आघाये । अत्र श्रयोदारियशोचपनयसादयर्जुंवृपशनुसलक्ष्माघाघारात्पूर्भवत यकारे (शु. य. प्रा. ३ अ. ११३ सू.) यकारे परे एते दीर्घा भवन्ति । तेन घ इत्यस्याकारस्य दीर्घः । एवम् अघायत' इत्यत्रापि दीर्घः ।

षक् ॥ येषामिन्द्रोसुवासखा ॥ उपयामगृहीतोस्यग्नीन्द्रा
भ्यान्त्वैषतेयोनिरग्नीन्द्राभ्यान्त्वा ॥ ३२ ॥ [१-१५]
ओमासश्चर्षणीधृतः ॥ ओमासश्चर्षणीधृतोविश्वेदेवासऽआ
गंत ॥ दाश्वाꣳसोदाशुषः सुतम् ॥ उपयामगृहीतोसिविश्वे
भ्यस्त्वादेवेभ्यऽएषतेयोनिर्विश्वेभ्यस्त्वादेवेभ्यः ॥ ३३ ॥
[१-१६] विश्वेदेवासः ॥ विश्वेदेवासऽआगंतशृ[2]णुतामऽइमꣳ

[1] अत्र पिवासोमम्। (शु. य. प्रा. ३ अ. १२९ सू.) इत्यनेन चर्षणिशब्दस्यैकारस्य दीर्घे चर्षणीधृतः। [2] शृणुत मऽइमम्। अत्र शृणुतत्विपिब्रजिभवतपिवेतसतिष्ठरक्षा मकारे (शु. य. प्रा. ३ अ. ११७ सू.) इत्यनेन मकारे परे एते दीर्घा भवन्ति। इति तकारस्य दीर्घे शृणुतामऽइमम्।

हवम् ॥ एदम्बर्हिर्न्निषीदत ॥ उपयामगृहीतोसिव्विश्वेब्भ्य
स्त्वादेवेब्भ्यंऽएषतेयोनिर्व्विश्वेब्भ्यस्त्वादेवेब्भ्यः ॥ ३४ ॥
[१-१७] इन्द्रंमरुत्वꣳ ॥ इन्द्रंमरुत्वऽइहपाहिसोमँय्यथा
शार्य्यातेऽअपिबꣳसुतस्य ॥ तवप्प्रणीतीतवशूरशर्म्मन्नाविवा
सन्तिकवयःसुयज्ञाः ॥ उपयामगृहीतोसीन्द्रायत्त्वामरुत्व
तऽएषतेयोनिरिन्द्रायत्त्वामरुत्वते ॥ ३५ ॥ [१-१८] मरु
त्वन्तंवृषभं । वावृधानमकवारिन्दिव्यꣳशासमिन्द्रम् ॥

१ बर्हिर्निषीदत अन नि सीदत इति पदम् । अत्र ने सीदते (शु य प्रा ३ अ ५६ सू.) इत्यनेन ने परस्य सीदतेस्तत्रस्थसकारस्य षकार ।

विश्वासाहमवसेनूतनायोग्रꣳसहोदामिहतꣳहुवेम ॥ उप
यामगृहीतोसीन्द्रायत्वामरुत्वतऽएषतेयोनिरिन्द्रायत्वामरु
त्वते ॥ [२][१-१९] उपयामगृहीतोसिमरुतान्त्वौजसे ॥३६॥
[१-२०] सजोषाऽइन्द्र ॥ सजोषाऽइन्द्रसगणोमरुद्भिꣳ
सोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँ [३] १ ॥ रपमृधोनुद
स्वाथाभयङ्कृणुहिविश्वतोनꣳ ॥ उपयामगृहीतोसीन्द्रायत्वा ॥५८॥

१ विश्वासाहम् । अत्र विश्वशब्दाकारस्य विश्वसहसुवपुपवसुपु (शु य प्रा ३ अ १०१ सू.) इत्यनेन सहपरे दीर्घाकार. । २ (इति शतपथे) ।
३ शत्रूँ १ ॥ रपमृधः । अत्र स्वर औपशवि॰ (शु य प्रा ३ अ. १३२ सू.) इत्यनेन नकारस्य स्वरे परे अनुस्वारे उपधायामनुनासिक्ये च रूपम् ।

मुरुत्वंतऽएषतेयोनिरिन्द्रांयत्त्वामुरुत्वंते ॥ ३७ ॥ [१-२१]
मुरुत्त्वाँ[1] २ ॥ ऽइन्द्र । वृषभोरणांयुपिबासोमंमनुष्ष्वधम्म
दांय ॥ आसिञ्चस्वजुठरेमद्ध्वऽऊुर्म्मिन्त्वꣳराजांसिप्प्रतिपत्त्सु
तानांम् ॥ उुपयामगृहीतोसीन्द्रांयत्त्वामुरुत्वंतऽएुषतेयोनि
रिन्द्रांयत्त्वामुरुत्वंते ॥ ३८ ॥ [१-२२] मुहाँ २ ॥ ऽइन्द्रं ॥
मुहाँ २ ॥ ऽइन्द्रोंनृवदाचंर्षणिप्प्राऽउुतद्विबर्हाऽअमिनꣳसहो

1 मरुत्वान् इन्द्र. । अत्राकारोपधो यकारम् ( शु य. प्रा २ अ १४२ सू ) इत्यनेन स्वरे परे नकारस्य यकारे कृते उपधायामनुनासिक्ये च यवयो: पदान्तयो स्वरमध्ये लोप. ( शु य. प्रा. ४ अ १२५ सू ) इत्यनेन यकारलोपे न परकाल० ( शु. य. प्रा. ३ अ. ४ सू ) इत्यनेन सन्धेर्निषेध । तथैव महाँ २ इन्द्रः ।

भिर्ः ॥ अस्म॒द्र्य॑ग्वावृधे वी॒र्या॑यो॒रुः पृ॒थुः सुकृ॑तः क॒र्तृभि॑र्भूत् ॥ उप॒या॒मगृ॑हीतोसि म॒हे॒न्द्राय॑ त्वै॒ष ते॒ योनि॑र्म॒हे॒न्द्राय॑ त्वा ॥३९॥ [१-२३] म॒हाँ २॥ऽइन्द्रः॑ ॥ म॒हाँ २॥ऽइन्द्रो॒ यऽओज॑सा प॒र्जन्यो॑ वृष्टि॒माँ २॥ऽइ॑व ॥ स्तोमै॑र्व॒त्सस्य॑ वावृधे ॥ उप॒या॒मगृ॑हीतोसि म॒हे॒न्द्राय॑ त्वै॒ष ते॒ योनि॑र्म॒हे॒न्द्राय॑ त्वा ॥४०॥

[१-२४] उदु॒ त्यम् ॥ उदु॒ त्यं जा॒तवे॑दसं दे॒वं व॑हन्ति के॒तवः॑ ॥



---

१ कर्तृभि । अत्र परतु रेफहकाराभ्याम् (शु य प्रा ४ अ. १०१ सू.) इत्यस्यापवादभूतेन ऊष्मान्त (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन तकारस्य द्वित्वे प्राप्ते ऋवर्णे च (शु. य प्रा ४ अ १११ सू) इत्यनेन ऋवर्णे परे व्यञ्जनस्य द्विर्भावनिषेधान्न द्वित्वम्। एतादृशेष्वन्येष्वपि बोध्यम्।

दृशेविश्वायसूर्य्यᳫँस्वाहा॥४१॥ चित्रन्देवानाम्॥ चित्रन्देवा
नामुदगादनीकञ्चक्षुर्म्मित्रस्यवरुणस्याग्नेः ॥ आप्प्राद्यावा
पृथिवीऽअन्तरिक्षᳫँसूर्य्यऽआत्माजगतस्तस्थुषश्चस्वाहा
॥ ४२ ॥ अग्नेनय । सुपथारायेऽअस्मान्विश्वानिदेववयुना
निविद्वान् ॥ युयोद्ध्यस्म्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउ
क्तिंविधेमस्वाहा ॥ ४३ ॥ अयन्नः ॥ अयन्नोऽअग्निर्वरि
वस्कृणोत्वयम्मृधः पुरऽएतुप्प्रभिन्दन् ॥ अयंव्वाजाञ्जयतुव्वा

जंसातावयꣳशत्रूँञ्जयतुजर्हृषाणꣳस्वाहा ॥ ४४ ॥ रूपेणवः ॥
रूपेणंवोरूपमभ्यागान्तुथोवोविश्ववेदाविभजतु ॥ ऋतस्य
पथाप्प्रेतंचन्द्रदक्षिणाविस्वःपश्यव्युन्तरिक्षँयतस्वसदस्यैः
॥ ४५ ॥ ब्राह्मणमद्य । विदेयम्पितृमन्तम्पैतृमत्त्यमृषिमा
र्षेयꣳसुधातुदक्षिणम् ॥ अस्म्मद्राताद्देवत्राऽगच्छतप्प्रदातार
माविशत ॥ ४६ ॥ अग्नयेत्वा ॥ अग्नयेत्वामह्यंवरुणोददातु

१ विस्व । अत्र वेर्युदय (शु य प्रा ३ अ ६७ सू ) इत्यनेन वे उपसर्गात्परस्य सकारस्य यकारोदये षकारो भवति। अतो नात्र सकारात्परस्य वकारोदयस्य वेरुपसर्गस्य सकारस्य षकार. ।

सोऽमृतत्त्वमशीयायुर्द्दात्रऽएधिमयोमह्यम्प्रतिग्ग्रहीत्रेरुद्राय
त्त्वामह्यँव्वरुणोददातुसोऽमृतत्त्वमशीयप्प्राणोदात्रऽएधिव्वयो
मह्यम्प्रतिग्ग्रहीत्रेबृहस्प्पतयेत्त्वामह्यंव्वरुणोददातुसोऽमृतत्त्व
मशीयत्त्वग्ग्दात्रऽएधिमयोमह्यम्प्रतिग्ग्रहीत्रेयमायत्त्वामह्यं
व्वरुणोददातुसोऽमृतत्त्वमशीयहयोदात्रऽएधिव्वयोमह्यम्प्रति
ग्ग्रहीत्रे ॥ ४७ ॥ कोदात् ॥ कोऽदात्त्कस्म्माऽअदात्त्कामोदा
त्त्कामायादात् ॥ कामोदाताकामः प्रतिग्ग्रहीताकामैतत्ते

॥ ४८ ॥ [ ८-२५ ] इतिश्रीवाजसनेयसंहितायांसप्तमोऽध्यायः
॥ ७ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ उपयामगृ-
हीतोस्यादित्येभ्यः पंच, वाममद्यद्वे, सुशर्मास्येका, बृहस्प-
तिसुतस्यद्वे, हरिरसिचतस्रः, समिन्द्रेऽष्टौ, माहिः पंच,
ऽएजतुदशमास्यः पंचा, तिष्ठैका, सुक्ष्वाह्येके, न्द्रासिदेका,
यस्मान्नद्वे, ऽग्नेपवस्वो, त्तिष्ठन्न, दश्रमु, दुत्यमेकैका, ज्जिघ्र
द्वे, विनइन्द्र, वाचस्पतिं, व्विश्वकर्मन्नेकैका, यमेत्वाचतस्र,

इहरातिस्तिस्रः, परमेष्ठीदश, त्रयोविꣳशतिस्त्रिषष्टिः ॥ [अ. ८
मं. ६३ अनु. २३] हरिः ॐ ॥ उपयामगृहीतोसि ॥ उपया
मगृहीतोस्यादित्येभ्यस्त्वा ॥ विष्णऽउरुगायैषतेसोमस्तꣳ
रक्षस्वमात्वादभन् ॥ १ ॥ कदाचन । स्तरीरसिनेन्द्रसश्चसि
दाशुषे ॥ उपोपेन्नुमघवन्भूयऽइन्नुतेदानन्देवस्यपृच्यतऽआ
दित्येभ्यस्त्वा ॥ २ ॥ कदाचन । प्रयुच्छस्युभेनिपासिज
न्मनी ॥ तुरीयादित्यसवनन्तऽइन्द्रियमातस्थावमृतन्दि

ध्यादि॒त्येभ्य॑स्त्वा ॥ ३ ॥ य॒ज्ञोदे॒वाना॑म् ॥ य॒ज्ञोदे॒वाना॒
म्प्रत्त्यैतिसु॒म्न्नमादि॑त्त्यासो॒भव॑तामृ॒डयन्त॑ः ॥ आवो॒र्व्वाची॑
सुम॒तिर्व्ववृत्त्यादु॒ह्होश्चि॒द्यावरि॒वोवि॒त्तरास॑दादि॒त्येभ्य॑स्त्वा
॥ ४ ॥ विव॑स्वन्नादि॒त्त्य ॥ विव॑स्वन्नादि॒त्त्यैषते॑सोमपी॒थस्त्त
स्मिन्मत्त्स्व ॥ श्रद॑स्म्मैनरो॒वच॑सेदधातन॒यदा॑शी॒र्दादम्प॑ती
वामम॑श्नु॒तः ॥ पुमान्पु॒त्रोजा॑यतेविन्दते॒वस्वधा॑वि॒श्वाहा॑रपऽ
ए॑धतेगृ॒हे ॥ ५ ॥ [५-१] वाममु॒द्य । सं॑वितर्वा॒मसु॒श्वोदि॒वे



१ भवत मृडयन्त । अत्र श्रृणुत्विपिभ्रजिभवतपिवेतस्मतिछरक्षा मकारे (शु. य. प्रा. ३ अ. ११७ सू.) इत्यनेन मकारे दीर्घे भवता मृडयन्तः ।

दिवेव्वाममुस्म्मभ्यंᳲसावीः ॥ व्वामस्युहिक्षयंस्यदेवुभूरेरयाधि
याव्वांमुभाजंःस्याम ॥ ६ ॥ उपयामगृहीतोसि । सावित्रो
सिचनोधाश्चनोधाऽअसिचनोमायिधेहि ॥ जिन्वंयुज्ञञ्जिन्व
युज्ञपंतिम्भगायदेवायंत्वासवित्रे ॥ ७ ॥ [ २-२ ] शतम्
॥ ३०० ॥ उपयामगृहीतोसि । सुशर्म्मासिसुप्रतिष्ठानोबृहदु
क्षायनमंः ॥ व्विश्वेभ्यस्त्वादेवेभ्यंऽएषतेयोनिर्व्विश्वेभ्य
स्त्वादेवेभ्यंः ॥ ८ ॥ [ १-३ ] उपयामगृहीतोसि ॥ उप

यामगृंहीतोसिबृंहुस्प्पातिसुतस्यदेवसोमतुऽइन्दोौरिन्द्रियावतुः
पत्नींवतोग्ग्रहाँ २ ॥ ऽऋध्यासम् ॥ अहम्पुरस्तांदुहमुवस्त्ता
द्यदुन्तरिंक्षुन्तदुंमेपिताभूंत् ॥ अुह७सूर्य्यंमुभुयतोंदुदर्शाह
न्देवानांम्परुमङ्गुहायत् ॥ ९ ॥ अग्ना ३॥ ऽइपत्नींवन् ॥
अग्ना ३ ॥ ऽइपत्नींवन्तसुजूर्देवेनुत्त्वष्ट्रासोमंम्पिबुस्वाहा ॥
प्रुजापंतिुर्वृषांसिरेतोधारेतोमयिंधेहिप्प्रजापंतेस्त्तेवृष्ण्णोरेतो



१ बृहस्प्पतिसुतस्य । अत्र भाविभ्य. स. षं समानपदे (शु य प्रा. ३ अ. ५६ सू.) इत्यनेन सस्य षत्वे प्राप्ते अनुसन्तनोतु बृहस्पति० (शु. य. प्रा ३ अ ८२ सू.) इत्यनेन समानपदे सस्य प्रकृतिभावविधानान्न षत्वम् । तत ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इति पकारस्य द्वित्वम्॥

धसोरेतोधामशीय ॥ १० ॥ [२-४] उपयामगृहीतोसि ॥
उपयामगृहीतोसिहरिरसिहारियोजनोहरिभ्यान्त्वा ॥ हर्य्यो
र्द्धानास्त्थसहसोमाऽइन्द्राय ॥ ११ ॥ यस्ते । ऽअश्वसनि
र्भक्षोयोगोसनि[1]स्तस्यतऽइष्टयजुषस्तुतस्तोमस्यशस्तोक्थ
स्योपहूतस्योपहूतोभक्षयामि ॥ १२ ॥ देवकृतस्यैनसः ॥
देवकृतस्यैनसोवयजनमसिमनुष्ष्यकृतस्यैनसोवयजनमसिपि
तृकृतस्यैनसोवयजनमस्यात्मकृतस्यैनसोवयजनमस्येनसऽए

१ गोसनिस्त । भाविभ्य स ष समानपदे (शु. य. प्रा. ३ अ. ५६ सू.) इत्यनेन पत्वप्राप्तौ अनुसन्त० (३ अ. ८२ सू.) इत्यनेन निषिध्यते।

नसोवयजंनमसि ॥ यच्चाहमेनोविद्वाँश्चकारयच्चाविद्वाँस्तस्य
सर्वस्यैनसोवयजंनमसि॥१३॥ संवर्चसा ॥ संवर्चसापयसासन्त
नूभिरगंस्महिमनसासᳬशिवेन ॥ त्वष्टासुदत्रोविदधातुरायो
नुमार्ष्टुतन्वोयद्विलिष्टम् ॥१४॥ [४-५] समिन्द्र। णोमनसाने
षिगोभिःसᳬसूरिभिर्मघवन्त्सᳫस्वस्त्या ॥ सम्ब्रह्मणादेव
कृतँय्यदस्तिसन्देवानाᳫसुमतौयज्ञियानाᳫस्वाहा ॥ १५ ॥



---

१ समिन्द्रणो । अत्र इन्द्र न इति पदद्वयेन भाविस्य० ( शु. य. प्रा. ३ अ. ५६ सू. ) इत्यनेन समानपदत्वाभावाण्णत्वाप्राप्तौ निपणणायरथवाहण। मिन्द्रऽएणस्परिणीयते समिन्द्रण० ( शु. य. प्रा. ३ अ. ८३ सू. ) इत्यनेन णत्व निपात्यते ।

संवर्चसा ॥ संवर्चसापयसासन्तनूभिरगन्महिमनसासᳬशिवेन।त्वष्टासुदत्रोविदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टम् ॥१६॥ धातारातिः। सवितेदञ्जुषताम्प्रजापतिर्न्निधिपादेवोऽअग्निः ॥ त्वष्टाविष्णुः प्रजयासᳬरराणायजमानायद्रविणन्दधात स्वाहा ॥ १७ ॥ सुगावः ॥ सुगावोदेवाःसदनाऽअकर्म्मयऽआजग्मेदᳬसवनञ्जुषाणाः ॥ भरमाणावहमानाहवीᳬष्यस्मेधत्तवसवोवसूनिस्वाहा ॥ १८ ॥ याँ २ ॥ ऽआवहᳬ ॥

याँ २ ॥ ऽआवंहऽउशतोदेवदेवाँस्तान्प्रेरंयस्वेऽअग्नेसधस्त्थे ॥
जक्षिवाꣳसं÷पपिवाꣳसं श्रृविश्वेसुद्धर्म्मꣳस्वरातिष्ठतानु
स्वाहा ॥ १९ ॥ व्वयꣳहि । त्त्वाम्प्रयतियज्ञेऽअस्म्मिन्नग्नेहोतार
मवृणीमहीह ॥ ऋधंगयाऽऋधंगुताशमिष्ठाःप्प्रजानन्यज्ञमु
पयाहिव्विद्वान्त्स्वाहा ॥२०॥ देवांगातुविदः ॥ देवांगातुविदोगा
तुंव्वित्त्वागातुमित ॥ मनसस्पतऽइमन्देवयज्ञꣳस्वाहाव्वातेधाः
॥ २१ ॥ यज्ञंयज्ञम् ॥ यज्ञंयज्ञंगच्छयज्ञपतिंगच्छस्वाँय्योनिं

ज्ञश्च्छस्वाहा ॥ एषतेयुज्ञोयज्ञपतेसहसूक्तवाकुःसर्ववीरस्तञ्जु
षस्वस्वाहा ॥ २२ ॥ [८-६] माहिर्भूर्म्मापृदाकुः ॥
उरुꣳहिराजावरुणश्चकारसूर्य्यायपन्थामन्वेतवाऽउ ॥ अप
देपादाप्रतिधातवेकरुतापवक्ता[1]हृदयाविधश्चित् ॥ नमोवरुणा
याभिष्ठितोवरुणस्यपाशः ॥ २३ ॥ अग्नेरनीकम् ॥ अग्ने
रनीकमपऽआविवेशापान्नपात्प्रतिरक्षन्नसुर्य्यम् ॥ दमेदमेस

---

१ हृदयाविधश्चित् । अत्र अश्वरश्मिमतिसुमतिश्वसुतचारयद्युणिसेदिमेन्द्रियधारयचित्रभङ्गुरवयुनाश्वस्यहृदय० (शु य प्रा ३ अ ९८ सू) इत्यनेन वकारे परे हृदयाकारस्य दीर्घाकारो विधीयते । अतो हृदयशब्दाकारस्य दीर्घाकारः ।

मिधँ᳖स्यक्ष्यग्ग्नेप्प्रतितेजिह्वाघृतमुच्चरण्ण्युत्त्स्वाहा ॥ २४ ॥ समु
द्रेते ॥ समुद्द्रेतेहृदयमप्प्स्वन्तः सन्त्वाव्विशन्त्वोषधीरुतापः ॥
यज्ञस्यत्त्वायज्ञपतेसूक्क्तोक्क्तौनमोवाकेव्विधेमयत्त्स्वाहा ॥ २५ ॥
देवीरापः ॥ देवीरापऽएषवोगर्ब्भस्त्तꣳसुप्प्रीतꣳसुभृतम्बिभृत ॥
देवसोमैषतेलोकस्त्तस्म्मिञ्छञ्चवक्ष्वपरिचवक्ष्व ॥ २६ ॥ अव
भृथनिचुम्पुण । निचेरुरसिनिचुम्पुणः ॥ अवदेवैर्देवकृतमे
नोयासिषमवमर्त्त्यैर्म्मर्त्त्यकृतम्पुरुराव्ण्णोदेवरिषस्प्पाहिदेवा

नांꣳसुमिदंसि ॥ २७ ॥ [५-७] एजंतुदशंमास्यः ॥ एजं
तुदशंमास्योगर्भोजरायुंणासह ॥ यथायंवायुरेजंतियथासमु
द्रऽएजंति ॥ एवायन्दशंमास्योऽअस्त्रंज्जरायुंणासह ॥ २८ ॥
यस्यैते । यज्ञियोगर्भोयस्यैयोनिंर्हिरण्ययी ॥ अङ्गान्यह्रुं
तायस्यतम्मात्रासमंजीगमꣳस्वाहा ॥ २९ ॥ पुरुदस्मोवि
षुंरूपः ॥ पुरुदस्मोविषुंरूपऽइन्दुंरन्तर्म्महिमानमानञ्जधी
रंः ॥ एकंपदीन्द्विपदीन्त्रिपदीञ्चतुंष्पदीमष्टापंदीम्भुवनानु

प्प्रथन्ताᳬस्वाहा ॥ ३० ॥ मरुतोयस्य ॥ मरुतोयस्यहिक्षये
पाथादिवोविमहसः ॥ ससुगोपातमोजनः ॥ ३१ ॥ मही
द्यौः । पृथिवीचनऽइमँय्यज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरी
मभिः ॥ ३२ ॥ [५-८] आतिष्ठ । वृत्रहन्रथँय्युक्तातेब्र
ह्मणाहरी ॥ अर्वाचीनᳬसुतेमनोग्रावाकृणोतुवग्नुना ॥
उपयामगृहीतोसीन्द्रायत्त्वाषोडशिनऽएषतेयोनिरिन्द्रायत्त्वा



१ अत्र पिवा सोमम् (शु. य. प्रा. अ. १३० सू.) इत्यनेन पाथ इत्यस्य ह्रस्वाकारस्य दीर्घः । २ आतिष्ठ वृत्रहन्। अत्र तिष्ठाद्युदात्तम् । (शु. य. प्रा ३ अ. १०४ सू.),तिष्ठेत्येतत्पदं दीर्घमापद्यते यद्याद्युदात्तं भवति । इत्यनेन विधीयमानो दीर्घोकारः आतिष्ठपदस्य आद्युदात्तत्वाभावेन न दीर्घः ।

षोडशिनें ॥ ३३ ॥ [१-९] युंक्ष्वाहि । केशिनाहरीवृषणा कक्ष्यप्रा ॥ अथानऽइन्द्रसोमपागिरामुपश्रुतिञ्चर ॥ उपयामगृहीतोसीन्द्रायत्वाषोडशिनंऽएषतेयोनिरिन्द्रायत्वाषोडशिनें ॥ ३४ ॥ [१-१०] इन्द्रमित् ॥ इन्द्रमिद्धरीवहतोप्रतिधृष्टशवसम् ॥ ऋषीणाञ्चस्तुतीरुपंयज्ञञ्चमानुषाणाम् ॥ उपयामगृहीतोसीन्द्रायत्वाषोडशिनंऽएषतेयोनिरिन्द्रायत्वाषोडशिनें ॥ ३५ ॥ [१-११] यस्मान्न । जातःपरोऽअन्योऽअ

१ अत्र पिबा सोमम् (शु. य. प्रा. ३ अ १३० सू.), इत्यनेन, अकारस्य दीर्घे युक्ष्वाहि इति ।

स्तियऽआंविवेशभुवंनानिविश्श्वां ॥ प्रजापंतिᳬप्प्रजयांसᳪ
रराणस्त्रीणिज्ज्योतींᳪषिसचतेसषोंडशी ॥ ३६ ॥ इन्द्रश्श्च ।
सम्म्राड्वरुंणश्श्चराजातौतेंभक्षञ्चक्रतुरग्ग्रंऽएतम् ॥ तयोरहमनुंभ
क्षम्भंक्षयामिवाग्ग्देवीजुंषाणासोमंस्यतृप्प्यतुसहप्प्राणेनस्वा
हां ॥३७॥[२-१२] अग्ग्नेपवंस्व ॥ अग्ग्नेपवंस्वस्वपांऽअस्म्मे
वर्च्चंᳪसुवीर्य्यम् ॥ दधंद्द्रयिम्मयिपोषम् ॥ उपयामगृंहीतोस्य
ग्ग्नयेंत्त्वाव्वर्च्चंसऽएषतेयोनिंरग्ग्नयेंत्त्वाव्वर्च्चंसे ॥ अग्ग्नेव्वर्च्चस्विन्व

र्च्चीस्वाँस्त्त्वन्देवेष्ष्वसिव्वर्च्चीस्वानुहम्म्मनुष्ष्येषुभूयासम् ॥ ३८ ॥
[ १-१३ ] उत्तिष्ठुन्नोजसा ॥ उत्तिष्ठुन्नोजसासुहपीत्त्वीशिप्प्रेऽ
अवेपयः ॥ सोमामिन्द्रचमूसुतम् ॥ उपयामगृहीतोसीन्द्राय
त्त्वौजसऽएषतेयोनिरिन्द्रायत्त्वौजसे ॥ इन्द्रौजिष्ठौजिष्ठुस्त्त्व
न्देवेष्ष्वस्योजिष्ठोहम्म्मनुष्ष्येषुभूयासम् ॥ ३९ ॥ [ १-१४ ]
अदृश्श्रमस्य। केतवोव्विरश्म्मयोजनाँ२ ॥ ऽअनु ॥ भ्राजन्तोऽ
अग्ग्नयोयथा ॥ उपयामगृहीतोसिसूर्य्यायत्त्वाभ्र्राजायैषते

योनिꣳसूर्य्यायत्त्वाभ्भ्राजाय ॥ सूर्य्यभ्भ्राजिष्ठुभ्भ्राजिष्ठुस्त्व
न्देवेष्ष्वसिभ्भ्राजिष्ठोहम्मनुष्ष्येषुभूयासम् ॥ ४० ॥ [१-१५]
उदुत्त्यम् ॥ उदुत्त्यञ्जातवेदसन्देवंव्वहन्तिकेतवः ॥ दृशेव्वि
श्श्वायसूर्य्यम् ॥ उपयामगृहीतोसिसूर्य्यायत्त्वाभ्भ्राजायैषते
योनिꣳसूर्य्यायत्त्वाभ्भ्राजाय ॥ ४१ ॥ [१-१६] आजिग्घ्र ॥
आजिग्घ्रकलशम्मह्यात्त्वाव्विशन्त्त्विन्दवः ॥ पुनरूर्ज्जानिवर्त्त
स्वसानःसहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः

॥ ४२ ॥ इडेरन्तें ॥ इडैरन्तेहव्येकाम्म्येचन्द्रेज्ज्योतेदितिसरं

स्वतिमहिव्विश्श्रुति॥ एतातेऽअघ्न्येनामानिदुवेभ्योंमासुकृतं

ब्रूतात् ॥ ४३ ॥ [ २-१७ ] व्विनः ॥ व्विनऽइन्द्रुमृधोंजहि

नीचायंच्छपृतन्यतः ॥ योऽअस्म्माँ२ ॥ ऽअभिदासत्यधं

रङ्गमयातमः ॥ उपयामगृहीतोसीन्द्रायत्त्वाव्विमृधंऽएषते

योनिरिन्द्रायत्त्वाव्विमृधे ॥ ४४ ॥ [ १-१८ ] व्वाचस्पतिं ।

---

१ अस्य नामानि । अत्र नामानिपदस्थस्य निशब्दो बहुलम् (शु. य प्रा ३ अ १८ सू ) इति सूत्रेण पदान्तीयस्य निशब्दस्य लोपे प्राप्तेऽपि सूत्रे बहुलम् ग्रहणात्क्वचिन्न भवति । तेन नात्र लोप । २ अत्र पिबा सोमम् (शु. य. प्रा. ३ अ. १३० सू ) इत्यनेन दीर्घाकारे जाते गमयातम ।

विश्वकर्म्माणमूतयेमनोजुवंवाजेऽअ्द्याहुवेम ॥ सनोविश्वा
निहवंनानिजोषद्विश्वशंम्भूरवंसेसाधुकंर्म्मा ॥ उपयामगृंही
तोसीन्द्रायत्त्वाविश्वकंर्म्मणऽएषतेयोनिरिन्द्रायत्त्वाविश्वकं
र्म्मणे ॥ ४५ ॥ [ १-१९ ] विश्वकर्म्मंन्हविषा ॥ विश्वकर्म्मं
न्हविषावर्द्धनेनत्रातारमिन्द्रमकृणोरवद्ध्यम् ॥ तस्म्मैविशंः
समनमन्तपूर्व्वीरयमुग्ग्रोविहव्योयथासंत् ॥ उपयामगृंहीतो

१ अद्य हुवेम । अत्र अद्य तं हकारचकारभवतवृणीमहेदेवेषु (शु. य. प्रा ३ अ ११५ सू.) इत्यनेन अद्येत्येतत्पदं ह्रस्वहकारतकारचकारभवतवृणीमहेदेवेत्येषु परेषु दीर्घमापद्यते । इति हकारे परे अद्यशब्दाकारो दीर्घो जातः । तेन अद्याहुवेम इति ।

सीन्द्रायत्त्वाविश्वकर्म्मणऽएषतेयोनिरिन्द्रायत्त्वाविश्वकं
र्म्मणे ॥ ४६ ॥ [ १-२० ] उपयामगृहीतोसि ॥ उपयाम
गृहीतोस्यग्नयेत्त्वागायत्रच्छन्दसङ्गृह्णामीन्द्रायत्त्वात्रिष्टुप्च्छ
न्दसङ्गृह्णामिविश्वेब्भ्यस्त्वादेवेब्भ्योजगच्छन्दसङ्गृह्णाम्म्यनु
ष्टुप्तेभिगरः ॥४७॥ व्रेशीनान्त्वा ॥ व्रेशीनान्त्वापत्मन्नाधूं
नोमिकुकूननानान्त्वापत्मन्नाधूंनोमिभन्दनानान्त्वापत्मन्
न्नाधूंनोमिमदिन्तमानान्त्वापत्मन्नाधूंनोमिमधुन्तमाना

न्त्वापत्क्मन्नाधूनोमिशुक्रन्त्वाशुक्रऽआधूनोम्म्यह्नोरूपेसूर्य्यं
स्यरश्मिषु ॥ ४८ ॥ ककुभॅरूपं । वृषभस्यरोचतेबृह
च्छुक्रःशुक्रस्यपुरोगाःसोमःसोमस्यपुरोगाः ॥ यत्तेसोमादा
भ्यन्नामजागृवितस्मैत्त्वागृह्णामितस्मैतेसोमसोमायस्वा
हा ॥४९॥ उशिक्त्वम् ॥ उशिक्त्वन्देवसोमाग्नेःप्प्रियम्पाथो
पीहिवशीत्त्वन्देवसोमेन्द्रस्यप्प्रियम्पाथोपीह्यस्म्मत्सखात्त्व ॥७२॥
न्देवसोमव्विश्वेषान्देवानाम्प्प्रियम्पाथोपीहि ॥ ५० ॥[४-२१]

इहरतिः ॥ इहरतिरिहरमध्वमिहधृतिरिहस्वधृतिःस्वाहा ॥
उपसृजन्धरुणम्मात्रेधरुणोमातरन्धयन् ॥ रायस्पोषमस्मा
सुदीधरत्स्वाहा ॥ ५१ ॥ सत्रस्यऽऋद्धिः ॥ सत्रस्यऽऋद्धिर
स्यगन्मज्ज्योतिरमृताऽअभूम ॥ दिवम्पृथिव्याऽअध्यारुहामा
विदामदेवान्त्स्वर्ज्ज्योतिः ॥ ५२ ॥ युवन्तम् ॥ युवन्तमि
न्द्रापर्व्वतापुरोयुधायोनःपृतन्यादपतन्तमिद्धन्तंवज्रेणतन्त
मिद्धतम् ॥ दूरेचत्तायच्छन्त्सद्गहनंयदिनक्षत् ॥ अस्मा

कुद्दुराञ्ञँ२परिंशूराद्विश्श्वतोदुम्म्मादर्षीष्ट्टद्विश्श्वतं÷ ॥ भूब्भुर्वुंस्स्व÷
सुप्प्रजाऽप्प्रजाभि÷स्यामसुवीराव्वीरैःसुपोषांपोषै÷ ॥ ५३ ॥
[ ३-२२ ] परमेष्ठ्यभिधीतं[1] । प्प्रजापतिर्व्वाचिव्याहृतायाम
न्धोऽअच्छेतंसविताम्सन्न्यांव्विश्श्वकर्म्मादीक्षायांम्पूषासोमक्क
यंण्ण्यामिन्द्रश्श्च ॥ ५४॥ इन्द्रश्श्च । मरुतश्श्चक्क्रयायोपोत्त्थितो
सुरंपुण्ण्यमानोमित्रःक्क्रीतोव्विष्ण्णु÷शिपिविष्ट्टऽऊरावासन्नो



१ परमेष्ठ्यभिधीतः । अत्र परमेस्थ्यभिधीतः इत्यत्र भाविस्य. सः षं समानपदे ( शु य. प्रा. ३ अ. ५६ सू. ) इत्यनेन सकारस्य षत्वे पात्तथौ-मूर्धन्यम् ( शु. य प्रा. ३ अ. ८१ सू ) इत्यनेन षकारात्परौ तथौ मूर्धन्यत्वमापद्येते । तकारस्य टकारो थकारस्य ठकारो भवतीति ज्ञेयम् । एवं थकारस्य ठकारे कृते ऊष्मान्ताभ्यश्च स्पर्शा. ( शु य. प्रा. ३ अ. १०२ सू ) इत्यनेन ठकारस्य द्विस्वम् ।

व्विष्णुर्न्नरन्धिषः प्प्रोह्यमाणः सोमः ॥ ५५ ॥ प्प्रोह्यमाणः
सोमः ॥ प्प्रोह्यमाणः सोमऽआगतो व्वरुणऽआसन्द्यामासन्नो
ग्ग्निराग्नीध्रऽइन्द्रो हविर्द्धाने थर्व्वोपावह्रियमाणो व्विश्वेदेवाः
॥ ५६ ॥ व्विश्वेदेवाः ॥ व्विश्वेदेवाऽअंशुषुन्न्युप्तो व्विष्णुरा
प्प्रीतपाऽआप्प्याय्यमानो[1] यमः सूयमानो व्विष्णुः सम्भ्रियमा
णो व्वायुः पूयमानः शुक्रः पूतः शुक्रः क्षीरश्रीर्म्मन्थी सक्तुश्रीर्व्वि

१ आप्प्याय्यमान । अत्र आप्यायमानो यमो० (शु य प्रा. ४ अ. १५१ सू.) इत्यनेन द्वि यकारा संयोगा भवन्ति तेन द्वियकारे कृते पुनस्तृतीये क्रमजे यकारे प्राप्ते तस्य निषेधः ।

श्श्वेदेवाः ॥ ५७ ॥ विश्श्वेदेवाः ॥ विश्श्वेदेवाश्श्चमसेषून्नीतोसुर्होमायोद्यंतोरुद्द्रोहूयमानोव्वातोभ्यावृत्तोनृचक्षाः प्प्रतिक्ख्यातोभक्षोभक्ष्यमाणः पितरोनाराशंसाः सन्नः सिन्धुः ॥ ५८ ॥

सन्नः सिन्धुः ॥ सन्नः सिन्धुरवभृथायोद्यतः समुद्रोभ्यवह्रियमाणः सलिलः प्प्रप्लुतोययोरोजसास्कभितारजांसिव्वीर्य्येभिर्व्वीरतमाशविष्ठा ॥ यापत्त्येतेऽअप्प्रतीतासहोभिर्व्विष्णूऽअगन्वरुणापूर्व्वहूतौ ॥ ५९ ॥ देवान्दिवम् ॥ देवान्दिवम

गन्व्यज्ञस्त्ततोमाद्रविणमष्टुमनुष्ष्यानन्तरिक्षमगन्व्यज्ञस्त्ततो
माद्रविणमष्टुपितृन्पृथिवीमगन्व्यज्ञस्त्ततोमाद्रविणमष्टुयङ्क्त्र
लोकमगन्व्यज्ञस्त्ततोमेभद्रमभूत् ॥ ६० ॥ चतुस्त्रिꣳशत्त
न्तवꣳ ॥ चतुस्त्रिꣳशत्तन्तवोयेवितत्त्निरेयइमँय्यज्ञꣳस्व
धयाददन्ते ॥ तेषाञ्छिन्नꣳसम्वेतद्दधामिस्वाहाघर्म्मोऽ
अप्येतुदेवान् ॥ ६१ ॥ यज्ञस्यदोहः ॥ यज्ञस्यदोहोवित
तःपुरुत्रासोऽअष्टधादिवमन्वाततान ॥ सयज्ञधुक्ष्वमहिमे

प्प्रजायां॑ र॒यस्प्पोषं॑ वि॒श्श्वमायु॑रशीय॒स्वाहा॑ ॥ ६२ ॥ आप॑
वस्व ॥ आप॑वस्व॒हिर॑[1]ण्य॒वद॒श्श्व॑वत्त्सोम॒व्वीर॑वत् ॥ व्वाज॒ङ्गोम॑
न्तमाभ॑र॒स्वाहा॑ ॥ ६३ ॥ [ १०-२३ ] ॥ इतिश्रीवाजसनेय्य
संहितायामष्टमोऽध्यायः ॥ ८ ॥ श्रीवेदपुरुषाय नमः ॥ अनु
वाकसूत्रम् ॥ देवसवितश्चतस्र, इंद्रस्यवज्रः पंच, देवस्याहं
दश, पयेस्वाहातिस्रो, वाजस्येममष्टा, वग्निरेकाक्षरेणचतुष्कौ,

१ हिरण्यवदश्ववत् । अत्र अश्वशब्दस्य वत्परे अश्वरश्मि० (शु य प्रा. ३ अ ९८ सू ) इत्यनेन अश्वशब्दाकारस्य दीर्घाकारे प्राप्ते नाश्ववद्धिरण्यात् (शु य. प्रा. ३ अ. ९९ सू ) इत्यनेन हिरण्यशब्दात्परस्याश्वशब्दाकारो न दीर्घ इति निषेधात्तत्राश्वशब्दाकारो दीर्घः ।

षतेचतुष्कौ, सवितात्वाद्वे, अष्टौचत्वारिꣳशत् [ अ. ९ मं. ४०
अनु. ८ ] हरिः ॐ ॥ देवंसवितः ॥ देवंसवितःप्प्रसुवयज्ञम्प्रसु
वयज्ञपतिम्भगाय ॥ दिव्योगन्धर्व्वःकेतपूःकेतन्नःपुनातुव्वाच
स्प्पतिर्व्वाजंन्नःस्वदतुस्वाहा ॥ १ ॥ ध्रुवसदन्त्वा । नृषदम्मनः
सदमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रा
यत्त्वाजुष्टतमम् ॥ अप्सुषदन्त्वाघृतसदंव्योमसदमुपयाम
गृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टत

मम् ॥ पृथिविसदन्त्वान्तरिक्षसदन्दिविसदन्देवसदन्नाकसद
मुपयामगृहीतोसीन्द्रायत्त्वा जुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्राय
त्त्वा जुष्टतमम् ॥ २ ॥ अपाᳬरसम् ॥ अपाᳬरसमुद्वयसᳬ
सूर्य्येसन्तᳬसमाहितम् ॥ अपाᳬरसस्ययोरसस्तंवोगृह्णाम्म्यु
त्तममुपयामगृहीतोसीन्द्रायत्त्वा जुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रा

१ पृथिविसदन्त्वा । अत्र भाविभ्य. स ष समानपदे (शु य. प्रा ३ अ ५६ सू ) इत्यनेन समानपदे षत्वप्राप्तौ पृथिविदिव्युपरिचर्षणि-शकुनियासिभ्य (शु य प्रा ३ अ ८३ सू ) इत्यनेन पृथिविपरस्य सस्य षत्वनिषेध.। एवं दिविसदन्देवसदम् इत्यादिषु बोध्यम् । २ अपाᳬरसम् अत्र। दीर्घादर्द्धमात्रा पूर्वाचाध्यर्द्धा (शु य प्रा. ४ अ १४९ सू ) इत्यनेन दीर्घात्स्वरात्परोऽनुस्वारोऽर्धमात्राकालो भवति तेन अपामित्य स्याऽऽकारात्परस्य मकारस्यानुस्वारस्यार्द्धमात्राप्रदर्शको ह्रस्वो गुंकारोऽत्र ज्ञेय.। एव अपाᳬरसस । रजाᳬसि, प्रजायाᳬरायस्पोषम् ।

यत्त्वाजुष्टंतमम् ॥ ३ ॥ ग्रहाऽऊर्ज्जाहुतयः ॥ ग्रहाऽऊर्ज्जाहुत
योव्व्यन्तोव्विप्प्रांयमतिम् ॥ तेषांव्विशिप्प्रियाणांव्वोहमिषमूर्ज्जं
समग्ग्रभमुपयामगृहीतोसीन्द्रांयत्त्वाजुष्टंङ्गृह्णाम्म्येषतेयोनि
रिन्द्रांयत्त्वाजुष्टंतमम् ॥ सम्पृचौस्स्थःसम्मांभद्रेणपृङ्क्तंव्विपृचौ
स्स्थोव्विमांपाप्मनांपृङ्क्तम् ॥ ४ ॥ [४-१] इन्द्रस्यवज्ज्रः ॥
इन्द्रस्यवज्ज्रोसिव्वाजसास्त्त्वयायंव्वाजःसेत् ॥ व्वाजंस्यनुप्प्र
सवेमातरंम्महीमदितिन्नामवचंसाकरामहे ॥ यस्यामिदंव्विश्व

म्भुवनमाविवेशतस्यान्नोदेवः सविताधर्म्मसाविषत् ॥ ५ ॥
अप्स्वन्तः॥ अप्स्वन्तरमृतमप्सुभेषजमपामुतप्रशस्तिष्व
श्वाभवतव्वाजिनः ॥ देवीरापोयोवऽऊर्म्मिः प्प्रतूर्त्तिः ककुन्मा
न्वाजसास्तेनायंव्वाजᳬसेत् ॥ ६ ॥ व्वातोवा ॥ व्वातोवामनो
वागन्धर्व्वाः सप्तविᳬशतिः ॥ तेऽअग्ग्रेश्वमयुञ्जँस्तेऽअस्मि
ञ्जवमादधुः ॥ ७ ॥ व्वातरᳬहाभव । व्वाजिन्युज्यमानऽइन्द्र
स्येवदक्षिणः श्रियैधि ॥ युञ्जन्तुत्त्वामरुतोव्विश्ववेदसऽआतेत्त्व

ष्ठांपृत्सुजुवन्दधातु ॥८॥ जवोयः ॥ जवोयस्तेवाजिन्निहितो
गुहायःश्श्येनेपरीत्तोऽअचरच्चवाते ॥ तेननोवाजिन्बलवान्ब
लेनवाजजिच्चभवसमनेचपारयिष्णुः ॥ वाजिनोवाजजितो
वाजꣳसरिष्यन्तोबृहस्पतेर्भागमवजिघ्रत ॥९॥ [५-२]
देवस्याहम् ॥ देवस्याहꣳसवितुःसवेसत्त्यसवसोबृहस्पतेरुत्त
मन्नाकꣳरुहेयम् ॥ देवस्याहꣳसवितुःसवेसत्त्यसवसऽइन्द्रस्यो
त्तमन्नाकꣳरुहेयम् ॥ देवस्याहꣳसवितुःसवेसत्त्यप्प्रसवसो

बृहस्पतेरुत्तमन्नाकमरुहम् ॥ देवस्याहꣳसवितुः सवे सत्यप्र
सवस ऽइन्द्रस्योत्तमन्नाकमरुहम् ॥ १० ॥ बृहस्पते वाजम् ॥
बृहस्पते वाजञ्जय बृहस्पतये वाचं वदत बृहस्पतिं वाजञ्जाप
यत ॥ इन्द्र वाजञ्जयेन्द्राय वाचं वदतेन्द्रं वाजञ्जापयत ॥ ११ ॥
एषा वः ÷ ॥ एषा वꣳसा सत्या संवागभूद्यया बृहस्पतिं वाजम
जीजपताजीजपत बृहस्पतिं वाजं वनस्पतयो विमुच्यध्वम् ॥
एषा वꣳसा सत्या संवागभूद्ययेन्द्रं वाजमजीजपताजीजपतेन्द्रं

व्वाजंव्वनस्प्पतयोव्विमुञ्चयद्ध्वम् ॥१२॥ देवस्याहम् ॥ देवस्याहᳬं सवितुःसवेसत्त्यप्प्रंसवसोबृहस्प्पतेर्व्वाजजितोव्वाजञ्जेषम् ॥ व्वाजिनोव्वाजजितोद्ध्वंनस्कभ्नुवन्तोयोजंनामिमानाᳬंकाष्ठाङ्गच्छत ॥ १३ ॥ एषस्यः ॥ एषस्यव्वाजीक्षिपणिन्तुरण्ण्यतिग्ग्रीवायाम्बद्धोऽअपिकक्षऽआसनि ॥ क्रतुन्दधिक्क्राऽअनुसᳬंसनिष्ष्यदत्पथामङ्काᳬंस्यन्वापनीफणत्स्वाहा ॥ १४ ॥

१ एष स वाजी । अत्र स एव च ( शु.य.प्रा ३ अ. १७ सू ) इति सूत्रेण सपरे व्यञ्जने एष इत्यस्य विसर्गस्य लोप । तथैव स इत्यस्य वाजीवटिते वकारे व्यञ्जने परे विसर्जनीयस्य लोप. । तेन एषसवाजी । अत्र लोपागमविकारप्रकृतिभावाना चतुर्णां सन्धीना मध्येऽय लोपनामा सन्धिर्विज्ञेय ।

उतस्म्मं ॥ उतस्म्मास्यद्द्रवंतस्तुरण्ण्यतः पुण्र्णन्नवेरनुंवातिप्प्र
गर्द्धिनं÷ ॥ श्येनस्यैवद्ध्रजंतोऽअङ्कुसम्पारिंदधिक्क्राव्ण्णं÷
सहोर्ज्जांतरिंत्रतःस्वाहा ॥ १५ ॥ शन्नं÷ ॥ शन्नोंभवन्तुवा
जिनोहवेषुदेवतांतामितद्द्रवंःस्वर्क्काः ॥ जम्भयन्तोहिंवृकंः
रक्षांठंसिसनेम्म्यस्म्मद्युयवन्नमीवाः ॥ १६ ॥ तेनं÷ ॥ तेनोऽ
अर्वन्तोहवनश्श्रुतोहवंविश्श्वेंशृण्ण्वन्तुवाजिनोंमितद्द्रवंः ॥ सह
स्स्रसामेधसांतासनिष्ष्यवोंमहोयेधनंःसमिथेषुंजाभ्भ्रिरे ॥१७॥

व्वाजेवाजेवत । व्वाजिनोनोधनेषुव्विप्प्राऽअमृताऽऋतज्ज्ञाः ॥
अस्यमद्ध्वः पिबतमादयद्ध्वन्तृप्प्तायातपथिभिर्देवयानैः ॥ १८ ॥
आमा ॥ आमाव्वाजस्यप्प्रसवोजगम्म्यादेमेद्यावापृथिवीव्विश्श्व
रूपे ॥ आमागन्ताम्पितरामातराचामासोमोऽअमृतत्त्वेनग
म्म्यात् ॥ व्वाजिनोव्वाजजितोव्वाजꣳससृवाꣳसोबृहस्प्पते
र्भागमवजिग्घ्रतनिमृजानाः ॥ १९ ॥ [ १०-३ ] आप
येस्वाहा । स्वापयेस्वाहापिजायस्वाहाक्क्रतवेस्वाहाव्वसवेस्वाहा

हु॑र्प्पत॑ये॒स्वाहा॒ह्ने॑मु॒ग्ग्धाय॒स्वाहा॑मु॒ग्ग्धाय॑वै॒नꣳशि॒नाय॒स्वाहा॑वि
नꣳशि॒नऽआ॒न्त्याय॒नाय॒स्वाहा॒न्त्याय॑भौव॒नाय॒स्वाहा॒भुव॑नस्य
पत॑ये॒स्वाहा॒धि॑पतये॒स्वाहा॑ ॥ २० ॥ आयु॑र्य॒ज्ञेन॑ । कल्प्प
ताम्प्रा॒णोय॒ज्ञेन॑कल्प्पताञ्चक्षु॒र्य॒ज्ञेन॑कल्प्पता॒ꣳश्रोत्त्र॑य॒ज्ञेन
कल्प्पताम्पृ॒ष्ठँय॒ज्ञेन॑कल्प्पतांय॒ज्ञोय॒ज्ञेन॑कल्प्पताम् ॥ प्र॒जा
पते॑ꣳप्प्र॒जाऽअ॑भूम॒स्व॑र्दे॑वाऽअगन्मा॒मृता॑ऽअभूम ॥ २१ ॥



१ अहर्प्पतये । अत्र समानपदे च (शु. य प्रा ३ अ. ३० सू.) इत्यनेन सकारे प्राप्ते, अहःपतौ रेफम् (शु य. प्रा ३ अ. ३९ सू.) इत्यनेन पतिशब्दे परे अहरिलस्य विसर्जनीयस्य रेफः । तत ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन पकारस्य द्वित्वम् ।

अस्मेवः ॥ अस्मेवोऽअस्त्विन्द्रियमस्मेनृम्णमुतक्क्रतुर
स्मेवर्च्चाᳫंसिसन्तुवः ॥ नमोमात्रेपृथिव्यैनमोमात्रेपृथि
व्याऽइयन्तेराड्यन्तासियमनोद्ध्रुवोसिधरुणः ॥ कृष्यैत्त्वा
क्षेमायत्त्वारय्यैत्त्वापोषायत्त्वा ॥ २२ ॥ [ ३-४ ] व्वाज
स्येमम् ॥ व्वाजस्येमम्प्रसवःसुषुवेग्ग्रेसोमᳫंराजानमोषधीष्व
प्सु ॥ ताऽअस्मभ्यम्मधुमतीर्भवन्तुव्वयᳫंराष्ट्रेजागृयाम
पुरोहिताःस्वाहा ॥ २३ ॥ व्वाजस्येमाम् ॥ व्वाजस्येमाम्प्रसवःशिश्रि

श्रियेदिवमिमाचविश्वाभुवनानिसम्राट् ॥ अदित्सन्तन्दा
पयतिप्रजानन्त्सनोरयिꣳसर्ववीरन्नियच्छतुस्वाहा ॥ २४ ॥
वाजस्यनु । प्रसवऽआबभूवेमाचविश्वाभुवनानिसर्वतः ॥
सनेमिराजापरियातिविद्वान्प्रजाम्पुष्टिंवर्द्धयमानोऽअस्मेस्वा
हा ॥ २५ ॥ सोमꣳराजानम् । सोमꣳराजानमवसेग्निम
न्वारभामहे ॥ आदित्यान्विष्णुꣳसूर्यम्ब्रह्माणञ्चबृहस्प
तिꣳस्वाहा ॥ २६ ॥ अर्यमणम्बृहस्पतिम् ॥ अर्यमण

न्बृहुस्प्पातिमिन्द्रुन्दानांयचोदय ॥ व्वाचंव्विष्णुहुसरस्वतीᳪं सवितारञ्च्वाजिनᳪंस्वाहा ॥ २७ ॥ अग्नेऽअच्छ ॥ अग्नेऽ अच्छांवदेहनःप्प्रतिनःसुमनांभव ॥ प्रनोयच्छसहस्रजित्त्वᳪं हिधनदाऽआसिस्वाहां ॥ २८ ॥ प्रनः ॥ प्रनोयच्छत्त्वर्यमा प्प्रपूषाप्प्रबृहुस्प्पतिः ॥ प्रवाग्गदेवीददातुनःस्वाहां ॥२९॥ देव स्यत्त्वा । सवितुश्प्प्रसवेश्विनोर्बाहुभ्यांम्पूष्णोहस्ताभ्याम् ॥

१ प्रनो यच्छत्वर्यमा । अत्र ऋषरेभ्यो नकारो णकारᳪं समानपदे (शु. य. प्रा. ३ अ. ८४ सू.) इत्यनेन ऋकारषकाररेफेभ्य उत्तरो नकारो णकारमापद्यते समानपदे । अनेन समानपदे णत्वविधानादत्र प्र नो इति पदयो समानपदत्वाभावान्न णत्वम् ।

सर॑स्वत्यै॒ वा॒चो य॒न्तुर्य॒न्त्रियै॑ दधामि॒ बृह॒स्पते॒ष्ट्वा सा॑म्राज्ज्येना
भिषि॑ञ्चाम्यसौ ॥ ३० ॥ [ ८-५ ] अ॒ग्निरेका॑क्षरेण । प्रा॒णमुद॑
जय॒त्तमु॒ज्जे॑षम॒श्विनौ॒ द्व्य॑क्षरेण द्वि॒पदो॑ मनु॒ष्या॒नुद॑जयता॒न्ता
नु॒ज्जे॑षं॒ विष्णु॒स्त्र्य॑क्षरेण॒ त्रीँल्लो॒कानुद॑जय॒त्ताँनु॒ज्जे॑ष॒ꣳ सोम॒श्चतु॑र
क्षरेण॒ चतु॑ष्पदः प॒शूनुद॑जय॒त्ताँनु॒ज्जे॑षम्पू॒षा पञ्चा॑क्षरेण ॥ ३१ ॥
पू॒षा पञ्चा॑क्षरेण ॥ पू॒षा पञ्चा॑क्षरेण॒ पञ्च॒ दिश॒ उद॑जय॒त्ता उज्जे॑

१ अभिषिञ्चामि । अत्र असेश्च (शु. य. प्रा. ३ अ. ६५ सू.) इत्यनेन असे· परस्य सिञ्चामीतिपदघटितस्य सकारस्य षत्वे रूपम् ।

षड्सविताषडक्षरेणषड्ऋतूनुदंजयत्तानुज्जेषम्मरुतंःसप्ताक्षरे
णसप्तग्राम्यान्पशूनुदंजयँस्तानुज्जेषम्बृहस्पतिरष्टाक्षरेण
गायत्रीमुदंजयत्तामुज्जेषम्मित्रोनवाक्षरेण ॥ ३२ ॥ मित्रो
नवाक्षरेण । त्रिवृतँस्तोममुदंजयत्तमुज्जेषंवरुणोदशाक्षरेण
विराजमुदंजयत्तामुज्जेषमिन्द्रऽएकादशाक्षरेणत्रिष्टुभमुदंज
यत्तामुज्जेषंविश्वेदेवाद्वादशाक्षरेणजगतीमुदंजयँस्तामुज्जेषंव
संवत्स्रयोदशाक्षरेण ॥ ३३ ॥ वसंवस्त्रयोदशाक्षरेण । त्रयोद

शᳪंस्तोममुदजयँस्तमुज्जेषᳪंरुद्राश्चतुर्दशाक्षरेणचतुर्दशᳪं
स्तोममुदजयँस्तमुज्जेषमादित्याःपञ्चदशाक्षरेणपञ्चदशᳪंस्तो
ममुदजयँस्तमुज्जेषमदितिःषोडशाक्षरेणषोडशᳪंस्तोममुद
जयत्तमुज्जेषम्प्रजापतिःसप्तदशाक्षरेणसप्तदशᳪंस्तोममुद
जयत्तमुज्जेषम् ॥ ३४ ॥ [४-६] एषते । निर्ऋतेभागस्तं
जुषस्वस्वाहाग्निनेत्रेभ्योदेवेभ्यःपुरःसद्भ्यःस्वाहायमनेत्रे

१ अदितिःषोडशा । अत्र प्रत्ययसवर्णम्मुदि शाकटायनः (शु. य. प्रा. ३ अ. ९ सू.) इति विसर्गस्य परसवर्णे प्राप्ते अविकार शाकल्यः शषसेषु (शु. य. प्रा. ३ अ. १० सू.) इत्यनेन परसवर्णनिषेधाद्विसर्ग एव । लोपागमविकारप्रकृतिभावानां चतुर्णां सन्धीनां मध्ये प्रकृतिभावाख्योऽयं सन्धिः ।

भ्योदेवेभ्योदक्षिणासद्भ्यःस्वाहाविश्वदेवनेत्रेभ्योदेवेभ्यः
पश्चात्सद्भ्यःस्वाहामित्रावरुणनेत्रेभ्योवामरुन्नेत्रेभ्योवादेवे
भ्यऽउत्तरासद्भ्यःस्वाहासोमनेत्रेभ्योदेवेभ्यऽउपरिसद्भ्योदुव
स्वद्भ्यःस्वाहा॥३५॥येदेवाः॥येदेवाऽअग्निनेत्राःपुरःसदस्ते
भ्यःस्वाहायेदेवायमनेत्रादक्षिणासदस्तेभ्यःस्वाहायेदेवा
विश्वदेवनेत्राःपश्चात्सदस्तेभ्यःस्वाहायेदेवामित्रावरुणने
त्रावामरुन्नेत्रावोत्तरासदस्तेभ्यःस्वाहायेदेवाःसोमनेत्राऽ

उपरिसद्दोदुर्वस्वन्तस्स्तेभ्यःस्वाहा ॥ ३६ ॥ अग्नेसहस्व ॥
अग्नेसहस्वपृतनाऽअभिमातीरपास्य ॥ दुष्टरस्तरन्नरातीर्वर्च्चो
धायज्ञवाहसि ॥ ३७ ॥ देवस्यत्त्वा । सवितुः प्प्रसवेश्विनो
र्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ उपाꣳशोर्वीर्य्येणजुहोमि
हतꣳरक्षःस्वाहारक्षसान्त्वावधायावधिष्म्मरक्षोवधिष्म्मामु
मसौहतः ॥ ३८ ॥ [४-७] सवितात्त्वा । सवानाꣳसुवता

१ उपरिसद । अत्र भाविम्य स षं समानपदे (शु. य. प्रा. ३ अ ७६ सू ) इत्यनेन षत्वप्राप्तौ पृथिविदिव्युपरिचर्षणिशकुनियासिभ्य (शु. य. प्रा ३ अ ८४ सू ) इत्यनेन उपरिशब्दात्परस्य सद इत्यस्य सस्य प्रकृतिभावे जाते न षत्वम् ।

मुग्निर्गृहपतीनाꣳसोमोव्वनस्प्पतीनाम् ॥ बृहस्प्पतिर्व्वाचऽ
इन्द्रोज्ज्यैष्ठ्यायरुद्रः पशुब्भ्योमित्रः सत्त्योव्वरुणोधर्म्मपतीना
म् ॥ ३९ ॥ इमन्देवाः ॥ इमन्देवाऽअसपत्नꣳसुवद्ध्वम्महते
क्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्ज्यायेन्द्रस्येन्द्रियाय ॥
इममुष्ष्यपुत्रममुष्ष्यैपुत्रमस्यैव्विशऽएषवोमीराजासोमो
स्माकम्ब्राह्मणानाꣳराजा ॥ ४० ॥ [२-८] ॥ इतिश्रीवाज
सनेयसंहितायांनवमोऽध्यायः ॥ ९ ॥ श्रीवेदपुरुषायनमः ॥

अनुवाकसूत्रम् ॥ अपोदेवाश्चतस्रः, सोमस्यात्विषिः पञ्च,
वेष्टादन्दशूकाः सप्त, सोमस्यत्वाचतस्र, ऽइन्द्रस्यवज्रः पञ्च,
स्योनासिचतस्रः, सवित्राप्रसवित्रैका, श्विभ्यांपच्यस्वचतस्रो,
द्यौचतुस्त्रिꣳशत् [अ. १० मं. ३४ अनु. ८] हरिः ॐ॥ अपोदेवाꣳ॥
अपोदेवामधुमतीरगृभ्णन्नूर्ज्जस्वतीराजस्वश्चितानाꣳ ॥ याभि
र्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीꣳ ॥ १ ॥

---

१ अभ्यषिञ्चन् । अभि. असिञ्चन् । इति द्वे पदे अत्र अभेश्च (शु. ३ अ. ६५ सू.) अभेरुपसर्गात्परस्य सिञ्चते सकार. षकारमापद्यते संहितायाम् । इति इत्यनेनासिञ्चन्पदघटिताकारस्य व्यवधानेन षत्वाप्राप्तौ अव्यवहितोऽपि (शु. य. प्रा. ३ अ. ६६ सू.) इत्यनेन व्यवधानेऽपि षकारे रूपम् ।

वृ॒ष्ण्णं॑ऽऊ॒र्म्मिः॥ वृ॒ष्ण्णं॑ऽऊ॒र्म्मिर्र॑सिराष्ट्र॒दा॒रा॑ष्ट्रम्मे॑देहि॒स्वाहा॑

वृ॒ष्ण्णं॑ऽऊ॒र्म्मिर्र॑सिराष्ट्र॒दा॒रा॑ष्ट्रम॒मुष्म्मै॑देहिवृ॒ष॒से॒नो॑सिराष्ट्र॒दा॒रा॑

ष्ट्रम्मे॑देहि॒स्वाहा॑वृ॒ष॒से॒नो॑सिराष्ट्र॒दा॒रा॑ष्ट्रम॒मुष्म्मै॑देह्यु॒र्त्थैत॑स्त्थ

॥ २ ॥ अ॒र्त्थैत॑स्त्थ । रा॒ष्ट्र॒दा॒रा॑ष्ट्रम्मे॑द॒त्त॒स्वाहा॑र्त्थैत॑स्त्थरा॑ष्ट्र॒

दा॒रा॑ष्ट्रम॒मुष्म्मै॑द॒त्तौजं॑स्वतीस्त्थरा॑ष्ट्र॒दा॒रा॑ष्ट्रम्मे॑द॒त्त॒स्वाहौजं॑स्व

तीस्त्थरा॑ष्ट्र॒दा॒रा॑ष्ट्रम॒मुष्म्मै॑द॒त्ताप॑÷परि॒वा॒हि॒णी॑स्त्थरा॑ष्ट्र॒दा॒रा॑ष्ट्र

म्मे॑द॒त्त॒स्वाहाप॑÷परि॒वा॒हि॒णी॑स्त्थरा॑ष्ट्र॒दा॒रा॑ष्ट्रम॒मुष्म्मै॑द॒त्तापा

म्पतिरसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहापाम्पतिरसिराष्ट्रदाराष्ट्रममु
ष्मैदेह्यपाङ्गर्भोसिराष्ट्रदाराष्ट्रम्मेदेहिस्वाहापाङ्गर्भोसिराष्ट्र
दाराष्ट्रममुष्मैदेहिसूर्य्यत्वचसस्स्थ ॥ ३ ॥ सूर्य्यत्व
चसस्स्थ । राष्ट्रदाराष्ट्रम्मेदत्तस्वाहासूर्य्यत्वचसस्स्थराष्ट्रदा
राष्ट्रममुष्मैदत्तसूर्य्यवर्चसस्स्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहासूर्य्य
वर्चसस्स्थराष्ट्रदाराष्ट्रममुष्मैदत्तमान्दास्स्थराष्ट्रदाराष्ट्रम्मेदत्त
स्वाहामान्दास्स्थराष्ट्रदाराष्ट्रममुष्मैदत्तव्रजक्षितस्स्थराष्ट्रदा

राष्ट्रम्मेदत्तस्वाहांव्रजक्षितंस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तवाशा
स्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहावाशास्त्थराष्ट्रदाराष्ट्रममुष्मैदत्त
शविष्ठास्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाशविष्ठास्त्थराष्ट्रदाराष्ट्रम
मुष्मैदत्तशक्करीस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाशक्करीस्त्थराष्ट्र
दाराष्ट्रममुष्मैदत्तजनभृतंस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहाजनभृ
तंस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तविश्वभृतंस्त्थराष्ट्रदाराष्ट्रम्मेदत्त
स्वाहाविश्वभृतंस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तापःस्वराजंस्त्थरा

ष्टुदाराष्ट्रममुष्मैदत्त ॥ मधुमतीम्मधुमतीभिः पृच्यन्ताम्महि
क्षत्रङ्क्षत्रियायवन्वानाऽअनाधृष्टाःसीदतसहौजसोमहिक्षत्रङ्क्ष
त्रियायुदधतीः ॥ ४ ॥ [ ४-१ ] शतम् ॥ ४०० ॥ सोमस्यत्त्वि
षिः ॥ सोमस्यत्त्विषिरसितवेवमेत्त्विषिर्भूयात् ॥ अग्नयेस्वा
हासोमायस्वाहासवित्रेस्वाहासरस्वत्यैस्वाहापूष्णेस्वाहाबृह
स्पतयेस्वाहेन्द्रायस्वाहाघोषायस्वाहाश्लोकायस्वाहाऽंशाय
स्वाहाभगायस्वाहार्यम्णेस्वाहा ॥ ५ ॥ पवित्रैस्त्थः ॥ पवि

त्रैस्त्थोव्वैष्णव्व्यौसवितुर्व्वःप्प्रसवऽउत्पुनाम्म्यच्छिद्रेणपवि
त्रेणसूर्य्यस्यरश्मिभिः ॥ अनिभृष्टमसिव्वाचोबन्धुस्तपो
जाःसोमस्यदात्रमसिस्वाहाराजस्वः ॥ ६ ॥ सधमादोद्युम्म्नि
नीः ॥ सधमादोद्युम्म्निनीरापऽएताऽअनाधृष्टाऽअपस्योव्वसा
नाः ॥ पस्त्यासुचक्रेव्वरुणःसधस्त्थमपाᳪंशिशुर्म्मातृतमा
स्वन्तः ॥ ७ ॥ क्षत्रस्योल्बम् ॥ क्षत्रस्योल्बमसिक्षत्रस्यजरा
य्वसिक्षत्रस्ययोनिरसिक्षत्रस्यनाभिरसीन्द्रस्यव्वार्त्रघ्नमसिमि

व्वरुणस्यासिस्त्वयायंव्वृत्रंव्वधेत् ॥ दृवासिरुजासिक्षु
मासि ॥ पातैनम्प्राञ्चम्पातैनम्प्रत्यञ्चम्पातैनन्तिर्य्यञ्चन्दि
ग्भ्यः पात ॥ ८ ॥ आविर्म्मर्य्याः ॥ आविर्म्मर्य्याऽआ
वित्तोऽअग्निर्गृहपतिराविंत्तऽइन्द्रोवृद्धश्रवाऽआवित्तौमित्रा
वरुणौधृतव्रतावावित्तःपूषाविश्ववेदाऽआवित्तेद्यावापृथिवीवि
श्वशम्भुवावावित्तादितिरुरुशर्म्मा ॥ ९ ॥ [ ५-२ ] अवेष्टा
दन्दशूकाः ॥ अवेष्टादन्दशूकाःप्राचीमारोहगायत्रीत्वांव

तुरथन्तरꣳसामंत्रिवृत्स्तोमोव्वसन्तऽऋतुर्ब्रह्मद्रविणन्दक्षिणा
मारोह ॥ १० ॥ दक्षिणामारोह । त्रिष्टुप्प्त्वावतुबृहत्सामपञ्चद
शस्तोमोग्ग्रीष्मऽऋतुःक्षत्रन्द्रविणम्प्रतीचीमारोह ॥ ११ ॥
प्रतीचीमारोह । जगतीत्वावतुव्वैरूपꣳसामसप्तदशस्तोमो
व्वर्षाऽऋतुर्व्विड्द्रविणमुदीचीमारोह ॥ १२ ॥ उदीचीमारोहा ।
नुष्टुप्त्वावतुव्वैराजꣳसामैकविꣳशस्तोमः शरदृतुःफलन्द्रवि
णमूर्ध्वामारोह ॥ १३ ॥ ऊर्ध्वामारोह । पङ्क्तिस्त्वावतुशाक्वर

रैवतेसामंनीत्रिणवत्रयास्त्रिहंशौस्तोमौहेमन्तशिशिरावृतूवर्च्चो
द्रविणम्प्रत्त्यंस्तन्नमुचेहंशिरः ॥ १४ ॥ सोमंस्यत्त्विषिः ॥
सोमंस्यत्त्विषिरसितवेवमेत्त्विषिर्भूयात् ॥ मृत्योःपाह्योजोसिसहोस्यमृतंमसि ॥ १५ ॥ हिरंण्ण्यरूपाऽउषसः ॥
हिरंण्ण्यरूपाऽउषसोव्विरोकऽउभाविन्द्राऽउदिथहंसूर्य्यश्च ॥
आरोहतंवरुणामित्त्रगर्त्तन्ततश्चक्षाथामदितिन्दितिञ्चमित्त्रोसि
वरुणोसि ॥ १६ ॥ [ ७-३ ] सोमंस्यत्त्वा । द्युम्नेना

भिषिञ्चाम्म्यग्नेर्ब्भ्राजसासूर्य्यस्यवर्च्चसेन्द्रस्येन्द्रियेण ॥ क्षत्रा
णांक्षत्रपतिरेध्यतिदिद्यून्पाहि ॥ १७ ॥ इमन्देवाः ॥ इम
न्देवाऽअसपत्नꣳसुवध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्यायमहते
जानराज्ज्यायेन्द्रस्येन्द्रियाय ॥ इमममुष्यपुत्रममुष्यैपुत्र
मस्यैविशऽएषवोमीराजासोमोस्म्माकम्ब्राह्मणानाꣳराजा
॥ १८ ॥ प्रपर्व्वतस्य । वृषभस्यपृष्ठान्नावश्चरन्तिस्वसिचऽइया
नाः ॥ ताऽआववृत्रन्नधरागुदक्ताऽअहिम्बुध्न्यमनुरीयमा

शु. शु. य. सं संहि. ८ ॥८९॥

पू. अ. ॥ १० ॥

णाहं ॥ व्विष्णोर्व्विक्क्रमणमसिव्विष्णोर्व्विक्क्रान्तमसिव्विष्णोहं
क्क्रान्तमसि ॥ १९ ॥ प्रजापतेन । त्वदेतान्यन्योव्विश्वारूपा
णिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्त्वयमुमु
ष्ष्यपितासावस्यपिताव्वयंस्यामपतयोरयीणांस्वाहा ॥ रुद्र
यत्तेक्रिविपरन्नामतस्मिन्हुतमस्यमेष्टमसिस्वाहा ॥ २० ॥
[४-४] इन्द्रस्यव्वज्रं ÷ ॥ इन्द्रस्यव्वज्रोऽसिमित्रावरुणयोस्त्वा ॥८९॥
प्रशास्त्रोःप्रशिषायुनज्मि ॥ अव्यथायैत्वास्वधायैत्वारिष्टोऽ

अर्ज्जुनोमरुताम्प्रसवेनंजयापामनंसासमिन्द्रियेण ॥ २१ ॥
मातें ॥ मातंऽइन्द्रतेवयन्तुराषाडयुक्तासोऽअब्रह्मतावि
दंसाम ॥ तिष्ठारथमधियंवज्रहस्तारश्मीन्देवयमसेस्व
श्वान् ॥२२॥ अग्नयेगृहपतये ॥ अग्नयेगृहपतयेस्वाहासोमाय
वनस्पतयेस्वाहामरुतामोजसेस्वाहेन्द्रस्येन्द्रियायस्वाहा ॥
पृथिविमातर्म्मामाहिंसीर्म्मोऽअहन्त्वाम् ॥ २३ ॥ हुंसःशु
चिषत् ॥ हुंसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्द्दुरोण

१ तिष्ठारथेन । अत्र तिष्ठाद्युदात्तम् (शु. प. प्रा. ३ अ. १०४ सू.) इत्यनेन तिष्ठेत्येतत्पदे आद्युदात्ते तस्याकारस्य दीर्घो भवति । अतो दीर्घाकार ।

सत् ॥ नृषद्धंरसद्दृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽ
ऋतम्बृहत् ॥ २४ ॥ इयदसि ॥ इयदस्यायुरस्यायुर्म्मयिधेहि
युङ्ङसिवर्च्चोसिवर्च्चोमयिधेह्यूर्ग्गस्यूर्ज्जम्मयिधेहि ॥ इन्द्रस्यवां
वीर्य्यकृतोबाहूऽअभ्युपावहरामि ॥ २५ ॥ [ ५-५ ] स्योनासि ।
सुषदासिक्षत्रस्ययोनिरसि ॥ स्योनामासीदसुषदामासीदक्षत्र
स्ययोनिमासीद ॥ २६ ॥ निषसाद । धृतव्रतोवरुणःपस्त्यास्वा ॥
साम्म्राज्यायसुक्रतुः ॥ २७ ॥ अभिभूरसि ॥ अभिभूरस्येता

१ निषसाद । अत्र नि ससाद इति पदम् ससाद् च (शु. य. प्रा. ३ अ ६० सू ) इत्यनेन ने. परस्य ससादशब्दस्य सकारस्य षकारे निषसादेति रूपम् ।

श्रीवेदपुरुषायनमः। अनुवाकसूत्रम्। युञ्जानएकादश, प्रतूर्त्तं
वाजिन्षोडश, देवस्यत्वादश, पोदेवीर्द्वादश, पोह्येकादश,
दितिष्ठापञ्चा, कूतिमग्निमष्टादश, सप्तत्र्यशीतिः ॥ [अ. ११
मं. ८३ अनु० ७] ॥ हरिः ॐ ॥ युञ्जानः प्प्रथमम् ॥ युञ्जानः
प्प्रथमम्मनंस्तत्त्वायंसविताधियं÷ ॥ अग्नेर्ज्योतिर्न्निचाय्यं
पृथिव्याऽअद्ध्याभंरत् ॥१॥ युक्तेनमनंसा। व्वयन्देवस्यंसवितुः
सवे ॥ स्वर्ग्ग्यायशक्त्यां ॥ २ ॥ युक्त्वायंसविता। देवान्त्स्वं

स्त्तेपञ्चदिशःकल्प्पन्तामृह्मँस्त्वम्ब्रह्मासिसवितासिसत्त्य
प्प्रसवोवरुणोसिसत्त्यौजाऽइन्द्द्रोसिविशौजारुद्द्रोसिसुशेवः ॥
बहुंकारश्श्रेयस्करभूयस्करेन्द्रस्यवज्ज्रोसितेनमेरध्य ॥ २८ ॥
अग्निःपृथुः ॥ अग्निःपृथुर्द्धर्म्मणस्प्पतिर्ज्जुषाणोऽअग्निःपृ
थुर्द्धर्म्मणस्प्पतिराज्ज्यस्स्यवेतुस्वाहास्वाहाकृताःसूर्य्यस्यरश्मिभि
र्य्यतद्ध्वꣳसजातानाम्मद्ध्यमेष्ठ्याय ॥ २९ ॥ [ ४-६ ] सवि
त्राप्प्रसवित्त्रा। सरस्वत्त्यावाचात्त्वष्ट्रारूपैःपूष्णापशुभिरिन्द्रे

१ श्रेयस्करभूयस्कर इत्यत्र समानपदे च (शु. य. प्रा. ३ अ. ३० सू.) इत्यनेन ककारपकारपरयोः सयायोग समानपदे सकारः पकारश्च विधीयते ।

र्भृतोधियादिवम् ॥ बृहज्ज्योतिंः करिष्यतः सविताप्प्रसुवाति
तान् ॥ ३ ॥ युञ्जतेमनंः ॥ युञ्जतेमनंऽउतयुञ्जतेधियोव्विप्प्रा
व्विप्प्रस्यबृहतोव्विपश्चितंः ॥ व्विहोत्त्रादधेव्वयुनाविदेकऽइन्मही
देवस्यसवितुः परिष्टुतिः ॥ ४ ॥ युजेवाम् ॥ युजेवाम्ब्रह्मपूर्व्व्यं
न्नमोभिर्व्विश्श्लोकऽएतुपत्थ्येवसूरेः ॥ शृण्वन्तुव्विश्वेऽअमृत
स्यपुत्त्राऽआयेधामानिदिव्यानितस्थुः ॥ ५ ॥ यस्यप्प्रयाणम् ॥
यस्यप्प्रयाणमन्न्वन्न्यऽइद्ययुर्देवादेवस्यमहिमानमोजसा ॥

स॒पार्त्थिवानिव्विमुमेसऽएतंशोरजाᳬसिदेवः॑सवितामंहित्त्व॒ना ॥ ६ ॥ देवंसवितः ॥ देवंसवितुःप्प्रसुवयुज्ञम्प्प्रसुवयुज्ञपंतिम्भगांय ॥ दिव्योगन्धुर्व्वःकेतपूःकेतंन्नःपुनातुवाचस्पतिर्व्वाचंन्नःस्वदतु ॥ ७ ॥ इमन्नः ॥ इमन्नोदेवसवितर्युज्ञम्प्प्रणंय देवाव्यᳬसखिविदᳬसत्राजितन्धनाजितᳬस्वुर्ज्जितम् ॥ ऋचास्तोमᳬसमर्द्धयगायत्रेणंरथन्तरम्बृहद्गायत्रवंर्त्तनिस्वाहा ॥ ८ ॥

१ प्रणय। अत्र प्र नय इति पदम्। अत्र समानपदाभावेन ऋषरेभ्यः इत्यस्याप्राप्तौ अनेतिनुदातिहिनोमीनाम् (शु. य. प्रा. ३ अ. ८९ सू.) इत्यनेन अपूर्वाणां नेति नुदाति हिनोमि इत्येषां नकारस्य णकारो विधीयते तेनात्र प्रणय इत्यत्र णत्वम्। सूत्रे हिनोमीतिविकरणनिर्देशाद्यत्र विकरणाभावस्तत्र न णत्वम्।

देवस्य॑त्त्वा। सवितुःप्प्रसवे॒ऽश्विनो॑र्ब्बाहुब्भ्यां॑म्पूष्ष्णोहस्त्ताब्भ्या
म्॥ आद॑देगायत्त्रेणच्छन्द॑साङ्गिरस्वत्पृ॑थिव्व्याःसधस्त्था॑दग्ग्नि
म्पुरी॑ष्ष्यमाङ्गिरस्वदाभ॑रत्त्रैष्टुभेन[1]च्छन्द॑साङ्गिरस्वत् ॥ ९ ॥
अभ्रि॑रसि ॥ अभ्रि॑रसिनार्य॑सित्त्वया॑व्वयमग्ग्निꣳशकेमख
नितुꣳसधस्त्थऽआ ॥ जाग॑तेनच्छन्द॑साङ्गिरस्वत् ॥ १० ॥
हस्त॑ऽआधाय॑। सविताबिभ्र॑दभ्रिꣳहिरण्ययीम् ॥ अग्ग्ने

१ त्रैष्टुभेन। अत्र ऋपरेभ्यो नकारो णकारः समानपदे (शु य प्रा ३ अ ८५ सू) इत्यनेन समानपदे स्वरयवहकपैश्च (शु य प्रा ३ अ ८६ सू) इत्यनेन व्यवधानेऽपि विहितस्य प्राप्तस्य णत्वस्य शिलिसिवर्गमध्यमव्यवहितोऽपि (शु य.प्रा ३ अ.९१ सू.) इत्यनेन शकारलकारसकार (मध्यमवर्ग) चटगैटवर्गतवर्गव्यवधानेषु ऋपरेभ्य. परस्य नकारस्य प्रकृतिभावादत्र णत्व निषिध्यते।

ज्योतिर्व्विभ्राऽउसंपृथिव्याऽअध्याभंरदाग्नुंहुंभेनुच्छन्दंसाङ्गिर
स्वत् ॥ ११ ॥ [ ११-१ ] प्रतूर्त्तंव्वाजिन् ॥ प्रतूर्त्तंव्वाजिन्नाद्रंवुव्वारि
ष्ठामनुंसंव्वतंम् ॥ द्दिवितेजन्मंपरममुन्तरिक्षेतवुनाभिंःपृथि
व्यामधियोनिरित् ॥ १२ ॥ युञ्जाथाᳩरासंभम् ॥ युञ्जाथाᳩ
रासंभँय्युवमस्मिन्यामेवृषण्वसू ॥ अग्निम्भरंन्तमस्मुयुम्
॥ १३ ॥ योगेयोगेतुवस्तंरम् ॥ योगेयोगेतवस्तंरंव्वाजेवाजे
हवामहे ॥ सखायुऽइन्द्रंमूतये ॥ १४ ॥ प्रतूर्व्वन्नेहि ॥ प्रतूर्व्व

न्नेह्यंवक्रामन्नशस्तीरुद्रस्यगाणपत्यम्मयोभूरेहि ॥ उर्वन्तरिक्षं
वीहिस्वस्तिगव्यूतिरभयानिकृण्वन्पूष्णासयुजासह ॥१५॥
पृथिव्याःसधस्थात् ॥ पृथिव्याःसधस्थादग्निम्पुरीष्यमङ्गि
रस्वदाभराग्निम्पुरीष्यमङ्गिरस्वदच्छेमोग्निम्पुरीष्यमङ्गिर
स्वद्भरिष्यामः ॥ १६ ॥ अन्वग्निः ॥ अन्वग्निरुषसामग्र
मक्ख्यदन्वहानिप्रथमोजातवेदाः ॥ अनुसूर्य्यस्यपुरुत्राच
रश्मीननुद्यावापृथिवीऽआततन्थ ॥१७॥ आगत्यवाजी ॥

आगत्यंवाज्यध्वानंसर्वामृधोविधूनुते ॥ अग्निंसधस्थे
महतिचक्षुषानिचिकीषते ॥ १८ ॥ आक्रम्यंवाजिन् ॥ आक्र
म्यंवाजिन्पृथिवीमग्निमिच्छरुचात्वम् ॥ भूम्यावृत्वाय
नोब्रूहियतःखनेमतंवयम् ॥ १९ ॥ द्यौस्ते । पृष्ठंपृथिवी
सधस्थमात्मान्तरिक्षंसमुद्रोयोनिः ॥ विख्यायचक्षु
षात्वमभितिष्ठपृतन्यतः ॥ २० ॥ उत्क्राम । महतेसौभगाया
स्मादास्थानाद्द्रविणोदावाजिन् ॥ वयंस्यामसुमतौपृथि

ध्याऽअग्निश्चनन्तऽउपस्थेऽअस्याः ॥ २१ ॥ उदक्रमीत् ॥ उदक्र
मीद्द्रविणोदा वाज्यर्वाकः सुलोकꣳ सुकृतम्पृथिव्याम् ॥ ततः
खनेम सुप्रतीकमग्निꣳ स्वो रुहाणाऽअधि नाकमुत्तमम् ॥ २२ ॥
आ त्वा । जिघर्मि मनसा घृतेन प्रतिक्षियन्तम्भुवनानि विश्वा ॥
पृथुन्तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नै रभसन्दृशानम् ॥ २३ ॥
आ विश्वतः । प्रत्यञ्चञ्जिघर्म्यरक्षसा मनसा तज्जुषेत ॥ मर्य्य
श्रीः स्पृहयद्वर्णोऽअग्निर्नाभिमृशे तन्वा जर्भुराणः ॥ २४ ॥

परिवाजंपतिं ॥ परिवाजपतिं[1] कविरग्निर्हव्यान्यक्रमीत् ॥
दधद्रत्नानि दाशुषे ॥ २५ ॥ परि त्वा । अग्ने पुरं वयं विप्रं सह
स्य धीमहि ॥ धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावताम्[2] ॥ २६ ॥
त्वमग्ने ॥ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वम
श्मनस्परि ॥ त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां[3] नृपते जा



१ परिवाजपति कविः । अत्र कविष्करत्कृधिषु ( शु. य प्रा ३ अ ३२ सू ) इत्यनेन कविपरे पतिशब्दस्य विसर्गस्य षकारे प्राप्ते वाजपति-वीसऽएदिधिपुरन्त.परोऽन्येनान्त.पार्श्वमिति च ( शु य.प्रा ३ अ ३८ सू ) इत्यनेन सकारषकारयोर्निषेधाद्विसर्जनीय एव । २ भङ्गुरावताम् । अत्र अश्वरश्मिमतिसुमति ( शु य प्रा ३ अ ९८ सू ) इत्यनेन वकारे परे भङ्गुरशब्दस्य ह्रस्वाकारस्य दीर्घाकारः । ३ नृणाम् । अत्र ऋपरेभ्यो नकारो णकार समानपदे ( शु. य. प्रा. ३ अ. ८५ सू ) इत्यनेन समानपदे ऋकारपरस्य नकारस्य णत्वम् ।

यसेशुचिंः ॥ २७ ॥ [ १६-२ ] देवस्यंत्वा । सवितुः प्प्रंस
वेश्विनोर्ब्बाहुब्भ्यांम्पूष्णोहस्ताब्भ्याम् ॥ पृथिव्याःसुधस्त्थां
दुग्निम्पुंरीष्ष्यमाङ्गिरस्वत्त्खंनामि ॥ ज्योतिंष्मन्तन्त्वाग्ग्ने
सुप्प्रतीकमजस्रेणभानुनादीद्यंतम् ॥ शिवम्प्रजाब्भ्योहिंᳬ
सन्तम्पृथिव्याःसुधस्त्थांदुग्निम्पुंरीष्ष्यमाङ्गिरस्वत्त्खंनामः
॥ २८ ॥ अपाम्पृष्ठम् ॥ अपाम्पृष्ठमंसियोनिरग्ग्नेःसंमुद्रम
भितंःपिन्न्वंमानम् ॥ वर्द्धमानोमहाँ२॥ऽआचुपुष्क्करेदिवो

मात्त्र्यावरिम्णाप्प्रथस्व ॥ २९ ॥ शर्म्मच ॥ शर्म्मचस्त्थो
वर्म्मचस्त्थोच्छिद्द्रेबहुलेऽउभे ॥ व्यचस्वतीसंवसाथाम्भृतम
ग्निम्पुरीष्ष्यम् ॥ ३० ॥ संवसाथाम् ॥ संवसाथाᳫँस्वर्विदा
समीचीऽउरसात्त्मना ॥ अग्निमन्तर्ब्भरिष्ष्यन्तीज्ज्योति
ष्ष्मन्तमजस्रमित् ॥ ३१ ॥ पुरीष्ष्योसि । विश्वभराऽअथ
र्वात्त्वाप्प्रथमोनिरमन्थदग्ने ॥ त्वामग्नेपुष्क्करादद्ध्यथर्वानिर
मन्थत ॥ मूर्द्ध्नोविश्श्वस्यवाघतः ॥ ३२ ॥ तमुत्त्वा । दद्ध्य

ङ्ऋषिः पुत्रऽईधेऽअथर्वणः ॥ वृत्रहणम्पुरन्दरम् ॥ ३३ ॥
तमुत्वा । पाथ्योवृषासमीधेदस्युहन्तमम् ॥ धनञ्जयःरणे
रणे ॥ ३४ ॥ सीदहोतः ॥ सीदहोतःस्वऽउलोकेचिकित्वा
न्त्सादयायज्ञःसुकृतस्ययोनौ ॥ देवावीर्देवान्हविषायजास्य
ग्नेबृहद्यजमानेवयोधाः ॥ ३५ ॥ निहोता । होतृषदनेवि
दानस्त्वेषोदीदिवाँ२॥ऽअसदत्सुदक्षः ॥ अदब्धव्रतप्रम
तिर्वसिष्ठःसहस्रम्भरःशुचिजिह्वोऽअग्निः ॥ ३६ ॥ सःसी

१ सादय यज्ञम् । इति पदम् । अत्र अथोदारियशोचपनय सादयज्ञे० (य शु प्रा ३ अ ११२ सू ) इत्यनेन यकारे परे दीर्घविधानात् । सादयायज्ञम् ।

द्स्व । महाँ २॥ऽअसि शोचस्व देववीतमः ॥ विधूममग्ने ऽअरुष
म्मियेध्य सृज प्प्रशस्त दर्शतम् ॥ ३७ ॥ [ १०-३ ] अपो देवीः ॥
अपो देवीरुपसृज मधुमतीरयक्ष्माय प्प्रजाभ्यः ॥ तासामा
स्त्थानादुज्जिहतामोषधयः सुपिप्पलाः ॥ ३८ ॥ सन्ते । वायु
र्म्मातरिश्वा दधातूत्तानाया हृदयँ य्यद्विकस्तम् ॥ यो देवानाञ्चर
सि प्प्राणथेन कस्म्मै देव वषडस्तु तुभ्यम् ॥ ३९ ॥ सुजातो ज्ज्यो
तिषा । सह शर्म्म वरूथमासदत्स्वः ॥ वासोऽअग्ने विश्व

रूपुह॑ संध्ययंयस्वाविभावसो ॥४०॥ उद्दुतिष्ठ । स्वध्वरावांनोदेव्या
धिया ॥ दृशेचंभासाबृहतासुशुक्कनिराग्नेयाहिसुशस्तिभिः
॥ ४१ ॥ ऊर्ध्वऽऊषुणः ॥ ऊर्ध्वऽऊषुणंऽऊतयेतिष्ठादेवो
नसविता ॥ ऊर्ध्वोवाजंस्यसनितायदञ्जिभिर्वाघद्भिर्विह्वयामहे
॥ ४२ ॥ सजातः ॥ सजातोगर्भोऽअसिरोदस्योरग्नेचारुर्वि
भृतऽओषधीषु ॥ चित्रःशिशुःपरितमांस्यक्तून्प्रमातृभ्योऽ

---

१ अवानोधिया । अत्र अवोपसर्गस्य ह्स्वाकारस्य नोपरे धारययोजाव० (य शु प्रा ३ अ. १०८ सू ) इत्यनेन दीर्घाकार । २ ऊर्द्धऽऊपुण ऊर्द्ध ऊ सुन इत्यत्र ऊश्चापृक्तात् (शु य प्रा ३ अ ६२ सू ) इत्यनेन अपृक्तसंज्ञादूकारात्पर सकार पत्वमापद्यते तेन सस्य षकार । ३ तिष्ठादेव. । अत्र तिष्ठाद्युदात्तम् ( शु. य प्रा. ३ अ. १०४ सू.) इत्यनेन यदि तिष्ठेत्येतत्पदं आद्युदात्त भवेत्तदा दीर्घत्व प्राप्नोति । अत्र तिष्ठेत्येतस्याद्युदात्तत्वाद्दीर्घ. ।

अधिक्रन्निक्रदद्दाहं ॥ ४३ ॥ स्थिरोभव । वीड्वङ्गऽआशुर्भव
वाज्यर्वन् ॥ पृथुर्भवसुषदस्त्वमग्ग्नेः पुरीषवाहणः[1] ॥ ४४ ॥
शिवोभव । प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ॥ माद्यावा
पृथिवीऽअभिशोचीर्मान्तरिक्षम्मावनस्पतीन् ॥ ४५ ॥ प्रैतु
वाजीकनिक्रदन्नानदद्रासभः पत्वा ॥ भरन्नग्निम्पुरीष्यम्मा
पाद्यायुषः पुरा ॥ वृषाग्निं वृषणम्भरन्नपाङ्गर्भं समुद्रियम् ॥

१ पुरीषवाहण । अत्र ऋपरेभ्यो नकारो णकारं समानपदे ( शु. य. प्रा. ३ अ ८५ सू. ) इत्यप्राप्तौ स्वरयवहकपैश्च ( शु. य. प्रा. ३ अ. ८५ सू. ) इत्यनेन ऋपरेभ्यो स्वरयवहकवर्गपवर्गव्यवधानेऽपि णत्वविधानादत्र वाहनशब्दस्य नस्य णत्वम् ।

अग्नऽआयाहिवीतये ॥ ४६ ॥ ऋतꣳसत्त्यम् ॥ ऋतꣳस
त्त्यमृतꣳसत्त्यमग्निम्पुरीष्ष्यमङ्गिरस्वद्भरामः ॥ ओषधयः
प्प्रतिमोदद्ध्वमग्निमेतꣳशिवमायन्तमब्भ्यत्रयुष्म्माः ॥ व्व्यस्य
न्विश्श्वाऽअनिराऽअमीवानिषीदन्नोऽअपदुर्म्मतिञ्जहि ॥४७॥
ओषधयःप्प्रति । गृब्भ्णीतपुष्प्पवतीःसुपिप्पलाः ॥ अयंव्वो
गर्ब्भऽऋत्त्वियःप्प्रत्नꣳसधस्त्थमासदत् ॥४८॥ व्विपाजसा ।
पृथुनाशोशुचानोबाधस्वद्विषोरक्षसोऽअमीवाः ॥ सुशर्म्मणो

बृहत॒श्शर्म्मणिस्यामुग्ग्नेरह॑सुहवस्य॒प्प्रणीतौ ॥४९॥ [१२-४]
आपोहि । ष्ठामंयोभुवस्तान॑ऽऊर्ज्जेदंधातन ॥ महेरणायच
क्षसे ॥ ५० ॥ योवं÷ । शिवतमोरसस्तस्यंभाजयतेहनं÷ ॥
उशतीरिवमातरं÷ ॥ ५१ ॥ तस्म्माऽअरम् ॥ तस्म्माऽअरङ्ग
मामवोयस्यक्षयायजिन्न्वथ ॥ आपोजनयथाचनं ॥ ५२ ॥
मित्र॒स्सु॒सृज्ज्यं । पृथिवीम्भूमिञ्च्ज्योतिषासह ॥ सुजातञ्जात



१ हिण्मय । अत्र हि स्यामयो शुन । अत्र हेर्मिथोदय. (शु य प्रा ३ अ. ५८ सू ) इत्यनेन हिशब्दात्पर. मकारोदयो थकारोदयो वा सकारस्य पकारो विधीयते । तथा सति ततः ष्टुत्वे थकारस्य ठकारे ऊष्मान्तस्थाभ्यश्च स्पर्शं. (शु. य. प्रा. ४ अ. १०२ सू ) इत्यनेन ठकारस्य द्वित्वम् ।

वेदसमयुक्ष्मायंत्त्वासहसृजामिप्प्रजाब्भ्यं÷ ॥५३॥ रुद्राःसह

सृज्यं । पृथिवीम्बृहज्ज्योतिःसमीधिरे । तेषाम्भानुरजस्त्रऽइ

च्छुक्रोदेवेषुरोचते ॥५४॥ सᳬंसृष्टांवसुभिः ॥ सᳬंसृष्टांवसुभी

रुद्रैर्द्धीरैःकर्म्मण्ण्याम्मृदम् ॥ हस्ताब्भ्याम्मृद्वीङ्कृत्वासिनी

वालीकृणोतुताम् ॥ ५५ ॥ सिनीवालीसुकपर्द्दा । सुकुरीरा

स्वौपशा ॥ सातुब्भ्यमदितेमह्योखान्दधातुहस्तयोः ॥५६॥

उखाङ्कृणोतु ॥ उखाङ्कृणोतुशक्त्याबाहुब्भ्यामदितिर्द्धिया ॥

मातापुत्रँय्यथोपस्थेसाग्निम्बिभर्तुगर्भऽआ ॥ मखस्यशि
रोसि॥५७॥ वसवस्त्वा। कृण्वन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्ध्रु
वासिपृथिव्यसिधारयामयिप्रजाꣳरायस्पोषङ्गौपत्यꣳसुवी
र्य्यꣳसजातान्यजमानायरुद्रास्त्वाकृण्वन्तुत्रैष्टुभेनच्छन्दसा
ङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसिधारयामयिप्रजाꣳरायस्पोषङ्गौ
पत्यꣳसुवीर्य्यꣳसजातान्यजमानायादित्यास्त्वाकृण्वन्तु
जागतेनच्छन्दसाङ्गिरस्वद्ध्रुवासिद्यौरसिधारयामयिप्रजाꣳ

रायस्पोषङ्गौपत्त्यꣳसुवीर्य्यꣳसजातान्यजमानायुविश्वेत्त्वा
देवावैश्वानराःकृण्वन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वद्ध्रुवासिदि
शोसिधारयामयिप्रजाꣳरायस्पोषङ्गौपत्त्यꣳसुवीर्य्यꣳस
जातान्यजमानाय ॥ ५८ ॥ अदित्त्यैरास्ना ॥ अदित्त्यैरा
स्नास्यदितिष्टेबिलङ्गृभ्णातु ॥ कृत्वायसामहीमुखाम्मृन्मयीँ
य्योनिमग्नयै॥ पुत्रेभ्य्यःप्रायच्छददितिःश्रपयानिति ॥५९॥
वसवस्त्वा । धूपयन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्रुद्रास्त्वाधूप

यन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादित्यास्त्वाधूपयन्तुजागतेन
च्छन्दसाङ्गिरस्वद्विश्वेत्वादेवावैश्वानराधूपयन्त्वानुष्टुभेनच्छ
न्दसाङ्गिरस्वदिन्द्रस्त्वाधूपयतुवरुणस्त्वाधूपयतुविष्णुस्त्वा
धूपयतु ॥ ६० ॥ [ ११-५ ] [1]अदितिष्ट्वा । देवीविश्वदेव्यावतीपृ
थिव्याःसधस्थेऽअङ्गिरस्वत्खनत्ववटदेवानान्त्वापत्नीर्देवी
र्विश्वदेव्यावतीःपृथिव्याःसधस्थेऽअङ्गिरस्वद्दधतूखेधिषणा

---

१ अदितिष्ट्वादेवी । इति पदम् अत्र सधिरस्युरदिति ( शु. य प्रा. ३ अ. ७६ सू. ) इत्यनेन सन्धि अंशु अदिति एतेषा विसर्जनीयसकारस्य षत्वं समानपदे विधीयते । तेनात्र अदितेर्विसर्जनीयस्य षत्वे ष्टुत्वे ऊष्मान्तस्थाभ्यश्च स्पर्शः ( शु. य. प्रा. ४ अ. १०२ सू. ) इति टकारस्य द्वित्वम् ।

रुत्त्वा देवीर्विश्वदेव्यावतीं पृथिव्याः सधस्त्थेऽअङ्गिरस्वदभी
न्धतामुखे वरूत्रीष्ट्वा देवीर्विश्वदेव्यावतीं पृथिव्याः सधस्त्थेऽ
अङ्गिरस्वच्छ्रपयन्तूखे ग्नास्त्वा देवीर्विश्वदेव्यावतीं पृथिव्याः
सधस्त्थेऽअङ्गिरस्वत्पचन्तूखे जनयस्त्वाच्छिन्नपत्रा देवीर्वि
श्वदेव्यावतीं पृथिव्याः सधस्त्थेऽअङ्गिरस्वत्पचन्तूखे ॥ ६१ ॥
मित्रस्य चर्षणीधृतः ॥ मित्रस्य चर्षणीधृतो वो देवस्य सानसि ॥

---

१ वरूत्री त्वा इति पदम् । अत्र मातृभिरर्चिभि पायुभिर्वरूत्री (शु. य प्रा ३ अ. ७९ सू.) इत्यनेन एकाक्षरे त्वापरे वरूत्री. इत्यस्य विसर्जनीयस्य पत्व पात्तथोमूर्धन्यम् (शु. य. प्रा. ३ अ. ८० सू.) इति मूर्धन्यत्वे ऊष्मान्तस्थाम्यत्र स्पर्श (शु. य. प्रा. ४ अ १०२ सू.) इति द्वित्वे वरूत्रीष्ट्वा ।

द्युम्नाग्निंन्नश्श्रंवस्तमम् ॥ ६२ ॥ देवस्त्वा । सवितोद्वंपतुसुपा
णिःस्वंङ्गुरिःसुंबाहुरुतशक्त्यां ॥ अव्यंथमानापृथिव्यामाशा
दिशऽआपृंण ॥ ६३ ॥ उत्थायंबृहती । भवोदुंतिष्ठध्रुवात्त्वम् ॥
मित्रैतान्तंऽउखाम्परिंददाम्म्यभिंत्त्याऽएषामाभेंदि ॥ ६४ ॥
वसंवस्त्वा ॥ वसंवस्त्वाच्छृंन्दन्तुगायत्त्रेणच्छन्दंसाङ्गिरस्वद्रु
द्रास्त्वाच्छृंन्दन्तुत्रैष्टुंभेनच्छन्दंसाङ्गिरस्वदांदित्यास्त्वाच्छृं
न्दन्तुजागंतेनच्छन्दंसाङ्गिरस्वद्विश्वेंत्त्वादेवावैश्वानराऽआच्छृं

न्दुन्त्वानुष्टुभेनुच्छन्दसाङ्गिरस्वत् ॥ ६५ ॥ [५-६] आकूति
मुग्निम्प्रयुजꣳस्वाहामनोमेधामग्निम्प्रयु
मग्निम् ॥ आकूतिमग्निम्प्रयुजꣳस्वाहावाचोविधृतिम्
जꣳस्वाहाचित्तंविज्ञातमग्निम्प्रयुजꣳस्वाहावाचोविधृतिम्
ग्निम्प्रयुजꣳस्वाहाप्रजापतयेमनवेस्वाहाग्नयेवैश्वानरायस्वा
हा ॥ ६६ ॥ विश्वोदेवस्य । नेतुर्मर्त्तोवुरीतसख्यम् ॥ वि
श्वोरायऽइषुध्यतिद्युम्नंवृणीतपुष्यसेस्वाहा ॥ ६७ ॥ मासु ।
भित्थामासुरिषोमन्धृष्णुवीरयस्वसु ॥ अग्निश्चेदङ्गिरिष्य

थꣳ ॥ ६८ ॥ दृꣳहस्वदेवि । पृथिविस्वस्तयऽआसुरीमाया
स्वधयाकृतासि ॥ जुष्टन्देवेभ्यऽइदमस्तुहव्यमरिष्टात्वमुदि
हियज्ञेऽअस्मिन् ॥ ६९ ॥ द्रवन्नꣳसर्पिरासुतिꣳ । प्रत्नोहो
ताव्वरेण्यꣳ ॥ सहसस्पुत्रोऽअद्भुतꣳ ॥ ७० ॥ शतम् ॥ ५०० ॥
परस्याऽअधि । संवतोवराँ२ऽअभ्यातर ॥ यत्राहमस्मि
ताँ२ऽअव ॥ ७१ ॥ परमस्याः परावतः ॥ परमस्याः
परावतोरोहिदश्वऽइहागहि ॥ पुरीष्यः पुरुप्रियोऽग्नेत्वन्त



१ सहस पुत्र. इत्यत्र रायः सहस- पोपपुत्रयो. (शु.प्र.प्रा. ३ अ. २५ सू.) इत्यनेन रायसहसशब्दयो. सकारस्य पोपपुत्रपरयो.परयो. क्रमेण सत्वम्। सहसस्पुत्रः।

राम्मृधं÷ ॥ ७२ ॥ यदग्ने ॥ यदंग्नेकानिकानिचिदातेदारू
णिदुद्ध्मसिं ॥ सर्व्वन्तदंस्तुतेघृतन्तज्जुंषस्वयविष्ठ्य ॥ ७३ ॥
यदत्ति ॥ यदत्त्युंपजिह्विकायद्वम्म्रोऽअतिसर्प्पति ॥ सर्व्वन्त
दंस्तुतेघृतन्तज्जुंषस्वयविष्ठ्य ॥ ७४ ॥ अहंरहरप्प्रंयावम् ॥
अहंरहरप्प्रंयावम्भरन्तोश्श्वायेवतिष्ठंतेघासमंस्म्मै ॥ रायस्प्पोषे
णसमिषामदन्तोग्ग्नेमातेप्प्रतिवेशारिषाम ॥ ७५ ॥ नाभाप्पृ
थिव्याः । संमिधानेऽअग्ग्नौरायस्प्पोषायबृहतेहंवामहे ॥ इर

म्मुद्रम्बृहदुक्थँऽयजंत्रञ्जेतारमग्निम्पृतंनासुसासुहिम् ॥७६॥
साऽसेनां ॥ साऽसेनाऽअभीत्वरीराव्याधिनीरुगंणाऽउत ॥
येस्तेनायेचुतस्कंरास्ताँस्तेंऽअग्नेपिंदधाम्म्यास्ये ॥ ७७ ॥
दꣳष्ट्राभ्याम्मुलिम्लून् ॥ दꣳष्ट्राभ्याम्मुलिम्लूञ्जम्भ्यै
स्तेस्कंराँ२।ऽउत ॥ हनुंभ्याꣳस्तेनान्भंगवुस्ताँस्त्वङ्खादु
सुखांदितान् ॥ ७८ ॥ येजनेषु । मुलिम्लंवस्तेनासुस्तस्कं

१ तस्काराँऽउत । तत् करांऽउत इति पदे । अत्र तद्बृहतौ करपत्योस्तलोपश्च (शु. य. प्रा २ अ. ५२ सू.) इत्यनेन तच्छब्दस्य करशब्दपरे सकारे पूर्वस्य तद्वरिततकारस्य लोपे च कृते ऊष्मान्तस्थाभ्यश्च स्पर्शः ( शु. य. प्रा. ४ अ. १०२ सू. ) इत्यनेन ककारस्य द्वित्वम् ।

रावनें ॥ येकक्षैष्वघायवस्ताँस्तैंदधामिजम्भंयोः ॥ ७९ ॥
योऽअस्मभ्यम् ॥ योऽअस्मभ्यमरातीयाद्यश्चंनोद्वेषते
जनः ॥ निन्दाद्योऽअस्मान्धिप्सांच्चसर्वन्तम्मंस्मसाकुरु
॥ ८० ॥ संशितम्मे ॥ संशितम्मेब्रह्मसंशितंवीर्य्यंब
लम् ॥ संशितङ्क्षत्रञ्जिष्णुयस्याहमस्मिपुरोहितः ॥ ८१ ॥
उदेषाम् ॥ उदेषाम्बाहूऽअतिरमुद्वर्चोऽअथोबलम् ॥ क्षिणोमि
ब्रह्मणामित्रानुन्नयामिस्वाँ२॥ऽअहम् ॥ ८२ ॥ अन्नपतेन्नस्य ।

नोदेह्यनमीवस्यंशुष्मिणंः ॥ प्रप्प्रंदातारन्तारिषुऽऊर्ज्जन्नोधे
हिद्विपदेचतुष्पदे ॥८३॥ [१८-७] ॥ इतिश्रीवाजसनेय
संहितायाम् एकादशोऽध्यायः ॥ ११ ॥ श्रीवेदपुरुषाय नमः ॥
अनुवाकसूत्रम् ॥ इशानःसप्तदश, द्दिवस्परिद्वादश, समिधा
ग्निंपंचदशा, पेतसप्तदशा, सुन्वन्तमयजमानंत्रयोदश, साऽ
ओषधीः सप्तविंशति, मांमाषोडश, सप्तसप्तदशशतम् ॥
[ अ. १२ मं. ११७ अनु. ७ ] हरिः ॐ ॥ इशानोरुक्मः ॥

इ॒शा॒नोरु॒क्क्मऽउ॒र्व्यावि॒व्यद्यौहु॑र्म्म॒र्षमायुः॑श्श्रि॒येरु॑चा॒नः ॥ अ॒ग्नि॒
र॒मृतो॑ऽअभव॒द्वयो॑भि॒र्य्यदे॑नं॒द्यौरज॑नयत्सु॒रेताः॑ ॥ १ ॥ नक्तो॒
षासा॒सम॑नसा ॥ नक्तो॒षासा॒सम॑नसा॒विरू॑पेधा॒पये॑ते॒शिशु॒
मेक॑ᳫंस॒मीची॑ ॥ द्यावा॒क्षामा॑रु॒क्क्मोऽअ॒न्तर्विभा॑तिदे॒वाऽअ॒ग्नि॒
न्धा॑रयन्द्रवि॒णो॒दाः ॥ २ ॥ विश्वा॑रू॒पाणि॑ ॥ विश्वा॑रू॒पाणि॒
प्प्रति॑मुञ्चतेक॒विः प्प्रासा॑वीद्भ॒द्रंद्वि॒पदे॒चतु॑ष्प्पदे ॥ विना॑क॒म

१ इशान । अत्र ऋषरेभ्य (शु य प्रा ३ अ ८५ सू) इत्यनेन समानपदे स्वरयवहकपैश्च (शु य प्रा ३ अ. ८६ सू) इत्यनेन एतैरेव व्यवधानेऽपि । णत्वविधानात्र णत्वप्राप्तिः । तथापि शिलिसिवर्गमध्यमव्यवहितोऽपि (शु य प्रा ३ अ ९५ सू) इत्यनेन णत्वनिषेध शिष्यबुद्धिव्युत्पादनार्थो ज्ञेय. ।

क्व्यत्त्सविताव्वरेण्ण्योनुंप्प्रयाणंमुषसोव्विरांजति ॥ ३ ॥ सुपर्ण्णो
सि । गुरुत्त्माँस्त्रिवृत्तेशिरोंगायत्रञ्चक्षुर्ब्बृहद्रथन्तरेपक्षौ ॥ स्तोमंऽ
आत्त्माच्छन्दांस्यङ्गानियजूंषिनाम ॥ सामंतेतनूर्व्वामदे
व्व्यँय्यज्ञायज्ञियम्पुच्छन्धिष्ण्ण्याःशफाः ॥ सुपर्ण्णोसिगरु
त्त्मान्दिवङ्गच्छस्वःपत ॥ ४ ॥ व्विष्ण्णोःक्क्रमः ॥ व्विष्ण्णोः
क्क्रमोसिसपत्त्नहागायत्रञ्छन्दऽआरोहपृथिवीमनुव्विक्क्रमस्व
व्विष्ण्णोःक्क्रमोस्यभिमातिहात्त्रैष्टुभञ्छन्दऽआरोहान्तरिक्षम

नुविक्रमस्वविष्णोःक्रमोऽस्यरातीयतोहन्ताजागतञ्छन्दऽआ
रोहदिवमनुविक्रमस्वविष्णोःक्रमोऽसिशत्रूयतोहन्तानुष्टुभ
ञ्छन्दऽआरोहदिशोऽनुविक्रमस्व ॥५॥ अक्रन्ददग्निः ॥ अक्र
न्ददग्निस्तनयन्निवद्यौःक्षामारेरिहद्वीरुधःसमञ्जन् ॥ सद्यो
जज्ञानोविहीमिद्धोऽअख्यदारोदसीभानुनाभात्यन्तः ॥६॥
अग्नेऽभ्यावर्त्तिन् ॥ अग्नेऽभ्यावर्त्तिन्नभिमानिवर्त्तस्वायुषावर्च्च
साप्रजयाधनेन ॥ सन्यामेधयारय्यापोषेण ॥७॥ अग्ने

अङ्गिरः । शतन्तैसन्त्वावृतं॑सहस्रन्तऽउपावृतं॑ ॥ अधा
पोषस्यपोषेणपुनर्न्नौनष्टमाकृधिपुनर्न्नौरयिमाकृधि ॥ ८ ॥ पुन
रूर्ज्जा । निवर्त्तस्वपुनरग्नऽइषायुषा ॥ पुनर्न्नःपाह्यꣳहसः ॥९॥
सहरय्या । निवर्त्तस्वाग्नेपिन्वस्वधारया ॥ विश्वप्स्न्याविश्वत
स्परि ॥ १० ॥ आत्वा । हार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः ॥
विशस्त्वासर्व्वावाञ्छन्तुमात्वद्राष्ट्रमधिभ्रशत् ॥ ११ ॥
उदुत्तमम् ॥ उदुत्तमम्वरुणपाशमस्मदवाधमंविमद्ध्यमꣳ

अथ्वाय[1] ॥ अथां॒ व॒यमा॑दित्य व्र॒ते तवाना॑गसो॒ऽअदि॑तये स्याम
॥ १२ ॥ अग्ने॑ बृहन् ॥ अग्रे॑ बृ॒हन्नु॒षसा॑मू॒र्ध्वोऽअ॑स्थान्निर्ज॒
ग॒न्वान्तम॑सो॒ ज्योति॒षाऽगा॑त् ॥ अ॒ग्निर्भा॒नुना॒ रुश॑ता॒ स्वङ्ग॒
आ जा॒तो विश्वा॒ सद्मा॑न्यप्राः ॥ १३ ॥ हृ॒ꣳसः शु॑चि॒षत् ॥ हृ॒ꣳसः शु॑चि॒षद्व॒सु॑रन्तरिक्ष॒सद्धोता॑ वेदि॒षदति॑थिर्दुरोण॒सत् ॥ नृ॒ष
द्व॑र॒सदृ॑त॒सद्व्यो॑म॒सद॒ब्जा गो॒जाऽऋ॑त॒जाऽअ॑द्रि॒जाऽऋ॒तं बृ॒हत्

---

१ अथय इति पदम् । अथोदारिथशोचपनयसादयज्ञुंवृषशत्रुसलक्ष्मावारात्पूतभचत्त यकारे ( शु. य. प्रा. ३ अ. ११२ सू. ) इत्यनेन एतेषा यकारे परे दीर्घं । तेन अथाय इति पदम् ।

॥ १४ ॥ सीदत्त्वम् ॥ सीदत्त्वम्मातुरस्याऽउपस्थेव्विश्श्वान्न्य
ग्ग्नेव्वयुनानिव्विद्वान् ॥ मैनान्तपसामार्च्चिषाभिशोचीरन्तर
स्याᳪशुक्रज्ज्योतिर्व्विभाहि ॥ १५ ॥ अन्तरग्ग्ने । रुचात्त्वमु
खायाᳪसदनेस्वे ॥ तस्यास्त्वᳪहरसातपञ्जातवेदःशिवोभव
॥ १६ ॥ शिवोभूत्त्वा । मह्यमग्ग्नेऽअथोसीदशिवस्त्वम् ॥
शिवाःकृत्त्वादिशःसर्व्वाःस्वँय्योनिमिहासदः॥ १७ ॥ [१७-१]
दिवस्परि । प्प्रथमञ्जज्ञेऽअग्ग्निरस्म्माद्द्वितीयम्परिजातवेदाः ॥

तृतीयमप्सुनृ[1]मणाऽअजस्रमिन्धानऽएनञ्जरतेस्वाधीः॥१८॥
विद्माते ॥ विद्मातेऽअग्नेत्रेधात्रयाणिविद्मातेधामविभृ
तापुरुत्रा ॥ विद्मातेनामपरमङ्गुहायद्विद्मातमुत्सँय्यतऽ
आजगन्थ ॥ १९ ॥ समुद्रेत्वा । नृमणाऽअप्स्वन्तर्नृचक्षाऽ
ईधेदिवोऽअग्नऽऊधन् ॥ तृतीयेत्वारजसितस्थिवाँ सम्पा
मुपस्थेमहिषाऽअवर्द्धन् ॥ २० ॥ अक्रन्ददग्निः ॥ अक्रन्द

---

१ नृमणा । अत्र ऋपरेभ्यो नकारो णकार समानपदे ( शु. य. प्रा ३ अ ८५ सू. ) इत्यनेन णत्वाप्राप्तौ स्वरयवहकपैश्च ( शु. य प्रा. ३ अ. ८६ सू ) एतैर्व्यवधानेऽपि ऋपरेभ्यो णत्वविधानात्पवर्गस्य व्यवधानेऽपि णत्वे नृमणा इति रूपम् ।

दुग्निस्तनयन्निवद्यौःक्षामारेरिहद्वीरुधःसमञ्जन् ॥ सद्योज
ज्ञानोव्विहीमिद्धोऽअक्ख्यदारोदसीभानुनाभात्यन्तः ॥२१॥
श्रीणामुदारः ॥ श्रीणामुदारोधरुणोरयीणाम्मनीषाणाम्प्रा
र्प्पणःसोमगोपाः ॥ वसुःसूनुःसहसोऽअप्सुराजाविभात्य
ग्रऽउषसामिधानः ॥ २२ ॥ विश्वस्यकेतुः ॥ विश्वस्यकेतु
र्भुवनस्यगर्भऽआरोदसीऽअपृणाज्जायमानः ॥ वीडुञ्चिदद्रि
मभिनत्परायञ्जनायदग्निमयजन्तपञ्च ॥ २३ ॥ उशिक्पा

वक्रः ॥ उशिक्पावकोऽअरतिःसुमेधामर्त्तेष्वग्निरमृतोनि
धायि ॥ इयर्त्तिधूममरुषम्भरिभ्रदुच्छुक्रेणशोचिषाद्यामिनं
क्षन् ॥ २४ ॥ दृशानोरुक्मः ॥ दृशानोरुक्मऽउर्व्याव्यद्यौद्दु
र्मर्षमायुःश्रियेरुचानः ॥ अग्निरमृतोऽअभवद्वयोभिर्य्य
देनन्द्यौरजनयत्सुरेताः ॥ २५ ॥ यस्ते ॥ यस्तेऽअद्यकृण
वद्भद्रशोचेपूपन्देवघृतवन्तमग्ने ॥ प्रतन्नयप्प्रतरंवस्योऽअच्छा
भिसुम्नन्देवभक्तँयविष्ठ ॥ २६ ॥ आतम् ॥ आतम्भजसौ

श्श्रवसेष्वग्नऽउक्थऽउक्थ्यऽआभजशस्यमाने ॥ प्प्रियःसूर्ये
प्प्रियोऽअग्नाभवात्युज्जातेनभिनददुज्जनित्वैः ॥ २७ ॥
त्वामग्ने ॥ त्वामग्नेयजमानाऽअनुद्यून्विश्वावसुदधिरेवा
र्याणि ॥ त्वयासहद्द्रविणमिच्छमानाव्व्रजङ्गोमन्तमुशिजोवि
वव्रुः ॥ २८ ॥ अस्ताव्यग्निः ॥ अस्ताव्यग्निर्नराᳬंसुशेवो
वैश्वानरऽऋषिभिःसोमगोपाः ॥ अद्वेषेद्यावापृथिवीहुवेम
देवाधत्तरयिमस्मेसुवीरम् ॥ २९ ॥ [१२-२] समिधाग्निम् ॥

समिधाग्निन्दुवस्यतघृतैर्बोधयतातिथिम् ॥ आस्मिन्हव्याजु
होतन ॥ ३० ॥ उदुत्वा ॥ उदुत्वाविश्वेदेवाऽअग्नेभरन्तु
चित्तिभिः ॥ सनोभवशिवस्त्वꣳसुप्रतीकोविभावसुः ॥ ३१ ॥
प्रेत् ॥ प्रेदग्नेज्योतिष्मान्याहिशिवेभिरर्चिभिष्ट्वम्[1] ॥ बृहद्भि
र्भानुभिर्भासन्माहिꣳसीस्तन्वाप्रजाः ॥ ३२ ॥ अक्रन्द

---

१ आर्चिभिस्त्वम् इति पदम्। अत्र मातृभिरर्चिभि पायुभिर्वरूत्री (शु य. प्रा. ३ अ ७९ सू ) इत्यनेन मातृभि आर्चिभि पायुभि वरूत्री एतेषां पदानां एकाक्षरे प्रत्यये विसर्जनीयसकारस्य ष । तेन सस्य षत्वे, षात्तयोर्मूर्धन्यम् ( शु य. प्रा. ३ अ ८० सू ) इत्यनेन त्वमित्यस्य तस्य मूर्धन्ये टकारे ऊष्मान्तस्थाभ्यश्च स्पर्शे (शु. य. प्रा. ४ अ. १०२ सू ) इति टस्य द्वित्वे आर्चिभिष्ट्वम्।

दुग्निः ॥ अक्रन्ददुग्निस्त्तनयन्निवुद्यौःक्षामुरेरिहद्वीरुधं÷
समुञ्जन् ॥ सुद्योजंज्ञानोविहीमिद्धोऽअक्ख्युदारोदसीभानु
नाभात्यन्तः ॥ ३३ ॥ प्प्रप्रायम् ॥ प्प्रप्रायमुग्निर्भरतस्य
शृण्वेविवियत्सूर्य्योनरोचतेबृहद्भाः ॥ अुभियःपूरुम्पृतनासुत
स्त्थौदुीदायदैव्योऽअतिथिःशिवोनं÷ ॥ ३४ ॥ आपोदेवीः ॥
आपोदेवीःप्प्रतिगृब्भ्णीतभस्म्मैतत्स्योनेकृणुद्ध्वंसुरभाऽउं
लोके ॥ तस्म्मैनमन्ताञ्जनंयःसुपत्क्नीम्मातेवपुत्रम्बिभृता

प्स्वेनत् ॥ ३५ ॥ अप्स्वग्ने ॥ अप्स्वग्ने[1]सधिष्ट्व[2]सौषधी

रनुंरुद्ध्यसे ॥ गर्भेसञ्जायसेपुनः ॥ ३६ ॥ गर्भोऽअसि ॥

गर्भोऽअस्योषधीनाङ्गर्भोव्वनस्पतीनाम् ॥ गर्भोव्विश्वस्य

भूतस्याग्नेगर्भोऽअपामसि ॥ ३७ ॥ प्रसद्यभस्मना ॥

प्रसद्यभस्मनायोनिमपश्चपृथिवीमग्ने ॥ सुर्ठसृज्यमातृभि[3]ष्ट्व

१ सधिष्ट्व । अत्र सधिस्तव इति पदद्वयम् । अत्र विसर्गस्य परसवर्णे, सधिरशुरदिति. ( शु. य. प्रा. ३ अ ७८ सू ) इत्यनेन षत्वे ऊष्मान्तस्थास्यश्च स्पर्श इत्यनेन टस्य द्वित्वम् । २ स ओषधी इति पदद्वयम् । अत्र सऽओषधीमयो (शु य प्रा ३ अ, १५ सू ) इत्यनेन ओषधीपरे सः पदस्य विसर्जनीयस्य लोपे, सन्ध्यक्षर ऐकारौकारौ (शु. य. प्रा ४ अ ५७ सू.) इत्यनेन वृद्धौ सौषधी इति पदम् । ३ मातृभिस्त्वम् इति पदम् । मातृभिर-

ज्योतिष्मान्पुनरासदं ॥ ३८ ॥ पुनरासद्यं ॥ पुनरासद्य
सदनमपश्चपृथिवीमग्ने ॥ शेषेमातुर्यथोपस्थेऽन्तरस्याᳩं
शिवतमं ॥ ३९ ॥ पुनरूर्ज्जा । निवर्त्तस्वपुनरग्नऽइषायुषा ॥
पुनर्न्नःपाह्यꣳहसः ॥ ४० ॥ सहरय्या । निवर्त्तस्वाग्नेपिन्व
स्वधारया ॥ विश्वप्स्न्याविश्वतस्परि ॥ ४१ ॥ बोधामे ।
ऽअस्यवचसोयविष्ठमꣳहिष्ठस्यप्रभृतस्यस्वधावः ॥ पीयति

र्चिभि पायुभिर्वरूत्री (शु य प्रा ३ अ ७९ सू) इत्यनेन मातृभि. आर्चिभि. पायुभि वरूत्री एतेषां पदानां विसर्जनीयस्य सकारस्य षकार एकाक्षरे प्रत्यये परे इति षत्वे च पात्तथौ मूर्धन्यम् (शु. य. प्रा. ३ अ ८० सू.) इत्यनेन तस्य मूर्धन्ये टकारे ऊष्मान्त० इत्यनेन टस्य द्वित्वम् ।

त्वोऽअनुं त्वो गृणाति वृन्दारु ट्टे तन्त्वं वन्देऽअग्ने ॥ ४२ ॥ स बोधि । सूरिर्म्मघवा वसुपते वसुदावन् ॥ युयोद्ध्यस्म्मद्द्वेषांᳪ सि विश्वकर्म्मणे स्वाहा ॥ ४३ ॥ पुनस्त्वा । दित्याः रुद्रा वसवः समिन्धताम्पुनर्ब्रह्माणो वसुनीथ यज्ञैः ॥ घृतेन त्वन्तन्वं वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥ ४४ ॥ [ १५-३ ] अपेत ॥ अपेत वीत विच सर्प्पतातो येऽत्र स्थ पुराणा ये च नूतनाः ॥ अदा

१ वृन्दारुट्टे अत्र वृन्दारु ते इति पदद्वयम् । वृन्दारुर्मांकिं' ( शु. य प्रा. ३ अ ७४ सू. ) इत्यनेन वृन्दारो. विसर्गस्य परसवर्णे, पात्तथौ मूर्धन्यस्य इत्यनेन च ते इत्यस्य मूर्धन्ये टेकारे कृते ऊष्मान्तस्याम्यश्च स्पर्शः. ( शु. य प्रा. ४ अ. १०२ सू. ) इति टकारस्य द्वित्वम् ।

द्युम्नोवसानम्पृथिव्याऽअक्रन्निमम्पितरौल्लोकमस्मै ॥ ४५ ॥
सँज्ञानमसि । कामधरणम्मयितेकामधरणम्भूयात् ॥ अग्ने
र्भस्मास्यग्नेः पुरीषमसिचितस्थपरिचितऽऊर्ध्वचितः श्रय
ध्वम् ॥ ४६ ॥ अयꣳसः ॥ अयꣳसोऽअग्निर्यस्मिन्त्सो
ममिन्द्रः सुतन्दधेजठरेवावशानः ॥ सहस्रियंवाजमत्य
न्नसप्तिꣳससवान्त्सन्त्स्तूयसेजातवेदः ॥ ४७ ॥ अग्नेयत् ॥
अग्नेयत्तेदिविवर्चः पृथिव्यांयदोषधीष्वप्स्वायजत्र ॥

येनान्तरिक्षमुर्वातुतन्थत्त्वेषःसभानुरर्णवोनृचक्षाः[1] ॥४८॥
अग्नेदिवः ॥ अग्नेदिवोऽअर्णमच्छाजिगास्यच्छादेवाँ२॥
ऽऊचिषेधिष्ण्याये ॥ यारोचनेपरस्तात्सूर्य्यस्ययाश्चावस्ता
दुपतिष्ठन्तऽआपः ॥ ४९ ॥ पुरीष्यासोऽअग्नयः । प्रा[2]व
णेभिःसजोषसः ॥ जुषन्ताँयज्ञमद्रुहोनमीवाऽइषोमहीः
॥ ५० ॥ इडामग्ने । पुरुदंसंसनिङ्गोःशश्वत्तमंहवमाना

१ यत्र यकारवकाररहितदीर्घस्वरितस्वरात्परो विसर्गस्तत्र कनिष्ठिकाक्षेप सर्वत्र कार्यं । २ प्रावणेभि । अत्र प्रवणश्रङ्गयासेषु (शु. य. प्रा ३ अ. १०५ सू.) इत्यनेन वन श्रङ्ग यास इत्येतेषु परेषु प्र इत्येतत्पदस्य ह्रस्वाकारस्य दीर्घाकारो विधीयते । अत्र प्रशब्दाद्वनशब्दः परः । तेन प्रशब्दाकारो दीर्घः ।

नायसाध ॥ स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्व
स्मे ॥ ५१ ॥ अयन्ते ॥ अयन्ते योनिर्ऋत्वियो यतो जातो ऽ
अरोचथाः ॥ तञ्जानन्नग्नऽआरोहाथा नो वर्द्धया रयिम् ॥५२॥
चिदसि ॥ चिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीद परिचिदसि त
या देवतयाङ्गिरस्वद्ध्रुवा सीद ॥ ५३ ॥ लोकम्पृण । छिद्रम्पृ
णाथो सीद ध्रुवा त्वम् ॥ इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योना
वसीषदन् ॥ ५४ ॥ ताऽअस्य ॥ ताऽअस्य सूददोहसः सोमं

श्रीणान्तिपृश्नयं ॥ जन्मन्देवानांविशंस्त्रिष्वारोंचनेदिवः

॥ ५५ ॥ इन्द्रंविश्वा÷ ॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्रव्यचस

सुङ्गिरं÷ ॥ रेथीतमठरथीनांवाजानाॐसत्पतिम्पतिम् ॥ ५६ ॥

समितम् ॥ समितसङ्कल्पेथाॐसम्प्रियौरोचिष्णूसुमनस्य

मानौ ॥ इषमूर्जमभिसंवसानौ ॥ ५७ ॥ संवाम् ॥ संवा

---

१ रथितमम् । इति पदम् । रथि तकारनकारयोः (शु य. प्रा ३ अ. ११२ सू.) इत्यनेन तकारे नकारे च परे रथि इत्येतत्पद दीर्घं भवति । तेन रथीतमम् । २ उपसर्गात्परो यस्तु स वकारो लघुर्मत । वो वा वा वै मन्त्रपाठे लघवो गुरव पदे । इति वामित्यस्यात्र लघुत्वम् ।

म्मनाꣳसिसंभृतासमुद्धिताव्याकरम् ॥ अग्नेपुरीष्याधिपा
भंवृत्वन्नऽइषमूर्जꣳसृजमानायधेहि ॥ ५८ ॥ अग्नेत्वम् ॥
अग्नेत्वम्पुरीष्योरयिमान्पुष्टिमाँ२॥ऽअसि ॥ शिवाःकृत्वा
दिशःसर्वाःस्वांयोनिमिहासदः ॥ ५९ ॥ भवंतन्नः ॥ भव
तन्नःसमनसौसचेतसावरेपसौ ॥ मायज्ञꣳहिꣳसिष्टम्मायज्ञ
पतिञ्जातवेदसौशिवौभवतमद्यनः ॥ ६० ॥ मातेवपुत्रम् ॥ माते

१ अत्र मकारोच्चारे दक्षिणहस्तेन मुष्ट्याकृति कार्या। यत्र यत्रावसानगतो मकारस्तत्र मुष्ट्याकृति. "मुष्ट्याकृतिर्मकारे स्यात्" इति या. शिक्षायाम्।

यंपुत्रम्पृथिवीपुरीष्यमग्निꣳस्वेयोनावभारुखा ॥ तांविश्वैर्दे
वैर्ऋतुभिःसंविदानःप्रजापतिर्विश्वकर्म्माविमुञ्चतु ॥ ६१ ॥
[ १७-४ ] असुन्वन्तमयजमानम् ॥ असुन्वन्तमयजमान
मिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्मदिच्छ
सातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ६२ ॥ नमःसुते ॥
नमःसुतेनिर्ऋतेतिग्मतेजोऽयस्मयंविचृताबन्धमेतम् ॥ यमे

---

१ वकारस्त्रिविध प्रोक्तो गुरुर्लघुर्लघूतर । आदौ गुरुर्लघुर्मध्ये पदान्ते च लघूतर. । यत्र पदादौ वकारस्तत्रोच्चारण गुरुभूतम् । यत्र पदादेर्मध्ये यदा च पदस्यान्ते वकारस्तदा तु क्रमेण लघु लघूतर मध्यमवृत्त्योच्चारणम् । अत्र वकार. पदस्य मध्ये वर्तते तेन न गुरुभूतत्वच्चारणमेति इति ।

नुत्त्वँऽस्मस्म्यासंविदुानोत्तुमेनाकेऽअधिरोहयैनम् ॥ ६३ ॥
यस्यास्त्ते । घोरऽआसञ्जुहोम्म्येषाम्बुन्धानांमवुसर्ज्जनाय ॥ या
न्त्वाजनोभूमिरितिप्प्रमन्दंतेनिर्ऋतिन्त्वाहम्पार्रिवेदविुश्श्वतं॑
॥ ६४ ॥ यन्ते । देवीनिर्ऋतिराबुबन्धुपाशङ्ग्रीवास्वंविचृत्त्यम् ॥
तन्तेविष्ष्याम्म्यायुषोनमद्ध्यादथैतम्पितुमंद्धिप्प्रसूंतः ॥ नमो
भूत्त्यैयेदञ्चकार ॥ ६५ ॥ निवेशंनःसङ्गमंनः ॥ निवेशंनः

१ विष्ष्यामि अत्र विसामि इति पदम् । अत्र वेर्युदय॰ (शु य प्रा ३ अ ६७ सू) इत्यनेन वे उपसर्गात्परस्य यकारोदयस्य सकारस्य षकारे कृते स्वरात्संयोगादिर्द्विरुच्यते (शु. य. प्रा. ४ अ. १०० सू.) इत्यनेन षकारस्य द्वित्वे रूपम् ।

सङ्गमनोवसूनांविश्वारूपाभिचष्टेशचीभिः ॥ देवऽइवसविता
सत्यधर्मेन्द्रोनतस्थौसमरेपथीनाम् ॥ ६६ ॥ सीरायुञ्जन्ति ।
कवयोयुगावितन्वतेपृथक् ॥ धीरादेवेषुसुम्नया ॥ ६७ ॥
युनक्तसीरा ॥ युनक्तसीरावियुगातनुध्वङ्कृतेयोनौवपतेहबी
जम् ॥ गिराचश्रुष्टिःसभराऽअसन्नोनेदीयऽइत्सृण्यःपक्वमे
यात् ॥ ६८ ॥ शुनꣳसु । फालाविकृषन्तुभूमिꣳशुनङ्कीना
शाऽअभियन्तुवाहैः ॥ शुनासीराहविषातोशमानासुपिप्पला

ऽओषधीःकर्त्तनास्स्मे ॥ ६९ ॥ घृतेनसीता ॥ घृतेनसीतामधु
नासमंज्यतांविश्वैर्देवैरनुमतामरुद्भिः ॥ ऊर्जस्वतीपयसापि
न्वमानास्स्मान्त्सीतेपयसाभ्याववृत्स्व ॥ ७० ॥ लाङ्गलं
म्पवीरवत् ॥ लाङ्गलम्पवीरवत्सुशेवꣳसोमपित्सरु ॥ तदुद्वप
तिगामविम्प्रफर्व्यंञ्चपीवरीम्प्रस्थावद्रथवाहनम् ॥ ७१ ॥
कामंकामदुघे । धुक्ष्वमित्रायवरुणायच ॥ इन्द्रायाश्विभ्यां
म्पूष्णेप्रजाभ्यऽओषधीभ्यः ॥ ७२ ॥ विमुच्यध्वम् ॥

विमुच्यध्वमघ्न्यादेवयानाऽअगन्मतमसस्पारमस्य[1] ॥ ज्यो
तिरापाम ॥ ७३ ॥ सजूरब्दः ॥ सजूरब्दोऽअयवोभिःसजू
रुषाऽअरुणीभिः ॥ सजोषसावश्विनादꣳसोभिःसजूःसूरऽ
एतशेनसजूर्वैश्वानरऽइडयाघृतेनस्वाहा ॥ ७४ ॥ [ १३-५ ]
याऽओषधीः ॥ याऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥
मनैनुबभ्रूणामहꣳशतन्धामानिसप्तच ॥ ७५ ॥ शतंवः ॥

[1] तमसस्पारम् । अत्र तमसोऽपरसात् ( शु. य. प्रा ३ अ २६ सू ) इत्यनेन विसर्जनीय. सकारमापद्यतेऽपरस्ताच्छन्दे परे । इति तमस इत्यस विसर्गस्य सकारे कृते तमसस्पारम् । अन्यथा तमस. पारम् इति स्यात् । अपरस्तात्किम् । आदित्यवर्णन्तमस. परस्तात् ( संहिता अ. ३१ म १८ )

शतंवो[1]ऽअम्म्बधामानिसहस्रंमुतवोरुहंः ॥ अधाँशतक्क्रत्वोयु
यमिमम्मेऽअगदङ्कृत ॥ ७६ ॥ ओषधीःप्प्रति । मोदद्ध्वम्पु
ष्प्पवतीःप्प्रसूवरीः ॥ अश्श्वाऽइवसजित्त्वरीर्व्वीरुधंःपारयि
ष्ण्णवंः ॥ ७७ ॥ ओषधीरिति । मातरस्तद्वोदेवीरुपंब्रुवे ॥
सनेयमश्श्वङ्गांवासंऽआत्मानन्तवंपूरुष ॥ ७८ ॥ अश्श्वत्थे
वंः ॥ अश्श्वत्थेवोनिषदंनम्पर्णेवोव्वसतिष्कृता[2] ॥ गोभाजऽइ



---

१ त्वदर्थवाचिनौ वो वां वा वै यदि निपातजौ। आदेशाश्च विकल्पार्था ईपत्स्पृष्टास्तु ते स्मृता । अर्थादेते लघव उच्चारणीया (या. शि.) २ वसति कृता इति पदम् । आविनिरिटइडायावसतिर्वरिव (शु य. प्रा ३ अ. २३ सू ) इत्यनेन ककारपकारयो परयोरेतेषा सस्य षत्वम् । तेन वसतिष्कृता ।

त्किलासथ यत्सनवथ पूरुषम् ॥ ७९ ॥ यत्रौषधीः । समग्मत राजानः समिताविव ॥ विप्रः स ऽउच्यते भिषग्रक्षोहामीवचातनः ॥ ८० ॥ अश्वावतीꣳ सोमावतीम् ॥ अश्वावतीꣳ सोमावतीमूर्जयन्तीमुदोजसम् ॥ आवित्सि सर्वाऽओषधीरस्माऽअरिष्टतातये ॥ ८१ ॥ उच्छुष्माः ॥ उच्छुष्माऽओषधीनां गावो गोष्ठादिवेरते ॥ धनꣳ सनिष्यन्तीनामात्मा

1 अश्ववतीम् । इति पदम् । अत्र अश्वरश्मिसुमति० (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे अश्वशब्दस्य ह्रस्वाकारस्य दीर्घाकार । तेन अश्वावतीम् । एव सोमावती रश्मीवतीम् ।

नून्तवंपूरुष ॥ ८२ ॥ इष्कृतिर्न्नाम । वोमाताथोयूयँस्स्थनि

ष्कृतीः ॥ सीराःपतत्रिणीस्स्थनयदामयतिनिष्कृथ ॥ ८३ ॥

अतिविश्वाः । परिष्ठास्स्तेनऽइवव्व्रजमक्रमुः ॥ ओषधीःप्प्रा

चुच्यवुर्य्यत्किञ्चतन्वोरपः ॥ ८४ ॥ यदिमा ॥ यदिमाव्वा

जयन्नहमोषधीर्हस्तऽआदधे ॥ आत्मायक्ष्मस्यनश्श्यतिपु

राजीवगृभोयथा ॥ ८५ ॥ यस्यौषधीः । प्प्रसर्पथाङ्गमङ्ग

म्परुष्परुः ॥ ततोयक्ष्मंव्विबाधध्वऽउग्ग्रोमध्यमशीरिव ॥८६॥

साकँ᳚स्यक्ष्म ॥ साकँ᳚स्यक्ष्मप्प्रपतचाषेणकिकिदीविना ॥ सा
कंव्वातस्यध्राज्यासाकन्नश्श्यनिहाकया ॥ ८७ ॥ अन्न्यावं॑ ॥
अन्न्यावोऽअन्न्यामवत्त्वन्न्यान्न्यस्याऽउपावत ॥ ताश्सर्व्वाः॑सं
विदानाऽइदम्मेप्प्रावताव्वचः॑ ॥ ८८ ॥ याश्फलिनीः᳚ ॥ याः
फलिनीर्य्याऽअफलाऽअपुष्प्पायाश्चपुष्प्पिणीः᳚ ॥ बृहस्प्पति
प्प्रसूतास्तानोमुञ्चन्त्वꣳहसः᳚ ॥ ८९ ॥ मुञ्चन्तुमा । शप

१ इदम्मेप्प्रावताव्वचः । अत्र अध्वरश्रिमतिसुमतिश्वसुतचारयघृणिसेदिमेन्द्रियधारयचित्रभद्रवयुनाश्वसहृदयधृष्णुत्त्वान्ध्यवताध्यर्घशक्तिपुरुशचि चकारे (शु. य प्रा. ३ अ ९८ सू.) इत्यनेन वच इत्यस्य वकारे परे अवत इत्यस्य ह्रस्वाकारस्य दीर्घाकार. ।

त्थ्युदथोव्वरुण्याद्दुत ॥ अथोयमस्यपड्वीशात्सर्वस्माद्देवकि
ल्बिषात् ॥ ९० ॥ अवपतन्तीरवदन् ॥ अवपतन्तीरवदन्दि
वऽओषधयस्परि ॥ यञ्जीवमश्नवामहैनसरिष्यातिपूरुषः[1]
॥ ९१ ॥ याऽओषधीः ॥ याऽओषधीःसोमराज्ञीर्बह्वीःशत
विचक्षणाः ॥ तासामसित्वमुत्तमारङ्कामायशꣳहृदे ॥ ९२ ॥
याऽओषधीः ॥ याऽओषधीःसोमराज्ञीर्विष्ठिताःपृथिवीमनु ॥

१ पूरुष. । अत्र पुरुषोऽवसाने (शु. य. प्रा. ३ अ. १२० सू.) पुरुष इति दीर्घो निपात्यते अवसाने चेत् । अत्र पू इत्यस्य निपातनाद्दीर्घः । अनवसाने पुरुषऽएवेदम् । अत्र ह्रस्व एव ।

बृहस्प्पतिंप्प्रसूंताऽअस्यैसन्दंत्तव्वीर्य्यंम् ॥ ९३ ॥ याश्श्वं ॥
याश्श्वेदमुंपशृण्ण्वन्तियाश्श्वंदूरम्परांगताः ॥ सर्व्वाःसुङ्गत्त्यंव्वी
रुधोस्यैसन्दंत्तव्वीर्य्यंम् ॥ ९४ ॥ मावंः ॥ मावोंरिषत्त्वनि
तायस्म्मैचाहङ्खनांमिवः ॥ द्विपाच्चतुंष्प्पादस्म्माकुसर्व्वंम
स्त्वनातुरम् ॥ ९५ ॥ ओषंधयुःसम् ॥ ओषंधयुःसमंवद
न्तसोमेनसुहराज्ञां ॥ यस्म्मैकृणोतिंब्राह्मणस्तंराजन्पार
यामसि ॥ ९६ ॥ नाशयित्रीबुलासंस्य ॥ नाशयित्रीबुलास

स्याशींसऽउपचितांमसि ॥ अथौ शतस्य यक्ष्माणाम्पाकारोरसि
नाशंनी ॥ ९७ ॥ त्वाङ्गन्धर्वाः ॥ त्वाङ्गन्धर्वाऽअखनँस्त्वा
मिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्य
क्ष्मादमुच्यत ॥ ९८ ॥ सहस्व मे ॥ सहस्व मेऽअरातीः सहस्व
पृतनायतः ॥ सहस्व सर्वम्पाप्मान सहमानास्योषधे ॥ ९९ ॥
दीर्घायुस्ते ॥ दीर्घायुस्तऽओषधे खनिता यस्मै च त्वा खना
म्यहम् ॥ अथो त्वन्दीर्घायुर्भूत्वा शतवल्शा विरोहतात्

१ अत्र लकारशकारयोर्योगे हरिताख्या स्वरभक्तिर्बोध्या ।

॥ १०० ॥ त्वमुत्तमा । स्योषधे तव वृक्षा ऽउपस्तयः ॥ उप
स्तिरस्तु सोऽस्माकँ यो ऽअस्माँ२ ॥ ऽअभिदासति ॥ १०१ ॥
[ २७-६ ] मामा ॥ मामा हिँसीज्जनिता यः पृथिव्या यो वा
दिवँ सुत्यधर्म्मा व्यानट् ॥ यश्चापश्चन्द्राः प्रथमो जुजान क
स्मै देवाय हुविषा विधेम ॥ १०२ ॥ अभ्यावर्त्तस्व । पृथि
वि यज्ञेन पयसा सुह ॥ वुपान्ते ऽअग्निरिषितो ऽअरोहत् ॥ १०३ ॥
अग्ने यत् ॥ अग्ने यत्ते शुक्रँ यच्चन्द्रँ यत्पूतँ यच्च युज्ञियम् ॥

तद्देवेभ्यो भरामसि ॥ १०४ ॥ इषमूर्जम् ॥ इषमूर्जमहमि
तऽआदमृतस्य योनिम्महिषस्य धाराम् ॥ आमागोषु विशत्वा
तनूषु जहामि सेदिमानिराममीवाम् ॥ १०५ ॥ अग्नेतव ॥
अग्ने तव श्रवो वयो महि भ्राजन्ते ऽअर्च्चयो विभावसो ॥ बृहद्
भानो शवसा वाजमुक्थ्यन्दधासि दाशुषे कवे ॥ १०६ ॥
पावकवर्च्चाः शुक्रवर्च्चाः ॥ पावकवर्च्चाः शुक्रवर्च्चा ऽअनूनवर्च्चा ऽ
उदियर्षि भानुना ॥ पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी ऽ

उभे ॥ १०७ ॥ ऊर्ज्जो नपात् ॥ ऊर्ज्जो नपाज्जातवेदः सुशस्तिभिर्म्मन्दस्व धीतिभिर्हितः ॥ त्वे इषः सन्दधुर्भूरिवर्प्पसश्चित्रोतयो वामजाताः ॥ १०८ ॥ इरज्यन्नग्ने । प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ॥ स दर्शतस्य वपुषो विराजसि पृणक्षि सानसिं क्रतुम् ॥ १०९ ॥ इष्कर्त्तारमध्वरस्य ॥ इष्कर्त्तारमध्वरस्य प्रचेतसं क्षयन्तं राधसो महः ॥ रातिं वामस्य

१ निश्चयेन कर्तारम् निष्कर्तारमिति प्राप्ते निशब्दो बहुलम् (शु. य प्रा ३ अ. १८ सू.) इत्यनेन क्वचित्सकारमात्रस्य लोपे इष्कर्तारम् ।

सुभगाम्महीमिषन्दधासिसानुसिᳲरयिम् ॥ ११० ॥ [1]ऋतावा
नम्महिषं। विश्वदर्शतमग्निᳲसुम्नायन्दधिरेपुरोजनाᳲ॥ श्रुत्कं
र्णᳲसप्प्रथस्तमन्त्वागिरादैव्यम्मानुषायुगा ॥ १११ ॥ आ
प्प्यायस्व ॥ आप्प्यायस्वसमेतुतेविश्वतᳲसोमवृष्ण्यम् ॥ [2]भवा
वाजस्यसङ्गथे ॥ ११२ ॥ सन्ते ॥ सन्तेपयाᳲसिसमुयन्तु
वाजाᳲसंवृष्ण्यान्न्यभिमातिषाहᳲ ॥ आप्प्यायमानोऽअमृ

१ ऋतावानम्। अत्र अश्वरश्मि० (शु. य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे ऋतशब्दस्य ह्रस्वाकारस्य दीर्घाकार.। २ भवन्वाजस्य इति पदम्। अत्र वाजस्य परे भव इत्यस्य ह्रस्वाकारस्य स चावरूथ्यवाजस्य पायुषु च (शु. य. प्रा. ३ अ. ११० सू.) इत्यनेन दीर्घे भवाव्वाजस्य। तथैव भवापायुर्व्विशोऽअस्याऽअदब्धः।

तांयसोमदिविश्श्रवांऽंस्युत्तमानिंधिषष्व ॥ ११३ ॥ आप्प्यांय

स्व । मदिन्तमसोमविश्वेभिरंशुभिः ॥ भंवांनःसुप्प्रथंस्त्त

मःसखांवृधे ॥ ११४ ॥ आते । वृत्त्सोमनोंयमत्त्परमाच्चि

त्त्सधस्त्थांत् ॥ अग्नेत्त्वाङ्कांमयागिरा ॥ ११५ ॥ तुभ्भ्यं

न्ताः ॥ तुभ्भ्यन्ताऽअंङ्गिरस्त्तमविश्श्वांःसुक्षितयःपृथंक् ॥

अग्नेकामांययेमिरे ॥ ११६ ॥ अग्निश्प्प्रियेषु ॥ अग्निः

---

१ भवन. इति पदम्। भव इत्येतस्य ह्रस्वाकारस्य न परे भव च (शु ग प्रा. ३ अ. १०९ सू.) इत्यनेन दीर्घाकारे कृते भवान इति पदम्।

ष्प्रियेषुधामसुकामौभुतस्युभव्यस्य ॥ सुम्म्राडेकोव्विराजति
॥ ११७ ॥ [ १६-७ ] इतिश्रीवाजसनेयसंहितायांद्वादशोऽ
ध्यायः ॥ १२ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥
मयिगृह्णामिपंचदश, ध्रुवास्येकादश, मधुव्वाताऽएकादश,
सम्यक्स्रवंतिनवे, मंमाषड, पांत्वैका, ऽयंपुरःपंच, सप्ताष्टापंचा
शत् [ अनु. ७ मं. ५८ अ. १३ ] ॥ हरिःॐ ॥ मयि
गृह्णामि ॥ मयिगृह्णाम्म्यग्ग्रेऽअग्निᳬंरायस्प्पोषायसुप्प्रजा

स्त्वायंसुवीर्य्याय ॥ मामुदेवताꣳसचन्ताम् ॥ १ ॥ अपाम्पृ
ष्ठम् ॥ अपाम्पृष्ठमसियोनिरग्नेःसमुद्रमभितःपिन्वमानम् ॥
वर्द्धमानोमहाँ२॥ऽआचपुष्करेदिवोमात्रयावरिम्णाप्प्रथस्व
॥ २ ॥ ब्रह्मजज्ञानम् ॥ ब्रह्मजज्ञानम्प्प्रथमम्पुरस्ताद्विसी
मतःसुरुचोव्वेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसत
श्श्चयोनिमसतश्श्चविवः ॥ ३ ॥ हिरण्यगर्भःसम् ॥ हिरण्य
गर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकऽआसीत् ॥ सदाधार

पृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ ४ ॥ द्रप्स
श्चस्कन्द । पृथिवीमनुद्यामिमञ्चयोनिमनुयश्चपूर्वः ॥ समा
नँय्योनिमनुसञ्चरन्तन्द्रप्सञ्जुहोम्म्यनुसप्तहोत्राः ॥ ५ ॥
नमोस्तु । सर्प्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदि
वितेभ्यःसर्प्पेभ्योनमः ॥ ६ ॥ याऽइषवः ॥ याऽइषवो
यातुधानानाँय्येवावनस्पतीँ१॥रनु ॥ येवावटेषुशेरतेतेभ्यः
सर्प्पेभ्योनमः ॥ ७ ॥ येवा ॥ येवामीरोचनेदिवोयेवा

सूर्य्यस्यरश्मिमषुं ॥ येषांमुप्पसुसंदंस्कृतन्तेब्भ्यंःसुपर्णेब्भ्योन
मंः ॥ ८ ॥ कृणुष्ष्वपाजंः ॥ कृणुष्ष्वपाजंप्प्रसितिन्नपृत्थ्वीं
उयाहिराजेवामंवाँराऽइभेन ॥ तृष्ष्वीमनुप्प्रसितिन्द्रूणानो
स्त्तासिविद्ध्यरक्षसस्त्तपिष्ठैः ॥ ९ ॥ तवंब्भ्रमासंः ॥ तवंब्भ्र
मासऽआशुयापतन्त्यनुंस्पृशधृषताशोशुचानः ॥ तपूंष्ष्य

---

१ सदस्कृतम् । अत्र सदोद्यौर्नमस्कृतम्पिता पथेषु (शु य प्रा ३ अ. ३४ सू ) इत्यनेन यथासंख्य सद द्यो. नम एतेषां विसर्जनीयस्थानिन. सस्य क्रमेण कृतं पिता पथ एतेषु पदेषु परेषु पकारः। एवं पकारे कृते ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु य प्रा ४ अ. १०२ सू ) इत्यनेन ककारस्य द्वित्वे प्राप्ते ऋवर्णे (शु. य. प्रा. ४ अ. १११ सू. ) इत्यनेन ककारस्य द्वित्वनिषेधः ।

र्णोऽव्यथमानापृथिवीन्दृꣳह ॥ १६ ॥ प्रजापतिष्ट्वा[1] । साद
यत्त्वपाम्पृष्ठेसमुद्रस्येमन् ॥ व्यचस्वतीम्प्रथस्वतीम्प्रथस्वपृथि
व्यसि ॥ १७ ॥ भूरसि ॥ भूरसिभूमिरस्यदितिरसिविश्वधाया
विश्वस्यभुवनस्यधर्त्री ॥ पृथिवीँय्यच्छपृथिवीन्दृꣳहपृथिवी
म्माहिꣳसीः ॥ १८ ॥ विश्वस्मैप्प्राणाय ॥ विश्वस्मैप्प्रा
णायापानायव्यानायोदानायप्प्रतिष्ठायैचरित्राय ॥ अग्निष्ट्वा



---

१ प्रजापतिष्ट्वा । सकारपरे च ( शु य प्रा ३ अ ७८ सू ) इत्यनेन सकारः परो यस्मादेकाक्षरात्तस्यैकाक्षरे प्रत्यये विसर्जनीयसकारस्य षत्वम् । अत्र प्रजापतिशब्दे पाधातो. पतिशब्दस्य सस्य षकारे ष्टुत्वे द्वित्वे रूपम् ।

भिपांतुमह्यास्वस्त्याच्छर्दिषाशन्तमेनुतयादेवतयाङ्गिरस्वद्ध्रु

वासीद ॥ १९ ॥ काण्डात्काण्डात्प्ररोहन्ती ॥ काण्डा

त्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि[1] ॥ एवानोदूर्वेप्प्रतनुस

हस्रेणशतेनच ॥ २० ॥ याशतेन । प्प्रतनोषिसहस्रेणविरो

हसि ॥ तस्यास्तेदेवीष्टकेविधेमहविषावयम् ॥ २१ ॥ यास्ते ॥

यास्तेऽअग्ग्नेसूर्येरुचोदिवमातन्वन्तिरश्मिभिः ॥ ताभि

---

१ परुष. परुषस्परि। अत्र समानपदे च (शु य प्रा ३ अ ३० सू ) इत्यनेन सकारे प्राप्ते न परुः परुषि (शु य. प्रा. ३ अ ३१ सू ) इत्यनेन परुषि परे पूर्वपरुषशब्दघटितविसर्जनीयस्य सकारो निषिध्यते । अतो न सकार किन्तु विसर्ग एव ।

नौऽअग्घसर्वाभीरुचेजनायनस्कृधि ॥ २२ ॥ सार्वं ॥ या
वोदेवाःसूर्येरुचोगोष्वश्वेषुयारुचः ॥ इन्द्राग्नीताभिःस
र्वाभीरुचन्नोधत्तबृहस्पते ॥ २३ ॥ विराड्ज्योतिः ॥ वि
राड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत् ॥ प्रजापतिष्ट्वासा
दयतुपृष्ठेपृथिव्याज्ज्योतिष्मतीम् ॥ विश्वस्मैप्राणायापाना
यव्यानायविश्वञ्ज्योतिर्यच्छ ॥ [1]अग्निष्टेऽधिपतिस्तयादेवत

१ अग्निष्टे । अग्निस्ते इति पदम् । अत्र वायुरग्निरग्नेरेकाक्षरे (शु. य. प्रा ३ अ. ७७ सू ) इत्यनेन एकाक्षरे ते पदे परे अग्निशब्दघटितस्य सस्य पत्वे ष्टुत्वे ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु य प्रा ४ अ १०२ सू ) इत्यनेन टस्य द्वित्वम् ।

याङ्गिरस्वद्ध्रुवासीद ॥ २४ ॥ मधुश्च ॥ मधुश्चमाधवश्चवास
न्तिकावृतूऽअग्नेरन्तःश्लेषोऽसिकल्पेतान्द्यावापृथिवीकल्प
न्तामापऽओषधयःकल्पन्तामग्नयः पृथङ्ममज्यैष्ठ्यायस
व्रताः ॥ येऽअग्नयःसमनसोऽन्तराद्यावापृथिवीऽइमे ॥ वास
न्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तु[1]
तयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ २५ ॥ अषाढासि ॥ अषा

---

१ अभिसविशन्तु । अत्र मात्रिभ्यः सः प समानपदे (शु य प्रा ३ अ. ५६ सू ) अनेन प्राप्तस्य षकारस्य अनुसन्तनोतुबृहस्पतिसुतस्यसुसमिद्धाय-सुसन्दृशमभिमत्वाऽभिमविशन्तु० (शु. य. प्रा ३ अ ८२ सू ) इत्यनेन प्रकृतिभावे षत्वाभाव ।

ढासिसहमानासहस्वारातीःसहस्वपृतनायतः ॥ सहस्रंवीर्य्या
सिसामांजिन्व ॥ २६ ॥ [ ११-२ ] मधुवाताः ॥ मधुवाताऽऋ
तायतेमधुंक्षरन्तिसिन्धवः ॥ माध्वीर्नःसन्त्वोषधीः ॥ २७ ॥
मधुनक्तम् ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः ॥ म
धुद्यौरस्तुनःपिता ॥ २८ ॥ मधुमान्नः ॥ मधुमान्नोवनस्पति
र्म्मधुमाँ२॥ऽअस्तुसूर्य्यः ॥ माध्वीर्गावोभवन्तुनः ॥ २९ ॥
अपाङ्गम्भन् ॥ अपाङ्गम्भन्त्सीदमात्वासूर्य्योऽभिताप्सीन्मा

ग्निर्वैश्वानरः ॥ अच्छिन्नपत्राः प्रजाऽअनुवीक्षस्वानुत्वादि
व्यावृष्टिःसचताम् ॥ ३० ॥ त्रीन्त्समुद्रान् ॥ त्रीन्त्समुद्रा
न्त्समसृपत्स्वर्गानपाम्पतिर्वृषभऽइष्टकानाम् ॥ पुरीषंवसानः
सुकृतस्यलोकेतत्रगच्छयत्रपूर्वेपरेताः ॥ ३१ ॥ महीद्यौः ।
पृथिवीचनऽइमंय्यज्ञम्मिमिक्षताम् ॥ पिपृतान्नोभरीमभिः
॥ ३२ ॥ विष्णोःकर्म्माणि । पश्यतयतोव्रतानिपस्पशे ॥
इन्द्रस्ययुज्यःसखा ॥ ३३ ॥ ध्रुवासि । धरुणेतोजज्ञेप्रथम

स्रोकेभ्यो योनिभ्यो ऽअधि जातवेदाः ॥ स गायुत्र्या त्रिष्टुभानुष्टु
भा च देवेभ्यो हुव्यं वहतु प्रजानन् ॥ ३४ ॥ इषे राये । रमस्व
सहसे द्युम्न ऽऊर्जे ऽअपत्याय ॥ सम्राडसि स्वराडसि सार
स्वतौ त्वोत्सौ प्रावताम् ॥३५॥ अग्ने युक्ष्व ॥ अग्ने युक्ष्वा हि
ये तवाश्वासो देव साधवः ॥ अरं वहन्ति मुन्यवे ॥ ३६ ॥
युक्ष्वा हि । देवहूतमाँ२ ॥ ऽअश्वाँ२ ॥ ऽअग्ने रुथीरिव ॥ नि होता
पूर्व्यः सदः ॥ ३७ ॥ [११-३] सम्यक् स्रवन्ति । सरितो

न्धेनाऽअन्तर्हृदामनसापूयमानाः ॥ घृतस्यधाराऽअभिचाक
शीमिहिरण्ययोव्वेतसोमद्ध्येऽअग्ने॑ ॥ ३८ ॥ रुचेत्त्वा ।
रुचेत्त्वांभासेत्त्वाज्ज्योतिषेत्त्वा ॥ अभूदिदंव्विश्वस्यभुवनस्य
व्वाजिनमग्नेर्व्वैश्वानरस्यंच ॥ ३९ ॥ अग्निर्ज्ज्योतिषा ॥
अग्निर्ज्ज्योतिषाज्ज्योतिष्मान्रुक्मोव्वर्च्चसाव्वर्च्चस्वान् ॥ सहस्र
दाऽअसिसहस्रायत्त्वा ॥ ४० ॥ आदित्त्यङ्गर्ब्भम् ॥ आदित्त्य

१ यत्र रकारपरस्य हकारपरस्य च स्पर्शवर्णस्य द्वित्व तत्र ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य. प्रा ४ अ १०२ सू) इत्यनेन ज्ञेयम्। अस्य पर तु रेफहकाराभ्याम् इत्यनेन विधीयमानस्य द्वित्वस्यापवादभूतत्वात्। यथा सवर्चसा। गर्भम्। पार्थिवम्। चक्षुर्म्मित्रस्य। अग्निर्ज्योतिषा।

ङ्गर्भम्पयसासमाद्भिस्सहस्रस्यप्प्रतिमांव्विश्वरूपम् ॥ परिवृद्धिस्यजूतिं । व्वरुणस्यनाभिमश्वञ्ज्ञानन्सरिरस्यमद्ध्ये ॥ शिशुन्नदीनांहरिमद्रिबुद्ध्रमग्ग्नेमाहिसीःपरमेव्योमन् ॥४१॥ व्वाजं सहस्रम्मा हिंसीः शतायुषङ्कणुहि चीयमानं ॥४१॥ व्वातस्यजूतिं । व्वरुणस्यनाभिमश्वञ्ज्ञानन्सरिरस्यमद्ध्ये ॥ शिशुन्नदीनांहरिमद्रिबुद्ध्रमग्ग्नेमाहिसीःपरमेव्योमन् ॥४२॥ अजस्रमिन्दुम ॥ अजस्रमिन्दुमरुषम्भुरण्युमग्निमीडे.

१ मंस्था. । अत्र सयोगाद्यश्च यो भवेत् । ( या. शि ) यत्र संयोगाद्योऽनुस्वारो मात्रिको द्विमात्रिको वा वर्णो भवेत्तत्र ऋवर्णव्यञ्जनादिगं संयोगाद्य वर्जयित्वा ह्रस्व एव वोध्य. । संयोगात्पूर्वं. संयोगपूर्वं इति समास' । अत्र नानुस्वार. ( शु य प्रा ४ अ १०९ सू ) लिङ्गम् । २ वर्णे तु मात्रिके पूर्वे ह्यनुस्वारो द्विमात्रिक. । ( या शि ) मात्रिकेऽ ( ह्रस्ववर्णे पूर्वे ) नुस्वारे सो द्विमात्रिको लेख्यो वोध्य उच्चारणीयश्च । अत्र अनुस्वारो ह्रस्वपूर्वोऽध्यर्धमात्रा पूर्वा चार्धमात्रेति ( शु य प्रा ४ अ १४८ सू ) प्रमाणम् । ३ द्विमात्रिके मात्रिक स्यादिति ( या शि ) । यत्रानुस्वारात्पूर्ववर्णो द्विमात्रिकस्तत्र मात्रिकोऽ ( ह्रस्व:-ऌइत्याकारक. ) नुस्वारो विधेयो ह्रस्वोच्चारणीयश्च । अत्र दीर्घाद्र्धमात्रा पूर्वा चाध्यर्धा ( शु य प्रा. ४ अ १४९ सू ) लिङ्गम् ।

पूर्व्वचित्तिन्नमोभिः ॥ सपर्व्वभिर्ऋतुशःकल्पमानोगाम्माहिंᳩ
सीरदितिंव्विराजम् ॥ ४३ ॥ व्वरूत्रीन्त्वष्टुः ॥ व्वरूत्रीन्त्व
ष्टुर्व्वरुणस्यनाभिमविंञ्जज्ञानाᳬंरजसःपरस्मात् ॥ मुहीᳬं
साहस्रीमसुरस्यमायामग्नेमाहिंᳩसीःपरमेव्योमन् ॥ ४४ ॥
योऽअग्निः ॥ योऽअग्निरग्नेरध्यजायतशोकात्पृथिव्याऽउत
वादिवस्परि ॥ येनप्रजाव्विश्वकर्म्माजजानतमग्नेहेडःपरि
तेवृणक्तु ॥ ४५ ॥ चित्रन्देवानाम् ॥ चित्रन्देवानामुदगाद

न्नीकञ्चक्षुर्मित्त्रस्य वरुणस्याग्ग्नेः१ ॥ आप्प्रा द्यावापृथिवीऽअन्त
रिक्षᳬसूर्र्यऽआत्त्मा जगतस्तस्त्थुषश्च ॥ ४६ ॥ [ ९-४ ]
इमम्मा । हिᳬसीर्द्विपादम्पशुᳬसहस्राक्षो मेधाय चीयमानः ॥
मयुम्पशुम्मेधमग्ग्ने जुषस्व तेन चिन्न्वानस्तन्न्वो निषीद ॥ मयु
न्ते शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥ ४७ ॥ इमम्मा ।
हिᳬसीरेकशफम्पशुङ्कनिक्क्रदँव्वाजिनँव्वाजिनेषु ॥ गौरमार

१ यत्र स्वरात्परस्य संयोगस्याद्यक्षरस्य द्वित्वं दृश्यते तत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र (शु य. प्रा ३ अ ९६ सू ) इत्यनेन ज्ञेयम् । चिन्न्वानः । सञ्च्य-
च्यमान् । जनित्रम् । वरुणस्याग्ग्ने । परत्र स संयोग सजातीयकण्ठतालव्यदन्त्यमूर्धन्यौष्ठ्यवर्णाना न चेत् तत्र तु द्वित्वाभाव एव यथा इमस्मा ।

ण्यमनुंतेदिशामितेनंचिन्वानस्तन्वोनिषींद ॥ गौरन्तेशुगृ
च्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥ ४८ ॥ इमꣳसाहस्रम् ॥
इमꣳसाहस्रꣳशतधारमुत्सं व्यच्यमानꣳसरिरस्यमद्ध्ये ॥
घृतन्दुहानामदितिञ्जनायाग्नेमाहिꣳसीःपरमेव्योमन् ॥ गव
यमारण्यमनुंतेदिशामितेनंचिन्वानस्तन्वोनिषींद ॥ गवय
न्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥ ४९ ॥ इममूर्णा
युं । वरुणस्यनाभिन्त्वचम्पशूनान्द्विपदाञ्चतुष्पदाम् ॥ त्वष्टुः

प्रजानाम्प्रथमञ्जनित्रमग्ने माहिँसीः परमे व्योमन् ॥ उष्ट्र
मारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ॥ उष्ट्रन्ते
शुगृच्छतु यन्द्विष्मस्तन्ते शुगृच्छतु ॥ ५० ॥ अजो हि ॥ अजो
ह्यग्नेरजनिष्ट शोकात्सोऽअपश्यज्जनितारमग्रे ॥ तेन देवा देव
तामग्रमायँस्तेन रोहमायन्नुप मेध्यासः ॥ शरभमारण्यमनु ते
दिशामि तेन चिन्वानस्तन्वो निषीद ॥ शरभन्ते शुगृच्छतु य
न्द्विष्मस्तन्ते शुगृच्छतु ॥ ५१ ॥ त्वँ यविष्ठ । दाशुषो नॄँः

पाहिशृणुधीगिरं॑॥ रक्षातोकमुतत्मना ॥५२॥ [६-५]
अपान्त्वा ॥ अपान्त्वेमं[1]न्त्सादयाम्यपान्त्वोद्मन्त्सादयाम्य
पान्त्वाभस्मन्त्सादयाम्यपान्त्वाज्योतिषिसादयाम्यपा
न्त्वायनेसादयाम्यर्णवेत्वासदनेसादयामिसमुद्रेत्वासदने
सादयामिसरिरेत्वासदनेसादयाम्यपान्त्वाक्षयेसादयाम्य
पान्त्वासधिषिसादयाम्यपान्त्वासदनेसादयाम्यपान्त्वासध
स्त्थेसादयाम्यपान्त्वायोनौसादयाम्यपान्त्वापुरीषेसादया

१ एमनि इति पदम् । निशङ्गो बहुलम् (शु य प्रा ३ म १८ सू) इत्यनेन क्वचिन्निकारघटितेकारस्यापि लोपः । एव लोपे एमन् भवति ।

ऽभ्यपान्त्वापाथंसिसादयामिगायत्रेणंत्वाच्छन्दंसासादयामि
त्रैष्टुंभेनत्वाच्छन्दंसासादयामिजागंतेनत्वाच्छन्दंसासादया
म्म्यानुंष्टुभेनत्वाच्छन्दंसासादयामिपाङ्क्तेंनत्वाच्छन्दंसासाद
यामि ॥ ५३ ॥ [ १-६ ] अयम्पुरः ॥ अयम्पुरोभुवस्तस्यं
प्प्राणोभौवायनोवंसन्तःप्प्राणायनोगायत्रीवांसन्तीगायत्र्यै
गायत्रङ्गायत्रादुंपाᳫंशुरुंपाᳫंशोस्त्रिवृत्त्रिवृतोरथन्तरंवसिष्ठऽ
ऋषिः प्प्रजापंतिगृहीतयात्वयांप्प्राणङ्गृह्णामिप्प्रजाभ्यः ॥

॥ ५४ ॥ अयन्दक्षिणा । विश्वकर्म्मा तस्य मनो वैश्वकर्म्मणङ्ग्री
ष्मो मानसस्त्रिष्टुब्ग्रैष्मी त्रिष्टुभः स्वारꣳ स्वारादन्तर्यामोन्त
र्यामात्पञ्चदशः पञ्चदशाद्बृहद्भरद्वाज ऋषिः प्रजापतिगृही
तया त्वया मनो गृह्णामि प्रजाभ्यः ॥ ५५ ॥ अयम्पश्चात् ॥
अयम्पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाश्चाक्षु
ष्यो जगती वार्षी जगत्या ऋक्समम् ऋक्समाच्छुक्रः शुक्रात्सप्त
दशः सप्तदशाद्वैरूपञ्जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया

चक्षुर्गृह्णामिप्प्रजाब्भ्यः ॥ ५६ ॥ इदमुत्तरात् ॥ इदमुत्त
रात्त्स्वस्त्तस्य्श्श्रोत्रꣳसौवꣳशरच्छ्रौत्र्यनुष्टुप्प्शारद्यनुष्टुभऽऐ
डमैडात्त्मन्थीमन्थिनऽएकविꣳशऽएकविꣳशाद्वैराजंव्विश्वामि
त्त्रऽऋषिः प्प्रजापतिगृहीतया त्त्वया श्श्रोत्रङ्गृह्णामिप्प्रजाब्भ्यः
॥ ५७ ॥ इयमुपरिमतिस्त्तस्यैव्वाङ्मात्याहैमन्तोव्वाच्यः पङ्
क्तिर्हैमन्तीपङ्क्त्यैनिधनवन्निधनवतऽआग्ग्रयणऽआग्ग्रयणात्त्रि

1 विश्वामित्र । अत्र नरहामित्रेषु च ( शु य प्रा ३ अ १०३ सू ) इत्यनेन मित्रशब्दपरे विश्वशब्दस्य दीर्घाकार । 2 वाङ्माल्या इति पदम् । पञ्चमेऽपञ्चमम् । ( शु य प्रा. ४ अ. १२१ सू ) पञ्चमे स्पर्शे प्रलये परेऽपञ्चम. पञ्चमम.पद्यते । इत्यनेन ककारस्य पञ्चमे स्वरे पञ्चम । वाङ्माल्या ।

णवत्रयस्त्रिꣳशौत्रिणवत्रयस्त्रिꣳशाभ्याꣳशाक्क्वररैवतेव्विश्श्वक
र्म्मऽऋषिं प्प्रजापतिगृहीतयात्त्वयाव्वाचङ्कृणामिप्प्रजाभ्यो
लोकन्ताऽइन्द्रम् ॥ ५८ ॥ [५-७] इतिश्रीवाजसनेयसंहि
तायांत्रयोदशोऽध्यायः ॥ १३ ॥ श्रीवेदपुरुषायनमः ॥
अनुवाकसूत्रम् ॥ ध्रुवक्षितिर्षट्, सजूर्ऋतुभिर्द्विका, मूर्द्धाव्वयो
द्विका, इन्द्राग्नीऽअव्यथमानाꣳषडा, युमेंषडा, शुक्रिवृदेका,

---

१ अध्याय १२–लोकंपृण ५४ १ । ताऽअस्य ५५ २ । इंद्रविश्वा ५६ ३ ॥ इति प्रतीकानि ॥

ग्नेर्भागोसिचतुष्कैं,कयाचतुष्का,ष्टावेकत्रिंशत् [ अ. १४
मं. ३१ अनु. ८ ] ॥ हरिः ॐ ॥ ध्रुवक्षितिर्द्धुवयोनिर्द्धु ॥
ध्रुवक्षितिर्द्धुवयोनिर्द्धुवासिंद्धुवँव्योनिमासीदसाधुया ॥ उक्थ्यं
स्यकेतुम्प्रथमञ्जुषाणाश्विनांद्ध्वर्य्यूसादयतामिहत्त्वा ॥ १ ॥
कुलायिनीघृतवंती ॥ कुलायिनीघृतवंतीपुरंन्धिस्स्योनेसीदस
दनेपृथिव्याः ॥ अभित्त्वारुद्रावसवोगृणन्त्विमाब्रह्मपीपि

१ ध्रुवयोनि ॥ अत्र समानपदे ऋपरेभ्य स्वरयवहकपैश्च (शु य प्रा ३ अ ६२ सू ) इत्यनेन णत्वप्राप्तौ इन्द्राग्नी त्विषभानो० (य शु प्रा. ३ अ. ९३ सू ) इत्यनेन णत्वनिषेध ।

हिसौभंगायाश्विनांध्वर्यूसांदयतामिहत्त्वां ॥ २ ॥ स्वैर्दक्षैः ॥
स्वैर्दक्षैर्दक्षपितेहसीददेवानांᳯसुम्नेबृहतेरणाय ॥ पितेवैधि
सूनवऽआसुशेवास्वावेशातन्वासंविशस्वाश्विनांध्वर्यूसांदयता
मिहत्त्वां ॥ ३ ॥ पृथिव्याःपुरीषम् ॥ पृथिव्याःपुरीषमस्य
प्सोनामतान्त्वाविश्वेऽअभिगृंणन्तुदेवाः ॥ स्तोमपृष्ठाघृतव
तीहसीदप्रजावदस्मेद्रविणायजस्वाश्विनांध्वर्यूसांदयतामि
हत्त्वां ॥ ४ ॥ अदित्यास्त्वा । पृष्ठेसादयाम्यन्तरिक्षस्यधर्त्रीं

विष्टम्भनीन्दिशामधिपत्क्नीम्भुवनानाम् ॥ ऊर्म्मिर्द्रप्सोऽ
अपामसिविश्वकर्म्मातऽऋषिरश्विनाध्वर्य्यूसादयतामिहत्वा
॥५॥ शुक्रश्च ॥ शुक्रश्चशुचिश्चग्ग्रैष्म्मावृतूऽअग्नेरन्तःश्लेषो
सिकल्पेतान्द्यावापृथिवीकल्पन्तामापऽओषधयःकल्पन्ता
मग्नयःपृथङ्ममज्ज्यैष्ठ्यायसव्व्रताः ॥ येऽअग्नयःसमनसो
न्तराद्यावापृथिवीऽइमे ॥ ग्रैष्म्मावृतूऽअभिकल्पमानाऽइन्द्र
मिवदेवाऽअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥६॥

॥१३८॥

[६-१]सजूर्ऋतुभिः।सजूर्विधाभिःसजूर्देवैःसजूर्देवैर्वयोनाधै
रग्नयेत्वावैश्वानरायाश्विनाध्वर्यूसादयतामिहत्वासजूर्ऋतु
भिःसजूर्विधाभिःसजूर्वसुभिःसजूर्देवैर्वयोनाधैरग्नयेत्वावै
श्वानरायाश्विनाध्वर्यूसादयतामिहत्वासजूर्ऋतुभिःसजूर्वि
धाभिःसजूरुद्रैःसजूर्देवैर्वयोनाधैरग्नयेत्वावैश्वानरायाश्वि
नाध्वर्यूसादयतामिहत्वासजूर्ऋतुभिःसजूर्विधाभिःसजूरा
दित्यैःसजूर्देवैर्वयोनाधैरग्नयेत्वावैश्वानरायाश्विनाध्वर्यूसा

दयतामिह त्वा सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैः स
जूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामि
ह त्वा ॥ ७ ॥ प्राणम्मे । पाह्यपानम्मे पाहि व्यानम्मे पाहि चक्षु
र्म्मऽउर्व्या विभाहि श्रोत्रम्मे श्लोकय ॥ अपः पिन्वौषधीर्जिन्व
द्विपादव चतुष्पात्पाहि दिवो वृष्टिमेरय ॥ ८ ॥ [२-२] मूर्द्धा
वयः । प्रजापतिश्छन्दः क्षत्रं वयो मयन्दं छन्दो विष्टम्भो
वयोधिपतिश्छन्दो विश्वकर्म्मा वयः परमेष्ठी छन्दो बस्तो

वयो विवलञ्छन्दो वृष्णिर्वयो विशालञ्छन्दः पुरुषो वयस्त
न्द्रञ्छन्दो व्याघ्रो वयोऽनाधृष्टञ्छन्दः सिंहो वयश्छदिश्छ
न्दः पष्ठवाड्वयो बृहतीच्छन्द उक्षा वयः ककुप्छन्द ऋषभो
वयः सतोबृहतीच्छन्दोऽनड्वान्वयः ॥९॥ अनड्वान्वयः । पङ्क्ति
श्छन्दो धेनुर्वयो जगतीच्छन्दस्त्र्यविर्वयस्त्रिष्टुप्छन्दो दित्य
वाड्वयो विराट्छन्दः पञ्चाविर्वयो गायत्रीच्छन्दस्त्रिवत्सो वय उ
ष्णिक्छन्दस्तुर्यवाड्वयोऽनुष्टुप्छन्दो लोकन्ताऽइन्द्रम् ॥१०॥

१ अध्याय १२ लोकम्पृण (५४) १ ताऽअस्य (५५) २ । इन्द्रं विश्वा (५६) ३ ॥ इति प्रतीकानि ॥

[ २-३ ] इन्द्राग्नीऽअव्यथमानाम् ॥ इन्द्राग्नीऽअव्यं
थमानामिष्टकान्दृꣳहतँ᳚युवम् ॥ पृष्ठेनुद्यावापृथिवीऽअन्त
रिक्षञ्चविबाधसे ॥ ११ ॥ विश्वकर्म्मात्त्वा । सादयत्त्वन्त
रिक्षस्यपृष्ठेव्यचस्वतीम्प्रथस्वतीमन्तरिक्षँ᳚यच्छान्तरिक्ष
न्दृꣳहान्तरिक्षम्माहिꣳसीः ॥ विश्वस्मैप्प्राणायापानाय
व्यानायोदानायप्प्रतिष्ठायैचरित्राय ॥ वायुष्ट्वाभिपातुमह्यास्व
स्त्याच्छर्दिषाशन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ १२ ॥

शतम् ॥ ७०० ॥ राज्ञ्यसि ॥ राज्ञ्यसिप्प्राचीदिग्विराडसि
दक्क्षिणादिक्सम्म्राडसिप्प्रतीचीदिक्स्वराडस्युदीचीदिगधिप
त्न्यसिबृहतीदिक् ॥ १३ ॥ विश्श्वकर्म्मात्त्वा । सादयत्त्व
न्तारिक्क्षस्यपृष्ठेज्ज्योतिष्म्मतीम् ॥ विश्श्वस्म्मैप्प्राणायापानाय
व्यानायविश्श्वञ्ज्योतिर्य्यच्छ ॥ वायुष्टेधिपतिस्तयादेवतया
ङ्गिरस्वद्ध्रुवासीद ॥ १४ ॥ नभश्श्च । नभस्यश्श्चवार्षिकावृतू

१ वायुष्टे। अत्र वायुस्ते इति पदम्। "वायुरग्निरग्नेरेकाक्षरे" (शु. य प्रा. ३ अ. ७७ सू.) इत्यनेन एकाक्षरे पदे परे वायु अग्नि अग्ने एतेषां विसर्गस्य षत्व भवति। तत. ष्टुत्वे ऊष्मान्तस्थाभ्यश्च स्पर्शः (शु. य प्रा. ४ अ १०२ सू.) इत्यनेन द्वित्वे रूपम्।

अग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्तामापऽओ
षधयःकल्पन्तामग्नयःपृथङ्ममज्यैष्ठ्यायसव्रताः ॥ येऽ
अग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ वार्षिकावृतूऽअ
भिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवतयाङ्गि
रस्वद्ध्रुवेसीदतम् ॥ १५ ॥ इषश्च ॥ इषश्चोर्जश्चशारदा
वृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवीकल्पन्तामा
पऽओषधयःकल्पन्तामग्नयःपृथङ्ममज्यैष्ठ्यायसव्रताः ॥

येऽअग्नयः समनसोन्तरा द्यावापृथिवीऽइमे ॥ शारदावृतूऽअभिकल्पमानाऽइन्द्रमिव देवाऽअभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ १६ ॥ [ ६-३ ] आयुर्म्मे । पाहि प्राणम्मे पाह्यपानम्मे पाहि व्यानम्मे पाहि चक्षुर्म्मे पाहि श्रोत्रम्मे पाहि वाचम्मे पिन्व मनो मे जिन्वात्मानम्मे पाहि ज्योतिर्म्मे यच्छ ॥ १७ ॥ माच्छन्दः । प्रमाच्छन्दः प्रतिमाच्छन्दोऽअस्त्रीवयश्[1]छन्दः पङ्क्तिश्छन्दऽउष्णिक्छन्दो बृहतीच्छन्दोनुष्टु

[1] अत्र "अस्त्रीवयश्छन्द" इत्यत्र "चछयोः शम्" इत्यनेन यकारोत्तरवर्तिनो विसर्जनीयस्य शकार ।

प्पछन्दोविराट्छन्दोगायत्रीच्छन्दस्त्रिष्टुप्पछन्दोजगतीच्छन्दः
॥ १८ ॥ पृथिवीच्छन्दः ॥ पृथिवीच्छन्दोन्तरिक्षञ्छन्दो
द्यौश्छन्दस्समाश्छन्दोनक्षत्राणिच्छन्दोवाक्छन्दोमन
श्छन्दःकृषिश्छन्दोहिरण्यञ्छन्दोगौश्छन्दोजाच्छन्दो
श्वश्छन्दः ॥ १९ ॥ अग्निर्देवता ॥ अग्निर्देवतावातोदेव
तासूर्य्योदेवताचन्द्रमादेवतावसवोदेवतारुद्रादेवतादित्यादेव
तामरुतोदेवताविश्वेदेवादेवताबृहस्पतिर्देवतेन्द्रोदेवतावरुणो

देवता ॥२०॥ मूर्द्धासि ॥ मूर्द्धासिराड्ध्रुवासिधरुणाधर्त्र्यसि
धरणी ॥ आयुषेत्त्वावर्च्चसेत्त्वाकृष्यैत्त्वाक्षेमायत्त्वा ॥ २१ ॥
यन्त्रीराट् ॥ यन्त्रीराड्यन्त्र्यसियमनीध्रुवासिधरित्री ॥ इषेत्त्वो
र्ज्जेत्त्वारय्यैत्त्वापोषायत्त्वालोकन्ताऽइन्द्रम् ॥ २२ ॥ [ ६-५ ]
आशुस्त्रिवृत् ॥ आशुस्त्रिवृद्भान्तःपञ्चदशोव्योमासप्तदशोधरु
णऽएकविंशःप्रतूर्त्तिरष्टादशस्तपोनवदशोभीवर्त्तःसंविंशो

1 अध्याय १.२–लोकंपृण ५४ १–ताऽअस्य. ५५ २। इन्द्रंविश्वा ३ ५६ ॥ इति प्रतीकानि ॥ 2 अभीवर्त्त । अत्र "अश्वरश्मिमतिसुमतिश्रुत-चारयघृणिसेदिमेन्द्रियधारयचित्रभङ्गुरवयुनाश्वस्यहृदयधुव्यर्त्तोध्यवताभ्यर्चशक्तिपुरुशाचि वकारे" (शु. य. प्रा ३ अ ९८ सू ) इत्यनेन वकारे परे अभि इत्यस्य ह्रस्वेकारस्य दीर्घेकार ।

ब्वर्च्चौद्वाविꣳशःसम्भरणस्त्रयोविꣳशोयोनिँश्चतुर्व्विꣳशोगर्ब्भाः
पञ्चविꣳशऽओजस्त्रिणवःक्क्रतुरेकत्रिꣳशःप्प्रतिष्ठात्रयस्त्रिꣳशो
ब्ब्रध्नस्यव्विष्टपञ्चतुस्त्रिꣳशोनाकःषट्त्रिꣳशोव्विवर्त्तोऽष्टाचत्वारिꣳ
शोधर्त्रञ्चतुष्टोमः ॥ २३ ॥ [ १-६ ] अग्ग्नेर्ब्भागः ॥ अग्ग्नेर्ब्भा
गोसिदीक्षायाऽआधिपत्यम्ब्रह्मस्पृतन्त्रिवृत्स्तोमऽइन्द्रस्यभा



---

१ वध्नस्य । अत्र स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र (शु य प्रा ४ अ. १०० सू ) इत्यनेन द्वित्वम् । न त्वत्र धकारोत्तरवर्तिनो नकारस्य स्ववर्गीयत्वेन स्ववर्गीये चानुत्तमे (शु. य. प्रा. ४ अ ११५ सू.) इत्यनेन निषेध । तस्यानुत्तमे एव स्ववर्गीये वर्णपरे निषेधात् । अत्र तु अनुनासिकाश्चोत्तमाः (य. शु. प्रा १ अ ८९ सू ) इत्यनेन वर्गोत्तमा ङञणनमा ( वर्गोत्तमसंज्ञका ) अनुनासिका भवन्ति । इति धकारत्तरोवर्तिनो नकारस्य वर्गोत्तमत्वात्तदतिरिक्तेषु वर्णपरेषु स्ववर्गीयेष्वेव द्वित्वनिषेधो बोध्य । एव तत्तत्स्थलेषु ज्ञेयम् ।

गोसिविष्णोराधिपत्त्यङ्क्षत्रꣳस्पृतम्पञ्चदशस्तोमोनृचक्ष
साम्भागोसिधातुराधिपत्त्यञ्जनित्रꣳस्पृतꣳसप्तदशस्तोमो
मित्रस्यभागोसिवरुणस्याधिपत्त्यन्दिवोवृष्टिर्वातस्पृतऽएक
विꣳशस्तोमोवसूनाम्भागः ॥ २४ ॥ वसूनाम्भागः ॥ वसू
नाम्भागोसिरुद्राणामाधिपत्त्यञ्चतुष्पात्स्पृतञ्चतुर्विꣳशस्तो
मऽआदित्यानाम्भागोसिमरुतामाधिपत्त्यङ्गर्भास्पृताःपञ्च
विꣳशस्तोमोदित्यैभागोसिपूष्णऽआधिपत्त्यमोजस्पृतन्त्रि

णवस्तोमो देवस्य सवितुर्भागोसि बृहस्पतेराधिपत्यꣳ समी
चीर्दिशस्पृताश्चतुष्टोमस्तोमो यवानाम्भागः ॥ २५ ॥ यवा
नाम्भागः ॥ यवानाम्भागोस्ययवानामाधिपत्यम्प्रजास्पृता
श्चतुश्चत्वारिꣳशस्तोमऽऋभूणाम्भागोसि विश्वेषान्देवानामा
धिपत्यम्भूतꣳस्पृतन्त्रयस्त्रिꣳशस्तोमꣳ सहश्च ॥ २६ ॥ सह
श्च । सहस्यश्च हैमन्तिकावृतूऽअग्नेरन्तःश्लेषोसि कल्पेतान्द्या
वापृथिवी कल्पन्तामापऽओषधयः कल्पन्तामग्नयः पृथङ्म

मुञ्ज्यैष्ठ्यायसव्व्रताः॥ येऽअग्नयः समनसोन्तुराद्यावांपृथिवीऽ इमे ॥ हैमन्तिकावृतूऽअंभिकल्प्पंमानाऽइन्द्रंमिवदुवाऽअंभि संविंशन्तुतयादुवतंयाङ्गिंरस्वद्ध्रुवेसींदतम् ॥२७॥ [४-७] एकं यास्तुवत । प्प्रुजाऽअंधीयन्तप्प्रुजापंतिरधिंपतिरासीत्तिसृभिर स्तुवतब्ब्रह्मांसृज्ज्यतब्ब्रह्मंणस्प्पातिरधिंपतिरासीत्पञ्चभिंरस्तु वतभूतान्यंसृज्ज्यन्तभूतानाम्पतिरधिंपतिरासीत्सप्प्ताभिंरस्तु

१ तिसृभि । अत्र "भाविभ्य स प समानपदे" (शु.य.प्रा ३ अ ५६ सू ) इत्यनेन पत्वप्राप्तौ "ऋकाररेफारुदयश्च" (शु य प्रा. ३ अ ८३ सू ) इत्यनेन यत्र ऋकारोदय , रेफोदय , अरुदयश्च सकारस्तत्र प्रकृत्या स्यातेनात्र रास्य ऋकारोदयत्वान्न पत्वम् ।

वतसप्तऽऋषयोसृज्यन्तधाताधिपतिरासीन्नवभिरस्तुवत
॥२८॥ नवभिरस्तुवत। पितरोसृज्यन्तादितिराधिपत्न्यासीदे
कादशभिरस्तुवतऽऋतवोसृज्यन्तार्तवाऽआधिपतयऽआसँस्त्र
योदशभिरस्तुवतमासांऽअसृज्यन्तसंवत्सरोधिपतिरासीत्प
ञ्चदशभिरस्तुवतक्षत्रमसृज्यतेन्द्रोधिपतिरासीत्सप्तदशभि
रस्तुवतग्राम्याःपशवोसृज्यन्तबृहस्पतिराधिपतिरासीन्नव
दशभिरस्तुवत॥२९॥नवदशभिरस्तुवत।शूद्रार्यावसृज्येता

महोरात्रेऽअधिपत्नीऽआस्त्तामेकांविᳬंशत्त्यास्तुवतैकशफाः
पशवोसृज्ज्यन्तवरुणोधिपतिरासीत्त्रयोविᳬंशत्त्यास्तुवतक्क्षु
द्राः पशवोसृज्ज्यन्तपूषाधिपतिरासीत्त्पञ्चविᳬंशत्त्यास्तुवतार
ण्ण्याः पशवोसृज्ज्यन्तवायुरधिपतिरासीत्त्सप्तविᳬंशत्त्यास्तुव
तद्यावापृथिवीव्यैतांव्वसवोरुद्राऽआदित्त्याऽअनुव्यायँस्तऽए
वाधिपतयऽआसन्नवविᳬंशत्त्यास्तुवत॥३०॥ नवविᳬंशत्त्या
स्तुवत ॥ नवविᳬंशत्त्यास्तुवतव्वनस्पतयोसृज्ज्यन्तसोमोधि

पतिरासीदेकंत्रिꣳशतास्तुवतप्प्रजाऽअंसृज्ज्यन्तयवाश्चायंवा
श्चाधिपतयऽआसँस्त्रयंस्त्रिꣳशतास्तुवतभूतान्यंशाम्म्यन्प्रजा
पंतिꣳपरमेष्ठ्यधिंपतिरासील्लोकन्ताऽइन्द्रंम् ॥ ३१ ॥ [ ४-८ ]
इतिश्रीवाजसनेयसंहितायांचतुर्दशोऽध्यायः ॥ १४ ॥ श्रीवेद
पुरुषायनमः ॥ अनुवाकसूत्रम् ॥ अग्नेजातान्पञ्च,रश्मिना
सत्यायचतस्रो,राड्यसिपञ्चा,यंपुरःपञ्चा,ग्निर्मूर्द्धैकोनत्रिꣳश, ॥ १४६ ॥

१ अध्याय. १२-लोकपृण १-ताऽअस्य २ । इन्द्रविश्वाः ३ इति प्रतीकानि ॥
॥ मन्त्रः ॥ ५४ ५५ ५६

ह्येनऽऋषयोष्टौ,तपश्चनव,सप्त पञ्चषष्टिः ॥ [अ. १५ मं. ६५
अनु. ७] ॥ हरिः ॐ ॥ अग्नेजातान् ॥ अग्नेजातान्प्रणुदा[1]
नꣳसपत्नान्प्रत्यजातान्नुदजातवेदः ॥ अधिनोब्रूहिसुमनाऽअ
हेडँस्तवस्यामꣳशर्म्मँस्त्रिवरूथऽउद्भौ ॥१॥ सहंसाजातान् ॥ सहं
साजातान्प्रणुदानꣳसपत्नान्प्रत्यजाताञ्जातवेदोनुदस्व॥अधि
नोब्रूहिसुमनस्यमानोव्वयꣳस्यामप्रणुदानꣳसपत्नान् ॥ २ ॥

१ प्रणुदान । अत्र प्रनुदान इति पदम् । अत्र समानपदत्वाभावेन "ऋषरेभ्य" इत्यनेन णत्वाप्राप्तौ "प्रनेतिनुदातिहिनोमीनाम्" ( शु य प्रा ३ अ. ८९ सू ) इत्यनेन प्रशब्दात्परे स्थितानामेतेषा नकारस्य णत्वविधानादत्र णत्वम् । तथा चात्र प्रनुद न. दकारोत्तरवर्तिन ह्रस्वाकारस्य नकारे परे "धारयोव०" (शु य प्रा ३ अ १०८ सू ) इत्यनेन दीर्घाकार ।

षोडशीस्तोमः ॥ षोडशीस्तोमऽओजोद्द्रविणञ्चतुश्चत्वारिᳬ
शस्तोमोवर्चोद्द्रविणम् ॥ अग्नेःपुरीषमस्यप्सोनामतान्त्वा
व्विश्वेऽअभिगृणन्तुदेवाः ॥ स्तोमपृष्ठाघृतवतीहसीदप्रजावं
दस्मेद्द्रविणायंजस्व ॥ ३ ॥ एवश्छन्दः ॥ एवश्छन्दो
व्वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्दऽआच्छच्छन्दो
मनश्छन्दोव्यचश्छन्दः सिन्धुश्छन्दः समुद्रश्छन्दः स
रिरञ्छन्दः ककुप्छन्दस्त्रिककुप्छन्दः काव्यञ्छन्दोऽअङ्कुप

ञ्छन्दोक्षरंपङ्क्तिश्छन्दः पदपङ्क्तिश्छन्दोविष्टारपङ्क्तिश्छ
न्दः क्षुरोभ्रजश्छन्दऽआच्छच्छन्दः प्रच्छच्छन्दः ॥ ४ ॥
आच्छच्छन्दः प्रच्छच्छन्दः । संयच्छन्दोवियच्छन्दोबृ
हच्छन्दोरथन्तरञ्छन्दोनिकायश्छन्दोविवधश्छन्दोगिर
श्छन्दोभ्रजश्छन्दः सꣳस्तुप्छन्दोनुष्टुप्छन्दऽएवश्छ
न्दोवरिवश्छन्दोवयश्छन्दोवयस्कृच्छन्दोविष्पर्द्धाश्छ
न्दोविशालञ्छन्दश्छदिश्छन्दोदूरोहणञ्छन्दस्तन्द्रञ्छ

न्दौऽअङ्गाङ्गञ्छन्दः ॥ ५ ॥ [ ५-१ ] रश्मिनासत्त्या
यं । सत्त्यञ्जिन्वप्प्रेतिनाधर्म्मणाधर्म्मञ्जिन्वान्वित्त्यादिवादि
वञ्जिन्वसन्धिनान्तरिक्षेणान्तरिक्षञ्जिन्वप्प्रतिधिनापृथि
व्यापृथिवीञ्जिन्वविष्टम्भेनवृष्ट्यावृष्टिञ्जिन्वप्प्रवयाह्नाहर्ज्जि
न्वानुयारात्र्यारात्रीञ्जिन्वोशिजावसुब्भ्योवसूञ्जिन्वप्प्रकेते
नादित्त्येब्भ्यऽआदित्त्याञ्जिन्वतन्तुंनारायः ॥ ६ ॥ तन्तुं
नारायः ॥ तन्तुंनारायस्प्पोषेण … ञ्जिन्वसᳬसर्प्पेणश्रु

तायंश्रुतज्ञिन्वैडेनौषधीभिरोषधीर्ज्जिन्वोत्तमेनतनूभिस्तनू
र्ज्जिन्ववयोधसाधीतेनाधीतज्ञिन्वाभिजितातेजसातेजोजिन्व
॥ ७ ॥ प्रतिपदसि । प्रातिपदेत्त्वानुपदस्यनुपदेत्त्वासम्पद
सिसम्पदेत्त्वातेजोसितेजसेत्त्वात्त्रिवृदसि ॥ ८ ॥ त्रिवृद
सि । त्रिवृतेत्त्वाप्रवृदसिप्रवृतेत्त्वाविवृदसिविवृतेत्त्वासवृदसि
सवृतेत्त्वाक्रमोस्याक्रमायत्त्वासङ्क्रमोसिसङ्क्रमायत्त्वोत्क्रमोस्यु
त्क्रमायत्त्वोत्क्रान्तिरस्युत्क्रान्त्यैत्त्वाधिपतिनोर्ज्जोर्ज्जञ्जिन्व

॥ ९ ॥ [४-२] राज्ञ्यसि ॥ राज्ञ्यसि प्राची दिग्वसवस्ते
देवा अधिपतयोऽग्निर्हेतीनां प्रतिधर्त्ता त्रिवृत्त्वा स्तोमः पृथि
व्या श्रयत्वाज्यमुक्थमव्यथायै स्तभ्नातु रथन्तर साम
प्रतिष्ठित्या अन्तरिक्ष ऋषयस्त्वा प्रथमजा देवेषु दिवो मा
त्रया वरिम्णा प्रथन्तु विधर्त्ता चायमधिपतिश्च ते त्वा सर्वे संवि
दाना नाकस्य पृष्ठे स्वर्गे लोके यजमानं च सादयन्तु ॥ १० ॥ विरा ॥१४९॥
डसि ॥ विराडसि दक्षिणा दिग्रुद्रास्ते देवा अधिपतय इन्द्रो

हेतीनाम्प्रतिधर्त्ता पञ्चदशस्त्त्वास्त्तोम÷पृथिव्व्याꣳश्रयतुप्प्रऽ
उगमुक्थमव्व्यथायैस्त्तब्भ्नातुबृहत्त्सामप्प्रतिष्ठित्त्याऽअन्तरि
क्षऽऋषयस्त्त्वाप्प्रथमजादेवेषुदिवोमात्त्रयाव्वरिम्म्णाप्प्रथन्तु
विधर्त्ताचायमधिपतिश्चतेत्त्वासर्व्वेसंविदानानाकस्यपृष्ठेस्वर्ग्गे
लोकेयजमानञ्चसादयन्तु ॥ ११ ॥ सम्म्राडसि । प्प्रतीची
दिगादित्त्यास्त्तेदेवाऽअधिपतयोव्वरुणोहेतीनाम्प्रतिधर्त्तासप्त
दशस्त्त्वास्त्तोम÷पृथिव्व्याꣳश्रयतुमरुत्त्वतीयमुक्थमव्व्य

थायैस्त्तब्भ्रातुवैरूपꣳसामुप्प्रतिष्ठित्त्याऽअन्तरिक्क्षुऽऋषय
स्त्त्वाप्प्रथमुजादेवेषुदिवोमात्त्रंयाव्वरिम्म्णाप्प्रंथन्तुव्विधुर्त्ताच्चा
यमधिपतिश्च्चतेत्त्वासव्र्वेसंविदानानाकंस्यपृष्ठेस्वुर्गेलोकेयजंमा
नञ्चसादयन्तु ॥१२॥ स्वराडसि ॥ स्वराडस्युदींचीदिङ्मरुतंस्त्ते
देवाऽअधिपतयुꣳसोमोहेतीनाम्प्रतिधुर्त्तैकविꣳशस्त्त्वास्त्तो
मंः पृथिव्याꣳश्रंयतुनिष्क्केवल्यमुक्थमव्यंथायैस्त्तब्भ्रातुवैरा
जꣳसामुप्प्रतिष्ठित्त्याऽअन्तरिक्क्षुऽऋषंयस्त्त्वाप्प्रथमुजादेवे

षुंदिवोमात्रंयावरिम्मणाप्प्रंथन्तुविधुर्त्ताचायमधिंपतिश्चतेत्त्वा
सर्वैसंविदानानाकंस्यपृष्ठेस्वुर्गेलोकेयजंमानञ्चसादयन्तु ।१३।
अधिंपत्न्यसि। बृहतीदिग्विश्वेतेदेवाऽअधिंपतयोबृहुस्प्पतिर्हे
तीनाम्प्रंतिधुर्त्तात्रिंणवत्रयस्त्रिंशौत्त्वास्तोमौपृथिव्यांश्रय
तांवैश्वदेवाग्निमारुतेऽउक्थेऽअव्यंथायैस्तभ्नीतांशाक्वररै
वतेसामंनीप्प्रतिंष्ठित्त्याऽअन्तरिंक्षऽऋषंयस्त्वाप्प्रथमजादेवे
२८ षुंदिवोमात्रंयावरिम्मणाप्प्रंथन्तुविधुर्त्ताचायमधिंपतिश्चतेत्त्वा

सर्व्वैसंविदानानाकस्यपृष्ठेस्वुर्ग्गेलोकेयजमानञ्चसादयन्तु ।१४।
[ ५-३ ] अयम्पुरः ॥ अयम्पुरोहरिकेशः सूर्य्यरश्मिस्तस्य
रथगृत्सश्चरथौजाश्चसेनानीग्ग्रामण्यौ ॥ पुञ्जिकस्थलाचक्र
तुस्थलाचाप्सरसौदङ्क्ष्णवःपशवोहेतिःपौरुषेयोव्वधःप्प्रहेति
स्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्च
नोद्वेष्टितमेषाञ्जम्भेदद्ध्मः ॥१५॥अयन्दक्षिणा।विश्वकर्म्मा
तस्यरथस्वनश्चरथेचित्रश्चसेनानीग्ग्रामण्यौ ॥ मेनकाचसहज

न्याचाप्सरसौयातुधानाहेतीरक्षाᳬंसिप्प्रहेतिस्तेभ्योन
मोऽअस्तुतेनोऽवन्तुतेनोमृडयन्तुतेयन्द्विष्ष्मोयश्चनोद्वेष्टितमे
षाञ्जम्भेदद्ध्मः ॥ १६ ॥ अयम्पश्चात् ॥ अयम्पश्चाद्विश्वव्य
चास्तस्यरथप्प्रोतश्चासमरथश्चसेनानीग्ग्रामण्यौ ॥ प्रम्लो
चन्तीचानुम्म्लोचन्तीचाप्सरसौव्याग्घ्राहेतिःसर्प्पाःप्प्रहेति
स्तेभ्योनमोऽअस्तुतेनोऽवन्तुतेनोमृडयन्तुतेयन्द्विष्ष्मोयश्च
नोद्वेष्टितमेषाञ्जम्भेदद्ध्मः ॥ १७ ॥ अयमुत्तरात् ॥ अयमु

त्तरात्सँऽयद्द्वसुस्तस्यतार्क्ष्यश्चारिष्टनेमिश्चसेनानीग्ग्रामु
ण्यौ ॥ विश्वाचीचघृताचीचाप्सरसावापोहेतिर्व्वातः प्प्रहेति
स्तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्च
नोद्वेष्टितमेषाञ्जम्भेदध्मः ॥१८॥ अयमुपरि ॥ अयमुपर्य्यर्व्वा
ग्ग्वसुस्तस्यसेनजिच्चसुषेणश्चसेनानीग्ग्रामण्यौ ॥ उर्व्वशीचपू
र्व्वचित्तिश्चाप्सरसावव्वस्फूर्ज्जन्हेतिर्व्विद्युत्प्प्रहेतिस्तेब्भ्योनमोऽ
अस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषा

ज्ञम्भैदद्ध्मः ॥ १९ ॥ [५-४] अुग्निर्म्मूर्द्धा । दिुवःक्कुकु
त्त्पतिः÷पृथिुव्व्याऽअयम् ॥ अपाꣳरेताꣳसिजिन्न्वति ॥ २० ॥
अुयमुग्निः । संहुस्रिणोव्वाजंस्यशुतिनुस्प्पतिं÷ ॥ मूुर्द्धाकुवी
रेयीुणाम् ॥ २१ ॥ त्वामंग्ग्ने ॥ त्वामंग्ग्नेपुष्क्करुादुद्ध्यर्थंर्व्वानिर
मन्थत ॥ मूुर्द्धोविश्श्वंस्यव्वाुघतं÷ ॥ २२ ॥ भुवोयुज्ञस्यं ॥ भुवोयु
ज्ञस्युरजंसश्चनेुतायत्रांनिुयुद्भिःसचंसेशिुवाभिं÷ ॥ दिुविमूुर्द्धा
नंन्दधिषेस्वुर्षांजिह्वामंग्ग्नेचक्कृषेहव्व्युवाहंम् ॥ २३ ॥ अबोध्द्यु

ग्निः । समिधाजनानाम्प्रतिधेनुमिवायतीमुषासम् ॥ यह्वाऽ
इवप्प्रवयामुज्जिहानाः प्प्रभानवः सिस्रतेनाकमच्छ ॥ २४ ॥
अवोचामकवये ॥ अवोचामकवयेमेद्ध्यायवचोवन्दारुवृषभा
यवृष्णे ॥ गविष्ठिरोनमसास्तोममग्नौदिवीवरुक्ममुरुव्यञ्च
मश्रेत् ॥ २५ ॥ अयमिह । प्प्रथमोधायिधातृभिर्होतायजि
ष्ठोऽअद्ध्वरेष्वीड्यः ॥ यमप्प्नवानोभृगवोविरुरुचुर्व्वनेषुचित्रं

१ धेनुमिवायतीमुषासम् । अत्र ईम्‌शब्दात्परस्थ उपशब्दस्य कारस्य "उपमहोभिर्नकेमी०" ( शु. य. प्रा. ३ अ. ११८ सू. ) इत्यनेन दीर्घः ।

व्विश्वंव्विशेविंशे ॥ २६ ॥ जनंस्यगोपाः ॥ जनंस्यगोपाऽअं
जनिष्टुजागृंविरुग्निःसुदक्षःसुविताय्नव्यंसे ॥ घृतप्रंतीको
बृहुतादिंविस्पृशांद्युमाद्विभांतिभरतेब्भ्युःशुचिः ॥ २७ ॥
त्वामंग्ने ॥ त्वामंग्नेऽअङ्गिरसोगुहांहितमन्ववंविन्दञ्छिश्रि
याणंव्वनेंवने ॥ [2]संजांयसेमथ्यमांनुःसहोंमहत्त्वामांहुःसहंस

१ दिविस्पृशा । अत्र "भाविभ्य स प समानपदे" इत्यनेन प्राप्तस्य षत्वस्य अनुसतनोतुन्बृहस्पतिसुतस्यसुसमिद्धायसुसन्दृशमभिसत्त्वाऽभिसविशन्तुसुसस्याऽअतिस्थूलम्मुसलेपत्क्वीसषाजानूकतुस्थलाजिसक्थो दिविस्पृशा०" (शु य प्रा ३ अ. ८२ सू ) इत्यनेन प्रकृतिभावे षत्वनिषेध । २ स जायसे । अत्र "व्यञ्जने च" (शु. य प्रा. ३ अ १६ सू ) इत्यनेन जायसे परे स इत्यस्य विसर्जनीयस्य लोपे सजायसे इति पदम् ।

स्प्पुत्रमङ्गिरः ॥ २८ ॥ सखायुःसम् ॥ सखायुःसंवंःसुम्म्यम्
मिषुंस्तोमंम्माग्नये ॥ वर्षिष्ठायक्क्षितीनामूर्ज्जोनप्त्रेसहस्व
ते ॥ २९ ॥ सुऽसमित् ॥ सऽसमिद्युंवसेवृषन्नग्नेविश्श्वान्यर्य्य
ऽआ ॥ इडस्प्पदेसमिध्यसेसनोव्वसून्याभर ॥ ३० ॥ त्वाम्चि
त्रश्श्रवस्त्तम ॥ त्वाम्चित्रश्श्रवस्त्तमहवन्तेविक्क्षुजन्तवः ॥
शोचिष्क्केशम्पुरुप्प्रियाग्नेहव्व्यायव्वोढवे ॥ ३१ ॥ एनावः ॥

1 इड पदे इति पदम् । अत्र "आविनिरिडहूडाया वसतिर्वीरेव" (शु य. प्रा ३ अ. २३ सू ) इत्यनेन विसर्जनीयस्य ककारपकारपरयो. सकार-पकारश्च यथायोग विधीयते । इडस्प्पदे इति रूपम् ।

एनावोऽअग्निन्नमसोर्ज्जोनपातमाहुवे ॥ प्रियञ्चेतिष्ठमरतिꣳ स्वध्वरंव्विश्वस्यदूतममृतम् ॥ ३२ ॥ व्विश्वस्यदूतम् ॥ व्विश्वस्य दूतममृतंव्विश्वस्यदूतममृतम् ॥ सयोजतेऽअरुषाव्विश्वभोजसा सदुद्रवत्स्वाहुतꣳ ॥ ३३ ॥ सदुद्रवत् ॥ सदुद्रवत्स्वाहुतꣳसदुद्र वत्स्वाहुतꣳ ॥ सुब्रह्मायज्ञःसुशमीव्वसूनान्देवꣳराधोजनाना म् ॥ ३४ ॥ अग्नेव्वाजस्य ॥ अग्नेव्वाजस्यगोमतऽईशानꣳसहसो यहो ॥ अस्मेधेहिजातवेदोमहिश्रवः ॥ ३५ ॥ सऽइधानः ॥

सऽइंधानोव्वंसुष्क्कविरग्निरीडेन्न्योगिरा ॥ रेवदुस्म्मब्भ्यम्पुर्व्वणी
कदीदिहि ॥ ३६ ॥ क्षपोराजन् ॥ क्षपोराजन्नुतत्मनाग्नेवस्तो
रुतोषसं ॥ सतिग्ग्मजम्भरक्क्षसोदहुप्प्रति ॥ ३७ ॥ भद्रोनं ॥
भद्रोनोऽअग्निराहुतोभद्राराति꞉सुभगभद्रोऽअंद्धर꞉ ॥ भद्राऽ
उतप्प्रशंस्तयं ॥ ३८ ॥ भद्राऽउत । प्प्रशंस्त्तयोभद्रम्मनं
कृणुष्ष्ववृत्रतूर्य्ये ॥ येनासमत्त्सुसासहं ॥ ३९ ॥ येनासुम



---

१ वसुष्कवि. इति । "कविष्करत्कृधिषु" (शु य. प्रा. ३ अ. ३२ सू.) इत्यनेन कवि करत् कृधि. एतेषु परेषु विसर्जनीयस्य सकार. षकारश्च भवति । तेनात्र कवि परे पूर्वविसर्जनीयस्य षकारे कृते "ऊष्मान्तस्थाभ्यश्च स्पर्श." (शु. य. प्रा. ४ अ. १०२ सू.) इत्यनेन ककारस्य द्वित्वम् ।

त्त्सु । सासहोवंस्त्थरातंनुहिभूरिशर्द्धंताम् ॥ व्वनेमांतेऽअभि
ष्टिंभिः ॥ ४० ॥ अग्निन्तम् ॥ अग्निन्तम्मंन्न्येयोव्वसुरस्तँ
यँयन्तिधेनवं÷ ॥ अस्तमर्व्वन्तऽआशवोस्त्तन्नित्त्यासोव्वा
जिनऽइषंᳬस्तोतृभ्यऽआभंर ॥ ४१ ॥ सोऽअग्निः ॥ सोऽ
अग्निर्य्योव्वसुर्गृणेसँय्यमायन्तिधेनवं÷ ॥ समर्व्वन्तोरघु
द्रुवःसᳬसुजातासं÷सूरयऽइषंᳬस्तोतृभ्यऽआभंर ॥ ४२ ॥
उभेसुश्चन्द्र । सर्प्पिषोदर्व्वीश्श्रीणीषऽआसनिं ॥ उतोनऽउत्त्पु

१ सोऽअग्नि । अत्र "व्यञ्जने" च (शु य. प्रा. ३ अ. १७ सू) इति सूत्रे व्यञ्जने परे एव विसर्गस्य लोपविधानान्न लोपस्ततो विसर्गस्य रुत्वे

पूर्व्याऽउक्थेषुशवसस्पतऽइषᳬंस्तोतृभ्युऽआभर ॥ ४३ ॥
अग्नेतम् ॥ अग्नेतमद्याश्वन्नस्तोमैᳬक्रतुन्नभद्रᳯहृदिस्पृ
शंम् ॥ ऋध्यामातऽओहैᳬ ॥ ४४ ॥ अधाहि ॥ अधा
ह्यग्नेक्रतोर्भद्रस्यदक्षंस्यसाधोः ॥ रथीरृतस्यबृहतो
बभूथ ॥ ४५ ॥ एभिर्न्नः ॥ एभिर्न्नोऽअर्कैर्भवानोऽअर्व्वा
ङ्स्वर्ण्णज्ज्योतिः ॥ अग्नेव्विश्वेभिᳬसुमनाऽअनीकैᳬ ॥ ४६ ॥

ओर्त्वे सोऽअग्नि इति पदम् । २ सुश्चन्द्र । अत्र "चन्द्रेसु शकारेण' (शु य प्रा ३ अ ७४ सू.) इत्यनेन चन्द्रशब्दे परे सुशब्दः शकारेण व्यवधीयते । तत "ऊष्मान्तस्थाभ्यश्च" स्पर्शौ (शु. य. प्रा ४ अ. १०२ सू.) इत्यनेन चकारस्य द्वित्वम् ।

अग्निꣳहोतारम् ॥ अग्निꣳहोतारम्मन्येदास्वन्तंवसुꣳसूनुꣳ
सहसोजातवेदसंविप्रन्नजातवेदसम् ॥ यऽऊर्द्ध्वयास्वध्वरोदेवो
देवाच्यांकृपा ॥ घृतस्यविभ्राष्टिमनुवष्टिशोचिषाजुह्वानस्य
सर्प्पिषः ॥ ४७ ॥ अग्नेत्त्वम् ॥ अग्नेत्त्वन्नोऽअन्तमऽउत
त्राताशिवोभवावरूत्थ्यः ॥ वसुरग्निर्वसुश्श्रवाऽअच्छानक्षि
द्युमत्तमꣳरयिन्दाः ॥ तन्त्वाशोचिष्ठदीदिवःसुम्नायनूनमी
महेसखिभ्यः ॥४८॥ [२९-५] येनऽऋषयः ॥ येनऽऋषय

स्त्तपंसासुत्रमायन्निन्धानाऽअग्निꣳस्वंराभरन्तः ॥ तस्मिन्न
हन्निदंधेनाकेंऽअग्निँऽयमाहुर्म्मनंवस्त्तीर्णबर्हिषम् ॥ ४९ ॥
तम्पत्नीभिः ॥ तम्पत्नीभिरनुंगच्छेमदेवाःपुत्रैर्भ्रातृंभिरुत
वाहिरंण्यैः ॥ नाकंङ्गृभ्णानाःसुंकृतस्यंलोकेतृतीयेंपृष्ठेऽअधि
रोचनेदिवः ॥ ५० ॥ आवाचः ॥ आवाचोमध्यंमरुहद्भुर
ण्युरयमग्निःसत्त्पंतिश्चेकितानः ॥ पृष्ठेपृथिव्यानिहितोदवि
द्युतदस्प्पदङ्कृणुताँऽयेपृंतन्न्यवंः ॥ ५१ ॥ अयमग्निः ॥

अयमग्निर्व्वीरतमोव्वयोधाःसहस्रियोद्द्योततामप्प्रयुच्छन्॥ व्वि
ब्भ्राजमानꣳसरिरस्यमद्ध्यऽउपप्प्रयाहिदिव्व्यानिधाम ॥ ५२ ॥
सम्प्रच्यवद्ध्वमुप। सप्प्रयाताग्नेपथोदेवयानान्कृणुद्ध्वम्॥ पुनः
कृण्वानापितरायुवानान्वाताꣳसीत्त्वयितन्तुमेतम् ॥ ५३ ॥
उद्बुध्यस्व॥ उद्बुध्यस्वाग्नेप्प्रतिजागृहित्वमिष्टापूर्त्तेसꣳसृजेथा
मयञ्च॥ अस्मिन्त्सधस्त्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवायजमा
नश्चसीदत ॥ ५४ ॥ येनव्वहसि । सहस्रँय्येनाग्नेसर्व्ववेद

सम् ॥ तेनेमँऽयज्ञन्नोनयस्वर्द्देवेषुगन्तवे ॥ ५५ ॥ अयन्ते ॥
अयन्तेयोनिर्ऋत्त्वियोयतोजातोऽअरोचथाः ॥ तञ्जानन्न
ग्नऽआरोहाथानोवर्द्धयारयिम् ॥ ५६ ॥ [ ८-६ ] तपश्च ॥
तपश्चतपस्यश्चशैशिरावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्या
वापृथिवीकल्पन्तामापऽओषधयःकल्पन्तामग्नयःपृथङ्म
मज्ज्यैष्ठ्यायसव्रताः॥येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽ
इमे ॥ शैशिरावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसं

विशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ५७ ॥ परमेष्ठी
त्वां । सादयतुदिवस्पृष्ठेज्ज्योतिष्मतीम् ॥ विश्वस्मैप्प्राणा
यापानायव्यानायविश्वञ्ज्योतिर्य्यच्छ ॥ सूर्य्यस्तेधिपतिस्त
यादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ ५८ ॥ लोकम्पृण । च्छिद्रम्पृ
णाथोसीदद्ध्रुवात्त्वम् ॥ इन्द्राग्नीत्त्वाबृहस्पतिरस्मिन्न्योना
वसीषदन् ॥ ५९ ॥ ताऽअस्य ॥ ताऽअस्यसूददोहसꣳसोमꣳ

१ दिवस्पृष्ठे । इत्यत्र "दिवोऽककुत्पृथिव्यो." (शु य. प्रा. ३ अ २४ सू ) इत्यनेन दिव सम्बन्धिन. विसर्गस्य षकारत्वम् ।

श्रीणन्तिपृश्नंयः ॥ जन्मन्देवानांविशस्त्रिष्वारोचनेदिवः
॥ ६० ॥ इन्द्रंविश्वाः÷ ॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्रव्यंच
सङ्गिरः÷ ॥ रथीतमꣳरथीनांवाजानाꣳसत्पतिम्पतिम् ॥ ६१ ॥
प्रोथदश्वः÷ ॥ प्रोथदश्वोनयवसेविष्ष्यन्न्यदामहः संवरणाद्व्य
स्त्थात् ॥ आदस्यवातोऽअनुवातिशोचिरधस्म्मतेव्व्रजनङ्कृष्णम्
मस्ति ॥ ६२ ॥ आयोष्ट्वा ॥ आयोष्ट्वासदनेसादयाम्म्यवत
श्छायायाꣳसमुद्रस्यहृदये ॥ रश्मीवतीम्भास्वतीमायाद्या

म्मास्यापृथिवीमोर्व्वन्तरिक्क्षम् ॥ ६३॥ परमेष्ठीत्त्वां । सादय
तुदिवस्पृष्ठेव्व्यचस्वतीम्प्रथस्वतीन्दिवँय्यच्छदिवन्दृꣳहदिव
म्माहिꣳसीः ॥ व्विश्वस्म्मैप्प्राणायापानायव्व्यानायोदानाय
प्प्रतिष्ठायैचरित्राय ॥ सूर्य्यस्त्वाभिपातुमह्यास्वस्त्याच्छर्दि
षाशन्तमेनतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ६४ ॥ सहस्र
स्यप्प्रमासि । सहस्रस्यप्प्रतिमासिसहस्रस्योन्मासिसाहस्रोसि
सहस्रायत्त्वा ॥ ६५ ॥ [१-७] इतिश्रीवाजसनेयसंहितायां

पञ्चदशोऽध्यायः ॥ १५ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक-
सूत्रम् ॥ नमस्तेषोडश, हिरण्यबाहव, ऽउष्णीषिणे, तक्षभ्यो,
ज्येष्ठायपञ्चकाः, स्रुत्यायचतस्रः, शंभवायैका, पार्य्यायपञ्च,
द्रापेऽअंधसोविंᳪशति, र्नवषट्षष्टिः [अ. १६ मं. ६६ अनु.
९]॥ हरिः ॐ॥ नमस्ते ॥ नमस्ते[1]रुद्रमन्यवऽउतोतऽइषवेन
मः ॥ बाहुभ्यामुततेनमः ॥ १ ॥ याते । रुद्रशिवातनूरघो

१ नमस्ते । इत्यत्र "तथयो सम्" (शु य प्रा ३ अ ८सू) इत्यने मकारोत्तरवर्तिनो विसर्जनीयस्य तकारे परे सकारे कृते नमस्ते इति सिद्ध्यति ।

रापांपकाशिनी ॥ तयांनस्तन्वाशन्तंमयागिरिंशन्ताभिचाक
शीहि ॥२॥ यामिषुंम् ॥ यामिषुङ्गिरिशन्तहस्तेबिभर्ष्यस्तंवे ॥
शिवाङ्गिरित्रताङ्कुरुमाहिंᳩसीःपुरुषञ्जगंत् ॥ ३ ॥ शिवेनव
चंसा । त्वागिरिशाच्छांवदामसि ॥ यथांनःसर्वमिज्जगदय
क्ष्मᳩसुमनाऽअसंत् ॥ ४ ॥ अद्ध्यंवोचत् ॥ अद्ध्यंवोचदधिव
क्ताप्प्रथमोदैव्योंभिषक् ॥ अहीँश्चसर्वाञ्जम्भयन्त्सर्वाश्चयातु

१ अहीन् च। इत्यत्र "चच्छयो शम्" (शु. य प्रा. ३ अ १३५ सू.) इत्यनेन नकारस्य चछयोः परयो शकार विधीयते उपधायामनुनासिकमपि। तथा अहीँश्च इति कृते "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु य.प्रा ४ अ. १०२ सू.) इत्यनेन चकारस्य द्वित्वम्।

धान्व्योधराचीऽंपरासुव ॥ ५ ॥ असौयः ॥ असौयस्ताम्म्रोऽ
अरुणऽउतबब्भ्रुःसुमङ्गलः ॥ येचैनᳬरुद्द्राऽअभितोदिक्क्षु[1]
श्रिताःसंहस्रशोवैषाᳬंहेडऽईमहे ॥ ६ ॥ असौयः ॥ असौयो
वसर्प्पतिनीलंग्ग्रीवोव्विलोहितः ॥ उतैनङ्गोपाऽअदृश्श्रन्नदृश्श्र
न्नुदहार्य्यःसदृष्टोमृडयातिनः ॥ ७ ॥ नमोस्त्तु ॥ नमोस्त्तु
नीलंग्ग्रीवायसहस्राक्क्षायमीढुषे॥अथोयेऽअस्यसत्वानोहन्त्ते ॥१६१॥

१ दिक्षुश्रिता । अत्र दिक्षु इति पदम् । "करेफाभ्याञ्च" (शु य प्रा ३ अ ५८ सू.) इत्यनेन करेफाभ्यां सरस्य षकारस्य षत्व विधीयते । तेनात्र सकारस्य षत्वे कषसंयोगे क्ष. इति क्षत्वे रूपम् । "स्वरात्संयोगादिर्द्विरुच्यते सर्वत्र" (शु. य प्रा ४ अ. १०० सू ) इत्यनेन शकारस्य द्वित्वम् ।

ब्भ्यौंकरन्नमं÷ ॥ ८ ॥ प्रमुंञ्च ॥ प्रमुंञ्चधन्वंनुस्त्वमुभयो
रात्न्यौंर्ज्ज्यांम् ॥ याश्चंतेहस्त्तऽइषंवःपरातांभंगवोव्वप ॥ ९ ॥
व्विज्ज्यन्धनुं÷कपर्द्दिनोव्विशंल्ल्योबाणंवाँ२॥ऽउत ॥ अनेंश
न्नस्ययाऽइषंवऽआभुरंस्यनिषङ्गधिः ॥ १० ॥ यातें । हेति
र्म्मींढुष्टमहस्त्तेंबभूवंतेधनुं÷ ॥ तयास्म्मान्विश्वतस्त्वमंय
क्ष्मयापरिंभुज ॥ ११ ॥ परिंते ॥ परिंतेधन्वंनोहेतिरस्म्मा
न्वृंणक्तुविश्वतं÷ ॥ अथोयऽइंषुधिस्त्तवारेऽअस्म्मन्निधेंहि

तम् ॥ १२॥ अवतत्त्यधनुं÷ ॥ अवतत्त्यधनुष्ट्वᳯसहस्राक्षशत
तेषुधे ॥ निशीर्र्य्यशुल्ल्यानाम्मुखांशिवोनं÷सुमनांभव ॥ १३ ॥
नमंस्ते ॥ नमंस्तऽआयुंधायानांततायधृष्ण्णवे ॥ उभा
भ्यांमुततेनमोंबाहुभ्यान्तवधन्न्वंने ॥ १४ ॥ मानं÷ ॥
मानोंमुहान्तंमुतमानोंऽअर्ब्भंकम्मानुऽउक्क्षंन्तमुतमानंऽउ
क्क्षितम् ॥ मानोंवधीᳪपितरम्मोतमातरम्मानं÷प्प्रियास्तन्न्वो
रुद्ररीरिषᳪ ॥ १५ ॥ मानंस्तोके । तनंयेमानुऽआयुंषिमानो

गोषुमानोऽअश्वेषुरीरिषः ॥ मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्तःसदुमित्त्वाहवामहे ॥ १६ ॥ [१६-१] शतम् ॥ ८०० ॥ नमोहिरण्यबाहवे ॥ सेनान्न्येदिशाञ्चपतयेनमोनमोवृक्षेभ्योहरिकेशेभ्यःपशूनाम्पतयेनमोनमः शष्पिञ्जरायत्त्विषीमतेपथीनाम्पतयेनमोनमोहरिकेशायोपवीतिनेपुष्टानाम्पतयेनमोनमोबभ्लुशाय ॥ १७ ॥ नमोबभ्लुशाय । व्याधिनेन्नानाम्पतयेनमोनमोभवस्यहेत्यैजगताम्पतये

१ त्विषिमते । अत्र शृणुतत्विषिभ्रजिभवतपिनेतस्मतिष्ठरक्षा मकारे ( शु. य प्रा. ३ अ ११७ सू. ) इत्यनेन मकारे परे एते दीर्घा भवन्ति ।

येनमोनमोरुद्रायाततायिनेक्षेत्राणाम्पतयेनमोनमःसूताया
हन्त्यैवनानाम्पतयेनमोनमोरोहिताय ॥ १८ ॥ नमोरोहि
ताय । स्थपतयेवृक्षाणाम्पतयेनमोनमोभुवन्तयेवारिवस्कृ
तायौषधीनाम्पतयेनमोनमोमन्त्रिणेवाणिजायकक्षाणाम्पत
येनमोनमऽउच्चैर्घोषायाक्रन्दयतेपत्तीनाम्पतयेनमोनमः
कृत्स्नायतया ॥ १९ ॥ नमःकृत्स्नायतया । धावतेसत्त्व
नाम्पतयेनमोनमःसहमानायनिव्याधिनऽआव्याधिनीनाम्प

तंयेनमोनमोंनिषङ्गिणेंककुभायंस्तेनानाम्पतंयेनमोनमोंनि
चेरवेंपरिचरायारंण्ण्यानाम्पतंयेनमोनमोवञ्चंते ॥ २० ॥ नमो
वञ्चंते । परिवञ्चंतेस्तायूनाम्पतंयेनमोनमोंनिषङ्गिणंऽइषुधि
मतेतस्कंराणाम्पतंयेनमोनमंः सृकायिभ्योजिघांᳪसद्भ्यो
मुष्णताम्पतंयेनमोनमोंसिमद्भ्योनक्तञ्चरद्भ्योविकृन्ता
नाम्पतंयेनमंः ॥ २१ ॥ [ ५-२ ] नमंऽउष्णीषि
णें । गिरिचरायंकुलुञ्चानाम्पतंयेनमोनमंऽइषुमद्भ्योधन्वा

यिभ्यश्चवोनमोनमंऽआतन्वानेभ्यः प्रतिदधानेभ्यश्चवो
नमोनमंऽआयच्छद्भ्योस्यद्भ्यश्चवोनमोनमोविसृजद्
भ्यः ॥ २२ ॥ नमोविसृजद्भ्यो । विध्यद्भ्यश्चवो
नमोनमः स्वपद्भ्योजाग्रद्भ्यश्चवोनमोनमःशयानेभ्य
ऽआसीनेभ्यश्चवोनमोनमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमो
नमः सभाभ्यः ॥ २३ ॥ नमः सभाभ्यः । सभापति
भ्यश्चवोनमोनमोश्वेभ्योश्वपतिभ्यश्चवोनमोनमंऽआव्या

धिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नमऽउगणाभ्यस्तृꣳह
तीभ्यश्च वो नमो नमो गणेभ्यः ॥ २४ ॥ नमो गणेभ्यो ।
गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो न
मो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरू
पेभ्यश्च वो नमो नमः सेनाभ्यः ॥ २५ ॥ नमः सेनाभ्यः ।
सेनानिभ्यश्च वो नमो नमो रथिभ्योऽअरथेभ्यश्च वो नमो न
मः क्षत्तृभ्यः सङ्ग्रहीतृभ्यश्च वो नमो नमो महद्भ्योऽअर्भके

भ्यश्चवोनमः ॥ २६ ॥ [ ५-३ ] नमस्तक्षभ्यो ।
रथकारेभ्यश्चवोनमोनमः कुलालेभ्यः कर्मारेभ्यश्चवोनमो
नमोनिषादेभ्यः पुञ्जिष्ठेभ्यश्चवोनमोनमः श्वनिभ्योमृगयु
भ्यश्चवोनमोनमः श्वभ्यः ॥ २७ ॥ नमः श्वभ्यः ।
श्वपतिभ्यश्चवोनमोनमोभवायचरुद्रायचनमः शर्वायचपशु
पतयेचनमोनीलग्रीवायचशितिकण्ठायचनमः कपर्दिने
॥ २८ ॥ नमः कपर्दिने । चव्युप्तकेशायचनमः सहस्रा

क्षायंचशतधंन्वनेचनमोगिरिशायांयंचशिपिविष्टायचनमो
मीढुष्टंमायचेषुंमतेचनमोह्रस्वायं ॥ २९ ॥ नमोह्रस्वायं ।
चवामनायंचनमोबृहतेचवर्षीयसेचनमोवृद्धायंचसवृधेचन
मोग्र्यांयचप्रथमायंचनमंऽआशवें ॥ ३० ॥ नमंऽआ
शवें । चाजिरायंचनमःशीघ्र्यांयचशीभ्यांयचनमऽऊ
र्म्यांयचावस्वन्यायचनमोनादेयायंचद्वीप्यांयच ॥ ३१ ॥
[५-४] नमोज्येष्ठायं । चकनिष्ठायंचनमंःपूर्वजायंचापर

मोमेघ्यायचविद्युत्यायचनमोवर्ष्यायचावर्ष्यायचनमो
वात्त्याय ॥ ३८ ॥ नमोवात्त्याय । चरेष्म्यायचनमोवास्त
व्यायचवास्तुपायचनमःसोमायचरुद्रायचनमस्ताम्राय
चारुणायचनमःशङ्गवे ॥ ३९ ॥ नमःशङ्गवे । चपशुपत
येचनमऽउग्रायचभीमायचनमोग्रेवधायचदूरेवधायचन
मोहन्त्रेचहनीयसेचनमोवृक्षेभ्योहरिकेशेभ्योनमस्ताराय
॥ ४० ॥ [ ४-६ ] नमःशम्भवाय । चमयोभवायचनमःश

ङ्करायचमयस्करायचनमः शिवायचशिवतरायच ॥ ४१ ॥
[१-७] नमःपार्याय । चावार्यायचनमः प्रतरणायचोत्तरं
णायचनमस्तीर्थ्यायचकूल्यायचनमः शष्प्यायचफेन्याय
चनमः सिकत्याय ॥ ४२ ॥ नमः सिकत्याय । चप्रवाह्याय
चनमः किंशिलायचक्षयणायचनमः कपर्दिनेचपुलस्तये
चनमऽइरिण्यायचप्रपथ्यायचनमोव्रज्याय ॥ ४३ ॥ नमो
व्रज्याय । चगोष्ठ्यायचनमस्तल्प्यायचगेह्यायचनमोहृद

दय्यायचनिवेष्प्यायचनमःकाट्यायचगह्वरेष्ठायचनमःशु
ष्क्याय ॥ ४४ ॥ नमःशुष्क्याय । चहरित्यायचनमः
पाꣳसव्यायचरजस्यायचनमोलोप्यायचोलप्यायचनमऽ
ऊर्व्यायचसूर्व्यायचनमःपर्णाय ॥ ४५ ॥ नमःपर्णाय ।
चपर्णशदायचनमऽउद्गुरमाणायचाभिघ्नतेचनमऽआखिदते
चप्रखिदतेचनमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमोनमोव
ःकिरिकेभ्योदेवानाꣳहृदयेभ्योनमोविचिन्वत्केभ्योनमो

व्विक्क्षिणत्केभ्योनमंऽआनिर्हतेभ्यः ॥ ४६ ॥ [५-८]
द्द्रापेऽअन्धसं ॥ द्द्रापेऽअन्धसस्प्पतेदरिद्द्रनीलंलोहित ॥
आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनंः किञ्चनाममत् ॥ ४७ ॥ इमारुद्द्राय । तवसेकपर्द्दिनेक्क्षयद्वीरा
यप्प्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्प्पदेव्विश्वम्पुष्ट्ट
ङ्ग्रामेऽअस्म्मिन्ननातुरम् ॥ ४८ ॥ यातें । रुद्द्रशिवा
तनूः शिवाव्विश्वाहाभेषजी ॥ शिवारुतस्यभेषजीतयानोमृड

जीवसे ॥ ४९ ॥ परिनः ॥ परिनोरुद्रस्यहेतिर्वृणक्तुपरित्वेष
स्यंदुर्मुतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तो
कायतनयायमृड ॥ ५० ॥ मीढुष्टमशिवतम । शिवोनः सुम
नाभव ॥ परमेवृक्षऽआयुधन्निधायकृत्तिंवसानऽआचरपिनाकं
म्बिभ्रदागहि ॥ ५१ ॥ विकिरिद्रविलोहित ॥ विकिरिद्रवि
लोहितनमस्तेऽअस्तुभगवः ॥ यास्तेसहस्रंहेतयोन्यमस्म
न्निवपन्तुताः ॥ ५२ ॥ सहस्राणिसहस्रशः ॥ सहस्राणिसह

स्रशोबाह्वोस्तवहेतयः ॥ तासामीशानोभगवःपराचीनामु
खांकृधि ॥ ५३ ॥ असंख्यातासहस्राणि ॥ असंख्यातासह
स्राणियेरुद्राऽअधिभूम्याम् ॥ तेषाꣳसहस्रयोजनेवधन्वानि
तन्मसि ॥ ५४ ॥ अस्मिन्महति । अस्मिन्महत्यर्णवे
न्तरिक्षेभवाऽअधि ॥ तेषाꣳसहस्रयोजनेवधन्वानितन्मसि
॥ ५५ ॥ नीलग्रीवाःशितिकण्ठाः ॥ नीलग्रीवाःशितिकण्ठा
दिवꣳरुद्राऽउपश्रिताः ॥ तेषाꣳसहस्रयोजनेवधन्वानित

न्मसि ॥ ५६ ॥ नीलंग्ग्रीवाः꣡शितिकण्ठाः꣡ । शर्व्वाऽअधः
क्षमाचराः ॥ तेषा꣡ᳮसहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ५७ ॥
येवृक्षेषु । शष्पिञ्ञ्जरानीलंग्ग्रीवाव्विलोहिताः꣡ ॥ तेषा꣡ᳮसहस्र
योजनेवधन्न्वानितन्न्मसि ॥ ५८ ॥ येभूतानाम् ॥ येभूताना
मधिपतयोव्विशिखासः꣡कपर्द्दिनः ॥ तेषा꣡ᳮसहस्रयोजनेवध
न्न्वानितन्न्मसि ॥ ५९ ॥ येपथाम् ॥ येपथाम्पथिरक्षयऽऐलबृदाऽ
आयुर्य्युधः ॥ तेषा꣡ᳮसहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ६० ॥

येतीर्त्थानि । प्प्रुचरन्तिसृकाहंस्त्तानिषुङ्गिणं÷ ॥ तेषाᳫंसह
स्स्रयोजुनेवुधन्न्वानितन्न्मसि ॥ ६१ ॥ येन्नेषु । व्विविद्ध्यन्तिुपा
त्रेषुपिबतोुजनान् ॥ तेषाᳫंसहस्स्रयोजुनेवुधन्न्वानितन्न्मसि
॥ ६२ ॥ यऽएतावन्तः ॥ यऽएतावन्तश्चुभूयाᳫंसश्चुदिशो
रुद्राव्वितस्थ्थुरे॥तेषाᳫंसहस्स्रयोजुनेवुधन्न्वानितन्न्मसि॥६३॥
नमोस्तु । रुद्रेब्भ्योुयेदिुविर्येषांव्वुर्षमिषवः ॥ तेब्भ्योुदशुप्प्रा
चीुर्दशदक्षिुणादशप्प्रतीचीुर्दशोदीचीुर्दशोुर्द्ध्वाः ॥ तेब्भ्योुन्न

मोँऽअस्तुतेनोँवन्तुतेनोँमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेँ
षाञ्जम्भेदद्ध्मः ॥६४॥ नमोँस्तु । रुद्रेभ्योयेन्तरिँक्षेयेषां
व्वातऽइषवः॥ तेभ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशो
दीचीर्दशोर्द्ध्वाः ॥ तेभ्योनमोँऽअस्तुतेनोँवन्तुतेनोँमृडयन्तुते
यन्द्विष्मोयश्चनोद्वेष्टितमेँषाञ्जम्भेदद्ध्मः ॥६५॥ नमोँस्तु ।
रुद्रेभ्योयेपृथिव्व्याँऽयेषामन्नमिषवः ॥ तेभ्योदशप्प्राचीर्दश
दक्षिणादशप्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः॥तेभ्योनमोँऽअस्तु

तेनोंऽवन्तुतेनोंऽमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेद
द्ध्मः ॥ ६६ ॥ [ २०-९ ] इतिश्रीवाजसनेयसंहितायांषोडशोऽ
ध्यायः ॥ १६ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥
अश्मन्नूर्जंदश, नमस्तेपञ्च, ग्निस्तिग्मेननव, चक्षुषःपिताष्टा,
वाशुःशिशानःसप्तदशो, देनंक्रमध्वमग्निनापञ्चदशकौ, शुक्र
ज्योतिश्चसप्त, मꣳस्तनंत्रयोदश, नवैकोनशतं [ मं. ९९
अ. १७ अनु. ९ ] ॥ हरिःॐ ॥ अश्मन्नूर्जम् ॥ अश्मन्नू

ज्र्म्पर्व्वतेशिश्श्रियाणामद्भ्यऽओषधीभ्योवनस्पतिभ्योऽ
अधिसम्भृतम्पयः ॥ तान्नऽइषमूर्ज्जन्धत्तमरुतः सᳬरराणाऽ
अश्मँस्तेक्षुन्मयितऽऊर्ग्यन्द्विष्मस्तन्तेशुगृच्छतु ॥ १ ॥
इमामे । ऽअग्नऽइष्टकाधेनवः सन्त्वेकाचदशचदशचशतञ्च
शतञ्चसहस्रञ्चसहस्रञ्चायुतञ्चायुतञ्चनियुतञ्चनियुतञ्चप्प्रयुत
ञ्चार्बुदञ्चन्यर्बुदञ्चसमुद्रश्चमध्यञ्चान्तश्चपरार्द्धश्चैतामेऽअग्नऽ
इष्टकाधेनवः सन्त्वमुत्रामुष्मिँल्लोके ॥२॥ ऋतवस्त्थ । ऽऋता

वृधेऽऋतुष्ठास्त्थेऽऋतावृधः॥ घृतश्च्युतोमधुश्च्युतोविराजोनाम
कामदुघाऽअक्षीयमाणाः॥३॥ समुद्रस्यत्त्वा॥ समुद्रस्यत्त्वाव
कयाग्नेपरिव्ययामसि॥ पावकोऽअस्म्मब्भ्यꣳशिवोभव॥४॥
हिमस्यत्त्वा। जरायुणाग्नेपरिव्ययामसि॥ पावकोऽअस्म्म
ब्भ्यꣳशिवोभव॥५॥ उपज्म्मन्॥ उपज्म्मन्नुपवेतसेवतरन्नदी
ष्ष्वा॥ अग्नेपित्तमपामसिमण्डूकिताभिरागहिसेमन्नोयज्ञ
म्पावकवर्ण्णꣳशिवङ्कृधि॥६॥ अपामिदम्॥ अपामिदन्न्ययनꣳ

समुद्रस्यनिवेशनम् ॥ अक्ष्याँस्तेऽअस्मत्तपन्तुहेतयःपाव
कोऽअस्मभ्यꣳशिवोभव ॥ ७ ॥ अग्नेपावक । रोचिषा
मन्द्रयादेवजिह्वया ॥ आदेवान्वक्षियक्षिच ॥ ८ ॥ सनः
पावकदीदिवोग्नेदेवाँ २ ॥ इहावह ॥ उपयज्ञꣳहविश्चनः
॥ ९ ॥ पावकयायः ॥ पावकयायश्चितयन्त्याकृपाक्षामन्रु
रुचऽउषसोनभानुना ॥ तूर्वन्नयामन्नेतशस्यनूरणऽआयोघृणे
नततृषाणोऽअजरः ॥ १० ॥ [१०-१] नमस्ते ॥ नम

स्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्त
पन्तुहेतयःपावकोऽअस्मभ्यꣳशिवोभव ॥ ११ ॥ नृषदे
वेट् ॥ नृषदेवेडप्सुषदेवेड्बर्हिषदेवेड्वनसदेवेट्स्वर्विदेवेट् ॥ १२ ॥
येदेवाः ॥ येदेवादेवानाँयज्ञियायज्ञियानाꣳसंवत्सरीणमु
पभागमासते ॥ अहुतादोहविषोयज्ञेऽअस्मिन्त्स्वयम्पिबन्तु
मधुनोघृतस्य ॥ १३ ॥ येदेवाः ॥ येदेवादेवेष्वधिदेवत्व
मायन्येब्रह्मणःपुरऽएतारोऽअस्य ॥ येभ्योनऽऋतेपवतेधाम

किञ्चनन्तेदिवोनपृथिव्याऽअधिस्नुषु ॥ १४ ॥ प्राणदाऽअं
पानदाः ॥ प्राणदाऽअंपानदाव्यानदावर्च्चोदावरिवोदाः ॥
अन्न्याँस्तेऽअस्मत्तंपन्तुहेतयंःपावकोऽअस्मभ्यंᳪशिवो
भंव ॥ १५ ॥ [५-२] अग्निस्तिग्मेनं । शोचिषायासद्धि
श्वन्न्युत्त्रिणम् ॥ अग्निर्न्नोवनतेरयिम् ॥ १६ ॥ यऽइमा ।
विश्वाभुवनानिजुह्वदृषिर्होतान्न्यसीदत्पितानंः ॥ सऽआशि

१ अग्निस्तिग्मेन । अत्र विसर्गस्य सत्वे कृते "वायुरग्निरश्वैरेकाक्षरे" (शु य प्रा ३ अ ७७ सू ) इत्यनेन अग्निशब्दात्परस्य सस्य षत्व न । अग्ने परस्य तिग्मशब्दस्य एकाक्षराभावात् ।

षाद्द्रविणमिच्छमानःप्प्रथमच्छदवराँ२॥ऽआविवेश ॥ १७ ॥
किꣳस्वित् ॥ किꣳस्विदासीदधिष्ठानमारम्भणङ्कतमत्स्वि
त्कथासीत् ॥ यतोभूमिञ्जनयन्विश्वकर्म्माविद्यामौर्णोन्म
हिनाविश्वचक्षाः॥ १८॥ विश्वतश्चक्षुरुत । विश्वतोमुखो
विश्वतोबाहुरुतविश्वतस्प्पात् ॥ सम्बाहुब्भ्यान्धमतिसम्पतं
त्रैर्द्यावाभूमीजनयन्देवऽएकः॥ १९॥ किꣳस्वित् ॥ किꣳ
सं. ३० स्विद्वनङ्कऽउसवृक्षऽआसयतोद्यावापृथिवीनिष्टतक्षुः॥ मनी

षिणोमनसापृच्छतेदुतद्यदध्यतिष्ठद्भुवनानिधारयन् ॥ २० ॥
याते ॥ यातेधामानिपरमाणियावमायामध्यमाविश्वकर्मन्नु
तेमा ॥ शिक्षासखिभ्योहविषिस्वधावःस्वयँयजस्वतन्वंवृ
धानः ॥ २१ ॥ विश्वकर्मन्हविषा । वावृधानःस्वयँयजस्व
पृथिवीमुतद्याम् ॥ मुह्यन्त्वन्येऽअभितःसपत्नाऽइहास्मा
कम्मघवासूरिरस्तु ॥ २२ ॥ वाचस्पतिम् ॥ वाचस्पतिंवि
श्वकर्माणमूतयेमनोजुवंवाजेऽअद्याहुवेम ॥ सनोविश्वानि

हवंनानिजोषद्विश्वशंम्भूरवंसेसाधुकंम्र्मा ॥ २३ ॥ विश्वक
म्र्मंन्हविषां ॥ विश्वकर्म्मंन्हविषावर्द्धनेनत्रातारमिन्द्रंमकृणो
रवध्यम् ॥ तस्म्मैविशःसमंनमन्तपूर्व्वीरयमुग्ग्रोविहव्योय
थासंत् ॥ २४ ॥ [ ९-३ ] चक्षुषःपिता । मनंसाहिधीरोघृ
तमैनेऽअजनन्नम्म्नमाने ॥ यदेदन्ताऽअददृहन्तपूर्व्वऽआदि
द्यावापृथिवीऽअप्रथेताम् ॥ २५ ॥ विश्वकंम्र्माविमंनाः ॥ वि
श्वकंम्र्माविमंनाऽआद्विहायाधाताविधातापरमोतसन्दृक् ॥

तेषा॑मि॒ष्टानि॒ समि॒षाम॑दन्ति॒ यत्रा॑[1] सप्तऽऋ॒षीन्प॒रऽएक॑मा॒हुः

॥ २६ ॥ यो नः॑ । पि॒ता ज॑नि॒ता यो वि॑धा॒ता धामा॑नि॒ वेद॒ भुव॑ना

नि॒ विश्वा॑ ॥ यो दे॒वानां॑ नाम॒धाऽएक॑ऽए॒व तꣳ स॑म्प्र॒श्नं भुव॑ना

यन्त्य॒न्या ॥ २७ ॥ तऽआय॑जन्त॒ द्रवि॑ण॒ꣳ सम॑स्मा॒ऽऋष॑यः॒ पू

र्वे॑ जरि॒तारो॒ न भू॒ना ॥ अ॒सूर्त्ते॒ सूर्त्ते॒ रज॑सि निष॒त्ते ये भू॒तानि॑ स॒मकृ

ण्व॒न्निमानि॑ ॥ २८ ॥ प॒रो दि॒वा । प॒रऽए॒ना पृ॑थि॒व्या प॒रो दे॒वेभि॒



१ यत्रासप्तऽऋषीन् । अत्र सप्तऋषीन् परे यत्रशब्दस्य ह्रस्वाकारस्य "नरस्सप्तऋषीन्०" (शु. य. प्रा. ३ अ. १२२ सू. ) इत्यनेन दीर्घः ।

रसुरै[1]र्य्यदस्त्ति ॥ कं᳖स्विद्गर्भम्प्रथमन्दध्रऽआपोयत्त्रदेवाः समपश्श्यन्तपूर्व्वे ॥ २९ ॥ तमित् ॥ तमिद्गर्भम्प्रथमन्दध्रऽआपोयत्त्रदेवाःसमगच्छन्तविश्श्वे ॥ अजस्यनाभावद्ध्येकमर्प्पितंय्यस्मिन्विश्श्वानिभुवनानितस्त्थुः ॥ ३० ॥ नतम् ॥ नतंविदाथयऽइमाजजानान्न्यद्युष्माकमन्तरम्बभूव ॥ नीहारेणप्प्रावृताजल्प्याचासुतृपऽउक्त्थशासश्चरन्ति ॥ ३१ ॥

---

१ अत्र पर तु रेफहकाराभ्याम् (शु य. प्रा ४ अ १०१ सू ) इत्यनेन रकारात्परस्य यकारस्य द्वित्वम् ।

विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् ॥ विश्वकर्म्माहि ॥ विश्वकर्म्मा ह्यजनिष्ट देवऽआदिद्गन्धर्वोऽअभवद्द्वितीयः ॥ तृतीयः पिता जनितौषधीनामपाङ्गर्भं व्यदधात्पुरुत्रा ॥ ३२ ॥ [८-४] आशुः शिशानः ॥
आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोऽनिमिषऽएकवीरः शतꣳसेनाऽअजयत्साकमिन्द्रः ॥ ३३ ॥ सङ्क्रन्दनेनानिमिषेण । जिष्णुनायुत्कारेण

१ "आशु शिशान" इत्यत्र "प्रत्ययसवर्णं मुदि शाकटायन." (शु. य. प्रा. ३ अ. ९ सू.) इत्यनेन मुरसंज्ञकेषु शषसान्यतरवर्णपरेषु विसर्जनीयस्य परसवर्णे शकारे प्राप्ते "अविकार शाकल्यः शषसेषु" (शु. य. प्रा. ३ अ. १० सू.) इत्यनेन परसवर्णो निषिध्यते। एतादृशेऽन्यस्थलेष्वेवमेव निषेधो ज्ञेयः।

दुश्च्यवनेनधृष्णुना ॥ तदिन्द्रेणजयततत्सहध्वँयुधोनरऽ
इषुहस्तेनवृष्णा ॥ ३४ ॥ सऽइषुहस्तैः ॥ सऽइषुह
स्तैःसनिषङ्गिभिर्वशीसꣳस्रष्टासयुधऽइन्द्रोगणेन ॥ सꣳसृष्ट
जित्सोमपाबाहुशर्द्ध्युग्रधन्वाप्प्रतिहिताभिरस्ता ॥ ३५ ॥ बृह
स्पतेपरि । दीयारथेनरक्षोहामित्राँ २॥ऽअपबाधमानः ॥
प्रभञ्जन्त्सेनाःप्प्रमृणोयुधाजयन्नस्माकमेद्ध्यविताथानाम्
॥ ३६ ॥ बलविज्ञायस्थविरः ॥ बलविज्ञायस्थविरःप्प्रवीरः

सहस्वाञ्वाजीसहमानऽउग्ग्रः ॥ अभिवीरोऽ[2]अभिसत्त्वासहो
जाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ३७ ॥ गोत्रभिदङ्गोविदम् ॥
गोत्रभिदङ्गोविदंवज्रबाहुञ्जयन्तमज्मप्रमृणन्तमोजसा ॥
इमꣳसजाताऽअनुवीरयध्ध्वमिन्द्रꣳसखायोऽअनुसꣳरभध्ध्वम्
॥ ३८ ॥ अभिगोत्राणि ॥ अभिगोत्राणिसहसागाहमानोदु

१ अभिवीरः । अत्र "अश्वरश्मि०" (शु य. प्रा. ३ अ. ९८ सू.) इत्यनेन वकारे परे अभि इत्यस्य ह्रस्वेकारस्य दीर्घेकारे प्राप्ते "अभिविख्येपंवीर०" (शु य प्रा ३ अ, १०० सू.) इत्यनेन वीरपरे अभेर्दीर्घनिषेध । २ अभिसखा । अत्र "भाविभ्य स. षं समानपदे" (शु. य. प्रा ३ अ ५६ सू.) इत्यनेन सस्य षत्वे प्राप्ते "अनुसन्तनोतुबृहस्पतिसुतस्य सुसमिद्धायसुसन्दृशमभिसखा" (शु. य प्रा. ३ अ. ८२ सू.) इत्यनेन प्रकृतिभावे षत्वाभावः ।

योवीरश्शतमन्न्युरिन्द्रः ॥ दुश्च्यवनश्पृतनाषाडयुद्ध्योस्म्मा
कछसेनाऽअवतुप्प्रयुत्सु ॥ ३९ ॥ इन्द्रंऽआसाम् ॥ इन्द्रंऽ
आसान्नेताबृहस्प्पतिर्द्दक्षिणायज्ञश्पुरऽएंतुसोमः ॥ देवसेना
नामभिभञ्जतीनाञ्जयन्तीनाम्मुरुतोयन्त्वग्ग्रम् ॥ ४० ॥
इन्द्रस्यवृष्ष्णः ॥ इन्द्रस्यवृष्ष्णोवरुणस्यराज्ञंऽआदित्यानां
म्मुरुताꣳशर्द्धंऽउग्ग्रम् ॥ महामनसाम्भुवनच्च्यवानाङ्घोषोदे
वानाञ्जयतामुदस्त्थात् ॥ ४१ ॥ उद्धर्षय । मघवन्नायुधा

न्युत्सत्त्वंनाम्मामकानाम्मनाᳬंसि ॥ उद्वृत्रहन्वाजिनांव्वाजि
न्यन्युद्रथांनाञ्जयंताँऽयन्तुघोषाः ॥ ४२ ॥ अस्माकमि
न्द्रः ॥ अस्माकमिन्द्रःसमृतेषुध्वजेष्ष्वस्माकँय्याऽइषव
स्ताजयन्तु ॥ अस्माकंव्वीराऽउत्तरेभवन्त्वस्माँ२॥ऽउदेवाऽ
अवताहवेषु ॥ ४३ ॥ अमीषाञ्चित्तम् ॥ अमीषाञ्चित्तम्प्रति
लोभयन्तीगृहाणाङ्गान्यप्प्वेपरेहि ॥ अभिप्प्रेहिनिर्द्दहहृत्सु
शोकैरन्धेनामित्रास्तमसासचन्ताम् ॥ ४४ ॥ अवसृष्टापरा ।

पतशरव्येब्रह्मसꣳशिते ॥ गच्छामित्रान्प्रपद्यस्वमामीषाङ्क
ञ्चनोच्छिषः ॥ ४५ ॥ प्रेतं ॥ प्रेताजयतानरऽइन्द्रोवःशर्म्म
यच्छतु ॥ उग्रावः सन्तुबाहवोनाधृष्यायथासथ ॥ ४६ ॥
असौया । सेनामरुतःपरेषामभ्यैतिनऽओजसास्पर्द्धमाना ॥
ताङ्गूहततमसापव्रतेनयथामीऽअन्योऽअन्यन्नजानन् ॥४७॥
यत्रबाणाः । सम्पतन्तिकुमाराविशिखाऽइव ॥ तन्नऽइन्द्रोबृह

१ प्रेताजयतानर । अत्र जयतशब्दस्य ह्रस्वाकारस्य "धारयामयोजाव" (शु य प्रा. ३ अ १०८ सू.) इत्यनेन नकारे परे दीर्घाकार ।

स्प्पतिरदितिःशर्म्मयच्छतुव्विश्वाहा[1]शर्म्मयच्छतु॥४८॥ मर्म्मा
णिते॥ मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानु
वस्ताम्॥ उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु
॥४९॥ [१७-५] उदेनम्॥ उदेनमुत्तरान्नयाग्नेघृतेनाहुत॥
रायस्प्पोषेणसꣳसृजप्प्रजयाचबहुङ्कृधि॥५०॥ शतम्॥९००॥
इन्द्रेमम्॥ इन्द्रेमम्प्प्रतरान्नयसजातानामसद्वशी॥ समेनंव
र्च्चसासृजदेवानाम्भागदाऽअसत्॥ ५१॥ यस्यकुर्म्मः॥

१ विश्वाहा। अत्र नरहामित्रेषु च (शु य. प्रा ३ अ १०३ सू.) इत्यनेन हा परे विश्वशब्दस्य ह्रस्वाकारस्य दीर्घाकार.।

यस्यंकुम्म्भौगृहेहुविस्त्तमंग्ग्नेव्वर्द्धयात्त्वम् ॥ तस्म्मैदेवाऽअधिब्ब्रु
वन्न्तयञ्चब्रह्म्मणस्प्पतिं ॥ ५२ ॥ उदुत्त्वा ॥ उदुत्त्वाव्विश्श्वे
देवाऽअग्ग्नेभरन्न्तुचित्त्तिभिः ॥ सनोभवशिवस्त्त्वꣳसुप्प्रतीको
व्विभावसुः ॥ ५३ ॥ पञ्चदिशः ॥ पञ्चदिशोदेवीर्य्यज्ञमव
न्तुदेवीरपामतिन्दुर्म्मतिम्बाधमानाः ॥ रायस्प्पोषेयज्ञपतिमा
भजन्तीरायस्प्पोषेऽअधियज्ञोऽअस्त्थात् ॥ ५४ ॥ समिद्धेऽअ
ग्नौ॥समिद्धेऽअग्नावधिमामहानऽउक्क्थपत्त्रऽईड्योगृभीतः॥

तङ्घर्म्ममपरिगृह्यायजन्तोर्ज्जायद्यज्ञमयंजन्तदेवाः ॥ ५५ ॥
दैव्यायधर्त्रे । जोष्ट्रेदेवश्रीः श्रीमनाः शतपयाः ॥ परिगृह्यदे
वायज्ञमायन्देवादेवेभ्योऽअध्वर्य्यन्तोऽअस्थुः ॥ ५६ ॥
वीतꣳहविः । शमितꣳशमितायजध्यैतुरीयोयज्ञोयत्रहव्यमे
ति ॥ ततोवाकाऽआशिषोनोजुषन्ताम् ॥ ५७ ॥ सूर्य्यर
श्मिर्हरिकेशः । पुरस्तात्सविताज्योतिरुदयाँ२॥ऽअजस्रम् ॥
तस्यपूषाप्रसवेयातिविद्वान्त्सम्पश्यन्विश्वाभुवनानिगोपाः

॥ ५८ ॥ विमानऽएष॒ः ॥ विमानऽएषदिवोमध्यंऽआस्तऽ
आपप्रिवान्रोदसीऽअन्तरिक्षम् ॥ सविश्वाचीरभिचष्टेघृताची
रन्तरापूर्वमपरञ्चकेतुम् ॥५९॥ उक्षासमुद्रः ॥ उक्षासमु
द्रोऽअरुणःसुपर्णःपूर्वस्ययोनिम्पितुराविवेश ॥ मध्येदिवोनि
हितंपृश्निरश्माविचक्रमेरजसस्पात्यन्तौ[1] ॥ ६० ॥ इन्द्रं
विश्वाः ॥ इन्द्रंविश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ॥ रथी

---

१ रजसस्पात्यन्तौ इति पदं "अध्वनो रजसो रेप स्पृशस्पातौ" (शु. य. प्रा ३ अ २८ सू ) इत्यनेन रजसपरस्य विसर्जनीयस्य पाति पदे परे सकारे रूपम् ।

व्वितेनिरे ॥ ६८ ॥ अग्ग्नेप्प्र ॥ अग्ग्नेप्प्रेहिंप्प्रथमोदेंवयुताञ्चक्षु
र्द्देवानांमुतमर्त्त्यांनाम् ॥ इयंक्क्षमाणाभृगुंभिःसजोषाःस्व्वर्र्यं
न्तुयजंमानाःस्वुस्त्ति ॥ ६९ ॥ नक्क्तोषासां ॥ नक्क्तोषासास
मंनसाव्विरूंपेधापयेंतेशिशुमेकंᳩसमीची ॥ द्यावाक्क्षामांरु
क्क्मोऽअन्तर्व्विभांतिदेवाऽअग्ग्निन्धांरयन्द्रविणोदाः ॥ ७० ॥
अग्ग्नेंसहस्राक्क्ष । शतमूर्द्धंञ्छतन्तेंप्प्राणाःसहस्रंव्यानाः ॥
त्वᳩसांहस्रस्यंरायऽईंशिषेतस्म्मैतेव्विधेमवाजांयस्वाहां ॥ ७१ ॥

सुपर्णोऽसि । गुरुत्मान्पृष्ठेपृथिव्याःसीद ॥ भासान्तरिक्ष
मापृणज्ज्योतिषादिवमुत्तभानतेजसादिशऽउद्दृंह ॥७२॥
आजुह्वानःसुप्रतीकः । पुरस्तादग्नेस्वंयोनिमासीदसाधु
या ॥ अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन्विश्वेदेवायजमान
श्चसीदत ॥ ७३ ॥ ताँसवितुः ॥ ताँसवितुर्वरेण्यस्यचि
त्रामाहंवृणेसुमतिंविश्वजन्याम् ॥ यामस्यकण्वोऽअदुहत्प्र
पीनांसहस्रधारांपयसामहींगाम् ॥ ७४ ॥ विधेमते ।

शु. य. संहि. ॥१८४॥

पू. अ. ॥ १७ ॥

परमेजन्मन्नग्नेविधेमस्तोमैरवरेसधस्थे ॥ यस्माद्योनेरुदा
रिथायजेतम्प्रत्वेहवीᳪंषिजुहुरेसमिद्धे ॥ ७५ ॥ प्रेद्धोऽ
अग्ने ॥ प्रेद्धोऽअग्नेदीदिहिपुरोनोजस्रयासूर्म्यायविष्ठ ॥
त्वाᳪंशश्वन्तऽउपयन्तिवाजाः ॥ ७६ ॥ अग्नेतम् ॥
अग्नेतमद्याश्वन्नस्तोमैःक्रतुन्नभद्रᳪंहृदिस्पृशम् ॥ ऋध्यामा
तऽओहैः ॥ ७७ ॥ चित्तिञ्जुहोमि ॥ चित्तिञ्जुहोमिमनसा ॥१८४॥

१ रिथ यजेतम् । इति पदे । अत्र "अयोदारिथ" (शु य प्रा. ३ अ ११३ सू ) इत्यनेन रिथशब्दस्य यकारे परे दीर्घविधानात् रिथायजेतम् ।

घृतेनयथादेवाऽइहागमंन्वीतिहोत्राऽऋतावृधः ॥ पत्त्येविश्व
स्यभूमनोजुहोमिविश्वकर्म्मणेविश्वाहादाब्भ्यꣳहविः ॥७८॥
सप्ततै । ऽअग्नेसमिधः सप्तजिह्वाःसप्तऽऋषयꣳसप्तधाम
प्प्रियाणि ॥ सप्तहोत्राꣳसप्तधात्त्वायजन्तिसप्तयोनीरापृण
स्वघृतेनस्वाहा ॥ ७९ ॥ [१५-७] शुक्रज्ज्योतिश्च । चित्र
ज्ज्योतिश्चसत्त्यज्ज्योतिश्चज्ज्योतिष्म्मांश्च ॥ शुक्रश्चऽऋतपा
श्चात्त्यꣳहाः ॥ ८० ॥ ईदृङ्च ॥ ईदृङ्चान्यादृङ्चसदृङ्च

प्प्रतिसदृङ्[1] ॥ मितश्च सम्मितश्च सभराः ॥८१॥ ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च ॥ धर्त्ता च विधर्त्ता च विधारयः ॥ ८२ ॥ ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च ॥ अन्तिमित्रश्च दूरे अमित्रश्च गणः ॥८३॥ ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्प्रतिसदृक्षास[2] एतन ॥ मितासश्च सम्मितासो नो अद्य सभरसो मरुतो यज्ञे अस्मिन् ॥८४॥

1 प्रतिसदृङ्च अत्र "भाविभ्य सः पं समानपदे" (शु य प्रा ३ अ ५६ सू ) इत्यनेन पकारे प्राप्ते "अनुसन्तनोतु" (शु. य. प्रा. ३ अ ८२ सू ) इत्यनेन निषिद्ध्यते । 2 प्रतिसदृक्षास । अत्र "भाविभ्य स. प समानपदे" (शु य प्रा ३ अ. ५६ सू.) इत्यनेन मूर्धन्यषत्वापत्तौ "अनुसन्तनोतु" (शु य प्रा ३ अ ८२ सू ) इत्यनेन निषेधे न षत्वम् ।

स्वतवाँश्च । प्रघासीचंसान्तपनश्चंगृहमेधीचं ॥ क्रीडीचंशा
कीचोंज्जेषी ॥ ८५ ॥ इन्द्रन्दैवी÷ ॥ इन्द्रन्दैवीर्व्विशोमरुतो
नुवत्कर्मानोभवन्यथेन्द्रन्दैवीर्व्विशोमरुतोनुवत्कर्मानोभवन् ॥
एवमिमँय्यजमानन्दैवींश्चव्विशोमानुषीश्चानुवत्कर्मानोभव
न्तु ॥ ८६ ॥ [७-८] इमꣳस्तनम् ॥ इमꣳस्तनमूर्ज्जस्व
न्तन्धयापाम्प्रपीनमग्नेसारिरस्यमध्ये ॥ उत्सञ्जुषस्वमधुमन्त
मर्व्वन्त्समुद्रियꣳसदनमाविशस्व ॥ ८७ ॥ घृतम्मिमिक्षे ।

घृतमस्ययोनिर्घृतेश्रितोघृतंवस्यधाम ॥ अनुष्वधमावहमा
दयस्वस्वाहाकृतंवृषभवक्षिहव्यम् ॥ ८८ ॥ समुद्रादूर्म्मिः ॥
समुद्रादूर्म्मिर्म्मधुमाँ२॥ऽउदारदुपाꣳशुनासममृतत्त्वमानट्॥
घृतस्यनामगुह्यँय्यदस्तिजिह्वादेवानाममृतस्यनाभिः ॥८९॥
वयन्नाम ॥ वयन्नामप्प्रब्रवामाघृतस्यास्मिन्यज्ञेधारयामान
मोभिः१ ॥ उपब्रह्माश्रृणवच्छस्यमानञ्चतुःश्रृङ्गोवमीद्गौरऽ



१ धारयामानमोभिः । अत्र धारयाम नमोभिः इति पदे । अत्र "धारयाम योजाव" (शु. य. प्रा. ३ अ. १०८ सू.) इत्यनेन धारयाम इत्यादिपदेभ्यः परे नकारे सति पूर्वह्रस्वाकारस्य दीर्घो भवति । तेन धारयामानमोभि ।

चत्वारिशृङ्गा[1]त्रयोऽअस्य

एतत् ॥ ९० ॥ चत्वारिशृङ्गा ॥ चत्वारिशृङ्गात्रयोऽअस्य पादाद्वेशीर्षेसप्तहस्तासोऽअस्य ॥ त्रिधाबद्धोवृषभोरोरवीति । त्रिधाहितम् ॥ त्रिधा महोदेवोमर्त्याँ२॥ऽआविवेश ॥ ९१ ॥ त्रिधाहितम् ॥ इन्द्रऽ हितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्वविन्दन् ॥ ९२॥ एकऽसूर्यऽएकञ्जजानवेनादेकँस्वधयानिष्टतक्षुः[3] ॥ एताऽअर्षन्ति ॥ एताऽअर्षन्तिहृद्यात्समुद्राच्छतव्रजारिपुणा

1 चत्वारि शृङ्गाणि इति पदे "निशब्दो बहुलम्" (शु य प्रा, ३ अ. १८ सू) इत्यनेन पदान्तीयशृङ्गाणिपदस्य निशब्दस्य लोप । २ अस्य पादानि इत्यत्रापि "निशब्दो बहुलम्" इत्यनेन पादानिपदस्य निशब्दस्य लोप"।' ३ निष्टृतक्षु अत्र "ततक्षौ" (शु य प्रा ३ अ. ७१ सू) इत्यनेन ततक्षूत्तरपदे निरुपसर्गस्य विसर्गस्य षकारे "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा. ४ अ. १०२ सू) इत्यनेन ष्टुत्वेन जातस्य टकारस्य द्वित्वम् ।

नावचक्षे॥ घृतस्यधाराऽअभिचाकशीमिहिरण्ययोव्वेतसोम
द्ध्यऽआसाम् ॥ ९३ ॥ सम्म्यक्स्रवन्ति । सरितोनधेनाऽ
अन्तर्हृदामनसापूयमानाः ॥ एतेऽअर्षन्त्यूर्म्मयोघृतस्यमृगाऽ
इवक्षिपणोरीषमाणाः ॥ ९४॥ सिन्धोरिवप्प्राद्ध्वने । शूघनासो
व्वातप्प्रमियःपतयन्तियह्वाः ॥ घृतस्यधाराऽअरुषोनव्वाजी
काष्ठाभिन्दन्नूर्म्मिभिःपिन्वमानः ॥ ९५ ॥ अभिप्प्रवन्त ॥
अभिप्प्रवन्तसमनेवयोषाःकल्याण्ण्यःस्मयमानासोऽअग्निं

मू ॥ घृतस्यधाराᳪंसमिधोनसन्ततांजुषाणोहर्य्यतिजातवेदाः
॥ ९६ ॥ कन्याऽइववहतुम् ॥ कन्याऽइववहतुमेतवाऽउऽअ
ञ्ज्यञ्जानाऽअभिचाकशीमि ॥ यत्रसोमःसूयतेयत्रयज्ञोघृत
स्यधाराऽअभितत्पवन्ते ॥ ९७ ॥ अभ्यर्षत । सुष्टुतिङ्ग
व्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमंयज्ञन्नयतदेवता
नोघृतस्यधारामधुमत्पवन्ते ॥ ९८ ॥ धामन्ते ॥ धामन्ते

---

१ अत्र "पर तु रेफहकाराभ्याम्" (शु य प्रा अ सू ) इत्यनेन यकारस्य द्वित्वम् । यत्र रेफहकारात्पर स्पर्शवर्णस्तत्र तु "ऊष्मान्तस्थाभ्यश्च स्पर्शं" (शु य प्रा ४ अ १०२ सू ) इत्यनेनैव द्वित्वं भवति । तथैव यत्र रेफहकाराभ्यां परः स्पर्शातिरिक्तवर्णस्तत्र तु "पर तु रेफहकाराभ्याम्" इत्यनेन द्वित्वम् ।

विश्वस्भुवनमधिश्रितमन्तः समुद्रेहृद्यन्तरायुषि ॥ अपामनी
केसमिथेयऽआभृतन्तमश्याममधुमन्तन्तऽऊर्म्मिम् ॥९९॥
[१३-९] इतिश्रीवाजसनेयसंहितायांसप्तदशोऽध्यायः ॥१७॥
श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ वाजः, सत्त्य, मूर्द्धं
चतुष्का, अश्म्मा, ऽग्निस्त्रिका, वꣳशुः पञ्चौ, काचतस्त्रौ,
वाजायद्वे, वाजस्यन्वष्टा, ऽऋताषाट्त्रयोदशा, ग्निसुनाञ्जिम
सप्त, यदाकूता, द्वात्रिꣳहस्त्यायदशकौ, त्रयोदशसप्तसप्ततिः ॥

[अ. १८ मं. ७७ अनु. १३] हरिः ॐ ॥ वाजश्च[1]। मेप्प्रसव
श्चमेप्प्रयतिश्चमेप्प्रसितिश्चमेधीतिश्चमेक्रतुश्चमेस्वरश्चमेश्श्लो
कश्चमेश्श्रवश्चमेश्श्रुतिश्चमेज्ज्योतिश्चमेस्वश्चमेयज्ञेनकल्प
न्ताम् ॥१॥ प्राणश्च । मेपानश्चमेव्यानश्चमेसुश्चमेचित्तञ्चमऽ
आधीतञ्चमेवाक्चमेमनश्चमेचक्षुश्चमेश्श्रोत्रञ्चमेदक्षश्चमे
बलञ्चमेयज्ञेनकल्पन्ताम् ॥ २ ॥ ओजश्च । मेसहश्चमऽ

---

१ अत्र वाजश्च्च इत्यत्र जकारोत्तरवर्तिनो विसर्जनीयस्य चकारे परे "चछयो शम्" (शु य प्रा ३ अ ८ सू) इत्यनेन शकारे कृते "ऊष्मान्तस्थाभ्यश्च स्पर्शः." (शु य प्रा. ४ अ. १०२ सू.) इत्यनेन शकारात्परस्य स्पर्शवर्णस्य चकारस्य द्वित्वम्। एवमेतादृशेष्वन्येषु स्थलेषु बोध्यम्।

आ॒त्मा च॑ मे त॒नूश्च॑ मे॒ शर्म॑ च मे॒ वर्म॑ च॒ मेऽङ्गा॑नि च॒ मेऽस्थी॑नि च
मे॒ परू॑ᳬषि च मे॒ शरी॑राणि च म॒ऽआयु॑श्च मे ज॒रा च॑ मे य॒ज्ञेन॑ कल्प
न्ताम् ॥ ३ ॥ ज्यैष्ठ्यं॑ च । म॒ऽआधि॑पत्यं च मे म॒न्युश्च॑ मे॒ भा
मं॑श्च मे॒ऽमश्च॑ मेऽम्भश्च॑ मे जे॒मा च॑ मे महि॒मा च॑ मे वरि॒मा च॑ मे प्रथि॒
मा च॑ मे व॒र्ष्मा च॑ मे द्राघि॒मा च॑ मे वृ॒द्धं च॑ मे॒ वृद्धि॑श्च मे य॒ज्ञेन॑ कल्प
न्ताम् ॥ ४ ॥ [४-१] स॒त्यं च॑ । मे॒ श्र॒द्धा च॑ मे॒ जग॑च्च मे॒ ध
नं॑ च मे॒ विश्वं॑ च मे॒ मह॑श्च मे क्री॒डा च॑ मे॒ मोद॑श्च मे जा॒तं च॑ मे जनि॒ष्य

माणञ्चमेसूक्तञ्चमेसुकृतञ्चमेयज्ञेनकल्पन्ताम् ॥ ५ ॥ ऋतञ्च ।
मेमृतञ्चमेयक्ष्मञ्चमेनामयच्चमेजीवातुश्चमेदीर्घायुत्वञ्चमेन
मित्रञ्चमेभयञ्चमेसुखञ्चमेशयनञ्चमेसूषाश्चमेसुदिनञ्चमेयज्ञे
नकल्पन्ताम् ॥ ६ ॥ यन्ताच । मेधर्ताचमेक्षेमश्चमेधृति
श्चमेविश्वञ्चमेमहश्चमेसंविच्चमेज्ञात्रञ्चमेसूश्चमेप्रसूश्चमेसीरं
ञ्चमेलयश्चमेयज्ञेनकल्पन्ताम् ॥ ७ ॥ शञ्च । मेमयश्चमे
प्रियञ्चमेनुकामश्चमेकामश्चमेसौमनसश्चमेभगश्चमेद्रविण

ञ्चमेभुद्रञ्चंमेश्श्रेयंश्चमेव्वसीयश्चमेयशंश्चमेयुज्ञेनंकल्पन्ताम्
॥ ८ ॥ [४-२] ऊर्क्कं ॥ ऊर्क्कमेसूनृताच्चमेपयंश्चमेरसंश्चमेघृ
तञ्चंमेमधुंचमेसग्ग्धिश्चमेसपीतिश्चमेकृषिश्चंमेवृष्टिश्चमेजैत्रं
ञ्चमऽऔद्भिंद्यञ्चमेयुज्ञेनंकल्पन्ताम् ॥ ९ ॥ रयिश्च । मेरा
यंश्चमेपुष्टञ्चंमेपुष्टिश्चमेव्विभुचंमेप्रभुचंमेपूर्णञ्चंमेपूर्णतंरञ्च
मेकुयंवञ्चमेक्क्षितञ्चमेन्नंञ्चमेक्क्षुच्चमेयुज्ञेनंकल्पन्ताम्॥१०॥
व्वित्तञ्चं । मेव्वेद्यंञ्चमेभूतञ्चंमेभविष्यच्चंमेसुगञ्चंमेसुपत्थ्यं

ञ्चमऽऋद्धञ्चमेऽऋद्धिश्चमेक्कृप्तञ्चमेक्कृप्तिश्चमेमतिश्चमेसुमति
श्चमेयज्ञेनंकल्प्पन्ताम् ॥ ११ ॥ व्व्रीहयश्च । मेयवाश्चमेमा
षाश्चमेतिलाश्चमेमुद्गाश्चमेखल्वाश्चमेप्प्रियङ्गवश्चमेणवश्चमे
श्श्यामाकाश्चमे[1]नीवाराश्चमेगोधूमाश्चमेमसूराश्चमेयज्ञेनंक
ल्प्पन्ताम् ॥ १२ ॥ [४-३] अश्श्माच । मेमृत्तिकाचमे
गिरयश्चमेपर्व्वताश्चमेसिकताश्चमेवनस्प्पतयश्चमेहिरण्यञ्चमे

१ नीवारा । अत्र नि वारहारयोरनवग्रहे ( शु य प्रा ३ अ १०६ सू ) इत्यनेन अवग्रहवर्जिते वारहारयोरन्यतरे परे पूर्वो नीत्युपसर्गो दीर्घो भवति । तेन नीवारा ।

यंश्चमेश्श्यामश्चमेलोहश्चमेसीसंश्चमेत्रपुंचमेयज्ञेनंकल्पन्ता
म् ॥ १३ ॥ अग्निश्च । मऽआपंश्चमेवीरुधंश्चमऽओषंधयश्च
मेकृष्टपच्याश्चमेकृष्टपच्याश्चमेग्राम्म्याश्चमेपशवंऽआरण्ण्या
श्चमेवित्तञ्चमेवित्तिश्चमेभूतञ्चमेभूतिश्चमेयज्ञेनंकल्पन्ताम्
॥ १४ ॥ वसुंच । मेवसतिश्चमेकर्म्मंच ॥ मेशक्तिश्चमेर्त्थश्च
मऽएमंश्चमऽइत्त्याचंमेगतिश्चमेयज्ञेनंकल्पन्ताम् ॥ १५ ॥
[३-४] अग्निश्च । मऽइन्द्रंश्चमेसोमंश्चमऽइन्द्रंश्चमेसविता

चमऽइन्द्रश्चमेसरस्वतीचमऽइन्द्रश्चमेपूषाचमऽइन्द्रश्चमेबृह
स्पतिश्चमऽइन्द्रश्चमेयज्ञेनकल्पन्ताम् ॥१६॥ मित्रश्च । मऽ
इन्द्रश्चमेवरुणश्चमऽइन्द्रश्चमेधाताचमऽइन्द्रश्चमेत्वष्टाचमऽ
इन्द्रश्चमेमरुतश्चमऽइन्द्रश्चमेविश्वेचमेदेवाऽइन्द्रश्चमेयज्ञेन
कल्पन्ताम् ॥१७॥ पृथिवीच । मऽइन्द्रश्चमेन्तरिक्षञ्चमऽइन्द्र
श्चमेद्यौश्चमऽइन्द्रश्चमेसमाश्चमऽइन्द्रश्चमेनक्षत्राणिचमऽ
इन्द्रश्चमेदिशश्चमऽइन्द्रश्चमेयज्ञेनकल्पन्ताम् ॥१८॥ [ ३-९ ]

अ॒द्ध्रशु॒श्च॑। मेरश्मि॒श्च॑मेदा॑भ्य॒श्च॒मे॒धि॑पति॒श्च॑मऽउपा॒ꣳशु॒श्च॑मे
न्तर्य्या॒म॒श्च॑मऽऐन्द्रवाय॒व॒श्च॑मेमै॒त्रावरु॒ण॒श्च॑मऽआ॒श्वि॒न॒श्च॑मे
प्प्रतिप्प्र॒स्त्थान॑श्च॑मेशु॒क्क॒श्च॑मेम॒न्थी॒च॑मेय॒ज्ञेन॑कल्प्पन्ताम्॥ १९॥
आ॒ग्ग्र॒य॒ण॒श्च॑ । मेवै॒श्वदे॒व॒श्च॑मेद्ध्रु॒व॒श्च॑मेवै॒श्वान॒र॒श्च॑मऽऐन्द्रा॒ग्ग्न
श्च॑मेम॒हा॒वै॒श्वदेव॒श्च॑मेम॒रु॒त्त्व॒ती॒या॒श्च॑मे॒निष्क्के॑वल्ल्य॒श्च॑मेसा॒वि॒त्र
श्च॑मेसा॒र॒स्व॒त॒श्च॑मेपात्क्नी॒व॒त॒श्च॑मेहा॒रि॒यो॒ज॒न॒श्च॑मेय॒ज्ञेन॑कल्प्प
न्ताम् ॥ २० ॥ स्त्रु॒च॑श्च । मेचम॒सा॒श्च॑मेवा॒य॒व्या॒नि॒च॑मेद्द्रोण

कलशश्चमेग्ग्रावाणश्चमेधिषवणेचमेपूतभृच्चमेऽआधवनीयश्च
मेवेदिश्चमेबर्हिश्चमेवभृथश्चमेस्वगाकारश्चमेयज्ञेनकल्पन्ता
म् ॥ २१ ॥ अग्निश्च । मेघर्म्मश्चमेर्कश्चमेसूर्य्यश्चमेप्राण
श्चमेऽश्वमेधश्चमेपृथिवीचमेदितिश्चमेदितिश्चमेद्यौश्चमेङ्गुलयः
शक्करयोदिशश्चमेयज्ञेनकल्पन्ताम् ॥ २२ ॥ व्रतञ्च । मऽ
ऋतवश्चमेतपश्चमेसंवत्त्सरश्चमेहोरात्रेऽऊर्वष्ठीवेबृहद्रथन्तरेच्च
मेयज्ञेनकल्पन्ताम् ॥२३॥ [ ५-६ ] एकाच । मेतिस्रश्चमेति

स्त्रश्चमेपञ्चंचमेपञ्चचमेसप्तचंमेसप्तचमेनवंचमेनवंचमऽए
कांदशचमऽएकांदशचमेत्रयोंदशचमेत्रयोंदशचमेपञ्चंदशच
मेपञ्चंदशचमेसप्तदंशचमेसप्तदंशचमेनवंदशचमेनवंदशच
मऽएकंविꣳशतिश्चमऽएकंविꣳशतिश्चमेत्रयोविꣳशतिश्चमेत्र
योंविꣳशतिश्चमेपञ्चंविꣳशतिश्चमेपञ्चंविꣳशतिश्चमेसप्तविꣳ
शतिश्चमेसप्तविꣳशतिश्चमेनवंविꣳशतिश्चमेनवंविꣳशतिश्च
मऽएकंत्रिꣳशच्चमऽएकंत्रिꣳशच्चमेत्रयंस्त्रिꣳशच्चमेयज्ञेनक

ल्पन्ताम् ॥२४॥ चतस्रश्च । मेष्टौचमेष्टौचमेद्वादशचमेद्वादश
चमेषो[1]डशचमेषोडशचमेविꣳशतिश्चमेविꣳशतिश्चमेचतु
र्विꣳशतिश्चमेचतुर्विꣳशतिश्चमेष्टाविꣳशतिश्चमेष्टाविꣳशति
श्चमेद्वात्रिꣳशच्चमेद्वात्रिꣳशच्चमेषट्त्रिꣳशच्चमेषट्त्रिꣳशच्चमेच
त्वारिꣳशच्चमेचत्वारिꣳशच्चमेचतुश्चत्वारिꣳशच्चमेचतुश्चत्वा
रिꣳशच्चमेष्टाचत्वारिꣳशच्चमेयज्ञेनकल्पन्ताम् ॥ २५ ॥

---

१ षोडशशब्दे षड् दश इति पदद्वयम् । अत्र षड्दशदन्तयो सख्यावयोऽर्थयोश्च (शु. य प्रा ३ अ ४७ सू ) इत्यनेन षड्शब्दघटितान्त्यवर्णस्य डकारस्य सोपधे ओकारे षो इति कृते तत परस्य सख्यावाचिनो दशशब्दस्य दकारस्य मूर्द्धन्ये क्रमेण उकारे च कृते षोडश इति ॥

त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे प
ञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे
यज्ञेन कल्पन्ताम् ॥ २६ ॥ पष्ठवाट् च ॥ पष्ठवाट् च मे पष्ठौही च मऽ
उक्षा च मे वशा च मऽऋषभश्च मे वेहच्च मेऽनड्वाँश्च मे धेनुश्च मे यज्ञे
न कल्पन्ताम् ॥२७॥ [४-७] वाजाय स्वाहा । प्रसवाय स्वाहा
ऽपिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाऽहर्पतये स्वाहाऽह्ने मुग्धा
य स्वाहा मुग्धाय वैनंशिनाय स्वाहा विनंशिनऽआन्त्यायना

यस्वाहान्त्यायभौवनायस्वाहाभुवनस्यपतयेस्वाहाधिपतये
स्वाहाप्प्रजापतयेस्वाहा ॥ इयन्तेराण्मित्रायय्यन्तासियमनऽ
ऊर्ज्जेत्त्वावृष्ट्यैत्त्वाप्प्रजानान्त्वाधिपत्त्याय ॥ २८ ॥ आयुर्य्य
ज्ञेनं । कल्प्पताम्प्राणोयज्ञेनकल्प्पताञ्चक्षुर्य्यज्ञेनकल्प्पताᳪ
श्रोत्त्रँय्यज्ञेनकल्प्पताँवाग्ग्यज्ञेनकल्प्पताम्मनोयज्ञेनकल्प्पता
मात्त्मायज्ञेनकल्प्पताम्ब्रह्मायज्ञेनकल्प्पताञ्ज्योतिर्य्यज्ञेनक
ल्प्पताᳪस्वर्य्यज्ञेनकल्प्पताम्पृष्ठँय्यज्ञेनकल्प्पताँय्यज्ञोयज्ञेनं

कल्प्पताम् ॥ स्तोमश्श्च यजुश्श्च ऽऋक्च साम च बृहच्च रथन्तरञ्च ॥
स्वर्द्देवाऽअगन्मामृताऽअभूम प्प्रजापतेः प्प्रजाऽअभूम व्वेट्स्वा
हा ॥२९॥ [२-८] व्वाजस्यनु । प्प्रसवे मातरम्महीमदितिन्नाम व्व
चसा करामहे ॥ यस्यामिदं व्विश्श्वम्भुवनमाविवेश तस्यान्नो देवः
सविता धर्म्म साविषत् ॥ ३० ॥ व्विश्श्वेऽअद्य । मरुतो व्विश्श्वऽऊ
ती व्विश्श्वे भवन्त्वग्नयः समिद्धाः ॥ व्विश्श्वे नो देवाऽअवसागमन्तु
व्विश्श्वमस्तु द्रविणं व्वाजोऽअस्म्मे ॥३१॥ व्वाजो नः । सप्त प्प्र

दिशश्चतंस्त्रोवापरावतं÷ ॥ व्वाजोनोव्विश्वैर्द्देवैर्द्धनंसाताविहावं
तु ॥ ३२ ॥ व्वाजोनं ॥ व्वाजोनोऽअद्यप्प्रसुंवातिदानंव्वाजो
देवाँ२॥ऽऋतुभिं÷कल्प्पयाति ॥ व्वाजोहिमासर्व्ववीरञ्जजान
व्विश्वाऽआशाव्वाजंपतिर्ज्जयेयम् ॥ ३३ ॥ व्वाजं÷पुरस्त्तात् ॥
व्वाजं÷पुरस्त्तादुतमंद्ध्यतोनोव्वाजोदेवान्हविषांव्वर्द्धयाति॥ व्वा
जोहिमासर्व्ववीरञ्चकारसर्व्वाऽआशाव्वाजंपतिर्ब्भवेयम् ॥ ३४ ॥
सम्मां । सृजामिपयंसापृथिव्व्याःसम्मांसृजाम्म्यद्भिरोषंधी

भिः ॥ सोहंव्वाजंᳬसनेयमग्ग्ने ॥ ३५ ॥ पयं÷पृथिव्व्याम् ॥
पयं÷पृथिव्व्याम्पयऽओषधीषुपयोदिव्व्यन्तारिक्क्षेपयोधाः ॥
पयस्वतीःप्प्रदिशं÷सन्तुमह्यम् ॥३६॥ देवस्यंत्त्वा । सवितुः
प्प्रसवेश्श्विनोर्ब्बाहुब्भ्याम्पूष्ण्णोहस्त्ताब्भ्याम् ॥ सरस्वत्त्यैव्वा
चोयन्तुर्य्यन्त्रेणाग्ग्नेश्साम्म्राज्ज्येनाभिषिञ्चामि ॥३७॥ [८-९]
ऋताषाडृतधामा ॥ ऋताषाडृतधामाग्ग्निर्ग्गन्धर्व्वस्त्तस्यौषध
योप्प्सरसोमुदोनाम ॥ सनऽइदम्ब्रह्मक्षत्त्रम्पातुतस्म्मैस्वाहा

वाड्भ्यःस्वाहा ॥ ३८ ॥ सꣳहितोविश्वसामा ॥ सꣳहितो
विश्वसामासूर्य्योगन्धर्वस्तस्यमरीचयोप्सरसऽआयुवोनाम॥
सनऽइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहावाड्भ्यःस्वाहा ॥ ३९ ॥
सनऽइदम्ब्रह्मक्षत्रम्पातुतस्मैस्वाहावाड्भ्यःस्वाहा ॥ सुषुम्णःसूर्य्यरश्मिश्चन्द्रमागन्धर्वस्तस्यनक्षत्राण्यप्सरसोभेकुरयोनाम॥ सनऽइदम्ब्रह्मक्षत्र
सुषुम्णःसूर्य्यरश्मिः ॥ सुषुम्णःसूर्य्यरश्मिश्चन्द्रमागन्धुं
र्वस्तस्यनक्षत्राण्यप्सरसोभेकुरयोनाम॥ सनऽइदम्ब्रह्मक्षत्र
म्पातुतस्मैस्वाहावाड्भ्यःस्वाहा ॥ ४० ॥ इषिरोविश्वव्य
चाः ॥ इषिरोविश्वव्यचावातोगन्धर्वस्तस्यापोऽअप्सरसऊ

ज्ज्योनाम ॥ सनऽइदम्ब्रह्मक्षत्रम्पातुतस्म्मैस्वाहावाट्ताभ्यःस्वाहा ॥ ४१ ॥ भुज्युःसुपर्ण्णः ॥ भुज्युःसुपर्ण्णोयज्ञोगन्धर्व्वस्तस्यदक्षिणाऽअप्सरसस्तावानाम ॥ सनऽइदम्ब्रह्मक्षत्रम्पातुतस्म्मैस्वाहावाट्ताभ्यःस्वाहा ॥ ४२ ॥ प्रजापतिर्व्विश्वकर्म्मा ॥ प्रजापतिर्व्विश्वकर्म्मामनोगन्धर्व्वस्तस्यऽऋक्सामान्यप्सरसऽएष्टयोनाम ॥ सनऽइदम्ब्रह्मक्षत्रम्पातुतस्म्मैस्वाहावाट्ताभ्यःस्वाहा ॥ ४३ ॥ सनः ॥ सनोभुवनस्यपतेप्र

जापतेयस्यंतऽउपरिगृहायस्यंवेह ॥ अस्म्मैब्रह्मणेस्म्मैक्षत्राय
महिशर्म्मयच्छस्वाहा ॥ ४४ ॥ समुद्रोसि ॥ समुद्रोसिन
भंस्वानार्द्रदानुःशम्भूर्म्मयोभूरभिमावाहिस्वाहामारुतोसिम
रुतांगणःशम्भूर्म्मयोभूरभिमावाहिस्वाहावस्यूरसिदुवस्वाञ्छ
म्भूर्म्मयोभूरभिमावाहिस्वाहा ॥ ४५ ॥ यास्ते ॥ यास्तेऽ
अग्नेसूर्य्येरुचोदिवमातन्वन्तिरश्मिभिः ॥ ताभिर्न्नोऽअद्य
सर्व्वाभीरुचेजनायनस्कृधि ॥४६॥ यावः ॥ यावोदेवाःसूर्य्ये

रुचोगोष्ठ्वश्वेषुसारुचं॑ ॥ इन्द्राग्नीताभिः॑सर्व्वाभीरुचन्नोधत्त

बृहस्पते ॥४७॥ रुचन्नः॑ ॥ रुचन्नोधेहिब्राह्मणेषुरुचꣳराजसुन

स्कृधि ॥ रुचंविश्येषुशूद्रेषुमयिधेहिरुचारुचम् ॥४८॥ तत्त्वा

यामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहे

डमानोवरुणेहबोद्ध्युरुशꣳससमानऽआयुः॑प्रमोषीः॑ ॥ ४९ ॥

स्वर्ण्ण ॥ स्वर्ण्णघर्म्मःस्वाहास्वर्ण्णार्कःस्वाहास्वर्ण्णशुक्रःस्वाहा





१ स्व न इति पदे । अत्र समानपदत्वाभावेन "ऋपरेभ्यो नकारो णकार समानपदे" (शु. य प्रा २ अ ८५ सू.) इत्यनेन णत्वाप्रासौ निषण्णाय रथ० (शु य प्रा. ३ अ ८७ सू.) इत्यनेन णत्वनिपात ।

स्वुर्ण्णज्ज्योतिःस्वाहास्वुर्ण्णसूर्य्यःस्वाहा ॥५०॥ [१३-१०]
अग्ग्निꣳयुनज्मि ॥ अग्ग्निꣳयुनज्मिशवसाघृतेनदिव्यꣳसु
पर्ण्णंव्वयसाबृहन्तम् ॥ तेनव्वयङ्गमेमब्ब्रध्नस्यव्विष्टपꣳस्वोरुहा
णाऽअधिनाकमुत्तमम् ॥५१॥ शतम् ॥१०००॥ इमौते । पक्षा
वजरौपतत्रिणौयाभ्याꣳरक्षाꣳस्यपहꣳस्यग्ग्ने ॥ ताभ्यां
पतेमसुकृतामुलोकंय्यत्रऽऋषयोजग्मुःप्प्रथमजाःपुराणाः
॥५२॥ इन्दुर्द्दक्षः । श्येनऽऋतावाहिरण्ण्यपक्षःशकुनोभु

रुण्ण्युः ॥ मुहान्त्सुधस्त्थेंद्ध्रुवऽआनिषंत्तोनमंस्त्तेऽअस्त्तुमा
मांहिंᳬसीः ॥ ५३ ॥ दिवोमूर्द्धा । सिंपृथिव्यानाभिरूर्ग्गपा
मोषंधीनाम् ॥ विश्वायुंश्शर्म्मसप्प्रथान्नमंस्प्पथे ॥ ५४ ॥
विश्वंस्यमूर्द्धन् ॥ विश्वंस्यमूर्द्धन्नाधितिष्ठसिश्श्रितः समुद्रेतेहृदय
मप्प्स्वायुरपोदंत्तोदधिम्भिन्त ॥ दिवस्प्पुर्ज्जन्यांदुन्तारिक्षात्त्पृ
थिव्यास्त्ततोंनोवृष्ट्यांव ॥ ५५ ॥ इष्टोयज्ञः ॥ इष्टोयज्ञोभृ ॥ १९९ ॥

१ नमस्प्पथे अत्र "सदो द्यौर्नमस्कृतस्पिता पथेषु" (शु य. प्रा ३ अ ३४ सू ) इत्यनेन कृत पिता पथ इत्येतेषु परेषु यथासंख्य सद द्यौः नम एतेषां विसर्गस्य सकारो विधीयते । तेनात्र पथे परे नम.पदघटितविसर्जनीयस्य सकारे "ऊष्मान्तस्थाभ्यश्च स्पर्शे" (शु य. प्रा. ४ अ. १०२ सू ) इत्यनेन पकारस्य द्वित्वम् ।

गुभिराशीर्द्वसुभिः ॥ तस्यंनऽइष्टस्यप्प्रीतस्यद्रविणेहागमेः
॥ ५६ ॥ इष्टोऽअग्निः ॥ इष्टोऽअग्निराहुतःपिपर्त्तुनऽइष्टꣳ
हविः ॥ स्वगेदन्देवेभ्योनमः ॥ ५७ ॥ [७-११] यदा
कूतात् ॥ यदाकूतात्समसुस्रोद्धृदोवामनसोवासम्भृतञ्चक्षुषो
वा ॥ तदनुप्प्रेतसुकृतामुलोकँयत्रऽऋषयोजग्मुःप्प्रथमजाः
पुराणाः ॥ ५८ ॥ एतꣳसधस्थ ॥ एतꣳसधस्थपरितेददा
मियमावहाच्छेवधिञ्जातवेदाः ॥ अन्वागन्तायज्ञपतिर्वोऽअ

त्रृतꣳस्म्मंजानीतपरमेव्व्योमन् ॥ ५९ ॥ एतञ्ज्ञानाथ । परमे
व्व्योमन्देवाःसधस्त्थाव्विदरूपमस्य ॥ यदागच्छात्पथिभि
र्द्देवयानैरिष्टापूर्त्तेकृणवाथाविरस्म्मै ॥ ६० ॥ उद्बुद्ध्यस्व ॥
उद्बुद्ध्यस्वाग्ग्नेप्प्रतिजागृहित्त्वमिष्टापूर्त्तेसꣳसृजेथामयञ्च ॥ अ
स्म्मिन्त्सधस्त्थेऽअद्ध्युत्तरस्म्मिन्व्विश्श्वेदेवायजमानश्चसीदत
॥ ६१ ॥ येनवहसि । सहस्रँय्येनाग्ग्नेसर्व्ववेदसम् ॥ तेनेमँ
य्यज्ञन्नोनयस्वर्द्देवेषुगन्तवे ॥ ६२ ॥ प्रस्तरेणपरिधिना ।

स्रुचावेद्यांचबर्हिषां ॥ ऋचेमँऽयज्ञन्नोनयस्वर्देवेषुगन्तवे
॥ ६३ ॥ यद्दत्तम् ॥ यद्दत्तँऽयत्परादानँऽयत्पूर्त्तँऽयाश्चद
क्षिणाः ॥ तदग्निर्वैश्वकर्म्मणः स्वर्देवेषुंनोदधत् ॥ ६४ ॥
यत्रधाराः ॥ यत्रधाराऽअनपेतामधोर्घृतस्यंचयाः ॥ तद
ग्निर्वैश्वकर्म्मणः स्वर्देवेषुंनोदधत् ॥ ६५ ॥ अग्निरस्मि ॥
अग्निरस्मिजन्मनाजातवेदाघृतम्मेचक्षुरमृतम्मऽआसन् ॥
अर्कस्त्रिधातूरजसोविमानोजस्रोघर्म्मोहविरस्मिनाम ॥ ६६ ॥

ऋचो॒नाम॑ ॥ ऋचो॒नामा॑स्मि॒ यजू॑ᳪषि॒नामा॑स्मि॒ सामा॑नि॒
नामा॑स्मि ॥ येऽअ॒ग्नय॒ः पाञ्च॑जन्या॒ऽअ॒स्याम्पृ॑थि॒व्यामधि॑ ॥
तेषा॑मसि॒ त्वमु॑त्त॒मः॒ प्रनो॑जी॒वात॑वेसुव ॥ ६७ ॥ [ १०-१२ ]
वा॒र्त्र॑हत्याय॒ शव॑से पृ॑तना॒षाह्या॑यच ॥ इन्द्र॒त्वाव॑र्त्तया
मसि ॥ ६८ ॥ स॒हदा॑नुम्पुरुहूत । क्षि॒यन्त॑मह॒स्त्तामिन्द्र॒ स
म्पि॑णक्कुणा॑रुम् ॥ अ॒भिवृत्र॑ंवर्द्ध॑मानम्पिया॑रुम॒पाद॑मिन्द्रत॒व

१ पृतनापाद्याय च अत्र "सहे पृतनाया" (शु य प्रा ३ अ. ७५ सू ) इत्यनेन पृतनाशब्दात्परस्य सस्य पत्वं निपात्यते।      २ अभिवृत्रम्। अत्र "अश्वरश्मि" (शु य प्रा ३ अ ९८ सू ) इत्यनेन प्राप्तो अभि इत्यस्य ह्रस्वेकारस्य दीर्घाकारो "अभिविश्व्येपवीरविश्ववत्सवृत्रवाजयन्तेषु" (शु य. प्रा ३ अ १०० सू ) इत्यनेन अभे परेषु एतेषु पदेषु निषिद्ध्यते तेनात्र वकारे परेऽपि दीर्घो न भवति।

सांजघन्थ ॥ ६९ ॥ विनः ॥ विनऽइन्द्रमृधोजहिनीचायं
च्छपृतन्यतः ॥ योऽअस्माँ२॥ऽअभिदासत्यधरङ्गमयात
मः ॥ ७० ॥ मृगोन । भीमःकुचरोगिरिष्ठाःपरावतऽआ
जगन्थापरस्याः ॥ सृकꣳसꣳशायंपविमिन्द्रतिग्मंविशत्रून्ता
ढिविमृधोनुदस्व ॥ ७१ ॥ वैश्वानरोनः ॥ वैश्वानरोनऽ
ऊतयऽआप्रयातुपरावतः ॥ अग्निर्नःसुष्टुतीरुप ॥ ७२ ॥
पृष्टोदिवि । पृष्टोऽअग्निःपृथिव्याम्पृष्टोविश्वाऽओषधीराविं

वेश ॥ वैश्वानरः॒सहंसापृष्टोऽअग्निः॒सनोदिवासरिष[1]स्पातुन
क्तम् ॥ ७३ ॥ अश्श्यामतम् ॥ अश्श्यामतङ्कामंमग्नेतवो
तीऽअश्श्यामंरयिꣳरयिवꣳसुवीरम् ॥ अश्श्यामवाजमभिवा
जयन्तोश्श्यामंद्युम्नमंजराजरन्ते ॥ ७४ ॥ वयन्ते ॥ वय
न्तेऽअद्यरींरिमाहिकामंमुत्तानहस्तानमसोपसद्य ॥ सजिष्ठेन
मनसायक्षिदेवानस्त्रेधतामन्मनाविप्रोऽअग्ने ॥ ७५ ॥ धा



१ रिषस्पातु इति पदम्। अत्र "अध्वनो रजसो रिप स्पृशस्पातौ" (शु. य प्रा ३ अ २८ सू) इत्यनेन रिप पदस्य विसर्जनीयस्य पातु पदे परे सत्वे पत्वेच "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु य प्रा ४ अ १०२ सू) इत्यनेन पातुघटितपकारस्य द्वित्वे रूपम्।

मुच्छदुग्निः ॥ धामुच्छदुग्निरिन्द्रोब्रह्मादेवोबृहस्पतिः ॥
सचेतसोव्विश्वेदेवायज्ञम्प्रावन्तुनःशुभे ॥ ७६ ॥ त्वँय्यंविष्ठ ।
दाशुषोनॄँःपाहिशृणुधीगिरं ॥ रक्षातोकमुतत्मना ॥ ७७ ॥
[१०-१३] इतिश्रीवाजसनेयसंहितायामष्टादशोऽध्यायः १८॥
श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ स्वाद्वीन्त्वैकादश,
देवायज्ञंविंशतिः, सुरावन्तꣳसप्तदशो, दीरतान्त्रयोदशा,
च्याजानुर्दश, सोमोराजाष्टौ, सीसेनतन्त्रꣳषोडश, सप्त पत्र

नवतिः ॥ [अ. १९ मं. ९५ अनु. ७] हरिःॐ ॥ स्वाद्वीन्त्वां । स्वादुनांतीव्रान्तीव्रेणामृतांममृतेंन ॥ मधुंमतीम्मधुंमतासृजामिसꣳसोमेंन ॥ सोमोंस्यश्विभ्यांम्पच्यस्वसरंस्वत्यैपच्यस्वेन्द्रांयसुत्राम्णेंपच्यस्व ॥ १ ॥ परीतः ॥ परीतोषिंञ्चतासुतꣳसोमोयऽउंत्तमꣳहविः ॥ दुधन्वायोनर्य्योऽअप्स्वन्तरासुषावसोममद्रिंभिः ॥ २ ॥ वायोःपूतः । पवित्रें



१ परीत सिञ्चता इति पदे । अत्र "उकारमित सिञ्चता सोपध" (शु य प्रा ३ अ ४६ सू ) इत्यनेन इत सवन्धिविसर्गस्य सिञ्चतौ परे सोपध उकारो विधीयते परश्च मूर्धन्यो भवति इति । सोपधे ओकारे सकारस्य मूर्धन्यत्वे च परीतोषिञ्चता इति सिद्धम् ।

णप्प्रत्त्यङ्क्सोमोऽअतिंद्द्रुतः ॥ इन्द्रस्य्युज्ज्युःसखा ॥ व्वायोः पूतःपवित्त्रेणप्प्राङ्क्सोमोऽअतिंद्द्रुतः ॥ इन्द्रस्य्युज्ज्युःसखा ॥ ३ ॥ पुनातिते । परिस्रुतःसोमःसूर्य्यस्यदुहिता ॥ व्वारेण शश्श्वतातना ॥ ४ ॥ ब्रह्मक्षत्रम् ॥ ब्रह्मक्षत्त्रम्पवतेतेजऽइन्द्रि यःसुरया सोमःसुतऽआसुतोमदाय ॥ शुक्रेणदेवदेवताःपि पृग्ग्धिरसेनान्नंय्यजमानायधेहि ॥ ५ ॥ कुविदङ्ग । यवम्म

१ अत्र "पर तु रेफहकाराभ्याम्" (शु य प्रा ३ अ १०१ सू ) इत्यनेन हकारात्परस्य मकारस्य द्वित्वे प्राप्तेऽपि "ऊष्मान्तस्थाभ्यश्च स्पर्शे" (शु य प्रा ४ अ १०२ सू ) इत्यनेन द्वित्वविधानात्तेनैवात्र स्पर्शवर्णपरे मकारे तस्य द्वित्वम् ।

न्तोयवंञ्चिद्यथादान्त्यंनुपूर्व्वंव्वियूयं ॥ इहेहैषाङ्कृणुहिभोजंना
निये बर्हिषोनमंऽउक्तिंय्यजंन्ति ॥ उपयामगृंहीतोस्यश्वि
भ्यांन्त्वासरंस्वत्यैत्वेन्द्रांयत्वासुत्राम्म्णंऽएषतेयोनिस्तेजं
सेत्वाव्वीर्य्यांयत्वाबलांयत्वा ॥ ६ ॥ नानाहि । वांन्देवहिं
तꣳसदंस्कृतम्मासꣳसृंक्षाथाम्परमेव्योमन् ॥ सुरात्त्वमसिशु
ष्मिणीसोमंऽएषमामांहिꣳसीःस्वाँय्योनिंमाविशन्ती ॥ ७ ॥
उपयामगृंहीतोसि ॥ उपयामगृंहीतोस्याश्विनन्तेजंःसारस्व

तंव्वीर्र्य्यमैन्द्रम्बलम् ॥ एषतेयोनिर्म्मोदायत्त्वानन्दायत्त्वाम
हसेत्त्वा ॥ ८ ॥ तेजोऽसि ॥ तेजोऽसितेजोमयिधेहिव्वीर्र्य्यम
सिव्वीर्र्य्यम्मयिधेहिबलमसिबलम्मयिधेह्योजोस्योजोमयिधे
हिमन्न्युरसिमन्न्युम्मयिधेहिसहोऽसिसहोमयिधेहि ॥ ९ ॥
याव्याग्घ्रम् ॥ याव्याग्घ्रंव्विषूचिकोभौव्वृकञ्चरक्क्षति ॥ श्येन
म्पतत्रिणꣳसिꣳहꣳसेमम्पात्त्वꣳहसः ॥ १० ॥ यदापि
पेष । मातरम्पुत्रःप्प्रमुदितोधयन् ॥ एतत्तदग्ग्नेऽअनृणोभवा

1 अत्र "पर तु रेफहकाराभ्याम्" (शु य प्रा. अ सू.) इत्यनेन यकारस्य द्वित्वम् । एवं वीर्य्यमसि ।

स्म्यहंतौपितरौमया ॥ सम्पृचंस्त्थसम्माभुद्रेणपृङ्क्तविपृचंस्त्थ
विमांपाप्मनांपृङ्क्त ॥ ११ ॥ [ ११-१ ] देवायज्ञम् ॥ देवाय
ज्ञमंतन्वतभेषजम्भिषजाश्विना ॥ वाचासरंस्वतीभिषगिन्द्रा
येन्द्रियाणिदधंतः ॥ १२ ॥ दीक्षायैरूपम् ॥ दीक्षायैरूपᳬँश
ष्पाणिप्रायणीयस्यतोक्मानि ॥ क्रयस्यरूपᳬँसोमस्यलाजाः
सोमाᳬँशवोमधु ॥ १३ ॥ आतिथ्यरूपम्मासरम् ॥ आति
थ्यरूपम्मासरम्महावीरस्यनग्नहुः ॥ रूपमुपसदामेतत्ति

स्त्रोरात्रीꣳसुरासुता ॥ १४ ॥ सोमस्यरूपम् ॥ सोमस्यरूप
क्रीतस्यपरिस्रुत्परिषिच्यते ॥ अश्विभ्यान्दुग्धम्भेषजमि
न्द्रायैन्द्रꣳसरस्वत्या ॥ १५ ॥ आसन्दीरूपम् ॥ आसन्दी
रूपꣳराजासन्द्यैवेद्यैकुम्भीसुराधानी ॥ अन्तरऽउत्तरवेद्यारू
पङ्कारोतरोभिषक् ॥ १६ ॥ वेद्यावेदिः ॥ वेद्यावेदिꣳसमा
प्यतेबर्हिषाबर्हिरिन्द्रियम् ॥ यूपेनयूपऽआप्यतेप्रणीतोऽ
अग्निरग्निना ॥ १७ ॥ हविर्द्धानꣳयत् ॥ हविर्द्धानꣳयद

श्विनाग्घ्रीङ्कूँ॒ष्यत्त्सरस्वती ॥ इन्द्रायैन्द्र॒ꣳसद॑स्कृ॒तम्पत्क्की॒शा
लुङ्गर्हिर्ंपत्त्यꣳ ॥ १८ ॥ प्रै॒षेभि॑÷प्प्रै॒षान् ॥ प्रै॒षेभि॑÷प्प्रै॒षा
नांप्प्रोत्त्या॒प्प्रीभि॑रा॒प्प्रीर्य॒ज्ञस्य॑ ॥ प्र॒या॒जेभि॑रनुया॒जान्वष॑ट्
का॒रेभि॒राहु॑तीꣳ ॥ १९ ॥ प॒शुभि॑÷प॒शून् ॥ प॒शुभि॑÷प॒शूनां
प्प्नोतिपु॒रोडाशैर्ह॒वीꣳष्या ॥ छन्दो॑भिꣳसामिधे॒नीर्य्या॒
ज्या॒भिर्व्वषट्का॒रान् ॥ २० ॥ धा॒नाꣳक॒रम्भ॒ꣳ । सक्क्तंव॒ꣳपरी

---

१ पुर दाशै इति पदम् । अत्र "पुरोदाशे" (शु य प्रा ३ अ ४४ सू ) इत्यनेन पुरशब्दघटितविसर्गस्य उकारे दाशशब्दघटितस्य दकारस्य मूर्धन्ये डकारे 'उवर्ण ओकारम्" (शु य प्रा ४ अ. ५४ सू ) इत्यनेन कव्यादकारादुत्तरे उवर्णे उभयो रकारोकारयोरोकारे पुरोडाशै. इति पदम् ।

वापःपयोदधि ॥ सोमस्यरूपᳪहविषऽआमिक्षावाजिनम्म
धु ॥ २१ ॥ धानानांᳪरूपम् ॥ धानानांᳪरूपङ्कुवलम्परी
वापस्यगोधूमाः ॥ सक्तूनांᳪरूपम्बदरमुपवाकाःकरम्भस्य
॥ २२ ॥ पयसोरूपम् ॥ पयसोरूपंयद्यवादध्नोरूपङ्कर्कन्धू
नि ॥ सोमस्यरूपंवाजिनᳪसौम्यस्यरूपमामिक्षा ॥ २३ ॥
आश्रावय ॥ आश्रावयेतिस्तोत्रियाःप्रत्याश्रावोऽअनु
रूपः ॥ यजेतिधाय्यारूपम्प्रगाथायेयजामहाः ॥ २४ ॥

अर्द्धऽऋचैरुक्थानाम् ॥ अर्द्धऽऋचैरुक्थानां ᳫरूपम्पदैरा
प्नोतिनिविर्दः ॥ प्रणवैःशस्त्राणां ᳫरूपम्पयंसासोमंऽआ
प्प्यते ॥ २५ ॥ अश्विभ्भ्यांम्प्रातःसवनम् ॥ अश्विभ्भ्यांम्प्रा
तःसवनमिन्द्रेणैन्द्रम्माद्ध्यन्दिनम् ॥ वैश्वदेवᳪसरंस्वत्त्यात्तृ
तीयमाप्तᳪसवनम् ॥ २६ ॥ व्वायव्यैर्व्वायव्यानि ॥ व्वायव्यैर्व्वा
यव्यान्याप्नोतिसतेनद्रोणकलशम् ॥ कुम्भीभ्भ्यामम्भृणौ
सुतेस्त्थालीभिंस्त्थालीराप्नोति ॥ २७ ॥ यजुर्भिराप्प्यन्ते ॥

यजुर्भिराप्प्यन्तेग्ग्रहाग्ग्रहैस्त्तोमाश्श्चविष्टुतीः ॥ छन्दोभिरु
क्थाशस्त्राणिसाम्म्नावभृथऽआप्प्यते ॥ २८ ॥ इडाभिर्भ्भु
क्षान् ॥ इडाभिर्भ्भक्षानाप्प्नोतिसूक्क्तवाकेनाशिषः ॥ शँय्यु
नापत्क्नीसँय्याजान्त्समिष्ट्टयजुषासँस्त्थाम् ॥ २९ ॥ व्व्रतेन
दीक्क्षाम् ॥ व्व्रतेनदीक्क्षामाप्प्नोतिदीक्क्षयाप्प्नोतिदक्क्षिणाम् ॥
दक्क्षिणाश्श्रद्धामाप्प्नोतिश्श्रद्धयासत्त्यमाप्प्यते ॥ ३० ॥ एताव

१ पत्क्नी सययाजान् । अत्र "भाविभ्य स प समानपदे" (शु य प्रा ३ अ ५६ सू ) इत्यनेन प्राप्तस्य षस्य "अनुसन्तनोतु०" (शु य प्रा ३ अ ८२ सू ) इत्यनेन निषेधे न षत्वम् । तत "अन्तस्थामन्तस्थास्वनुनासिका परसस्थानाम् । (शु य प्रा ४ अ १० सू ) इत्यनेन सम मकारस्य अन्तस्थे याजानपदे अन्तस्थामनुनासिकामापद्यते । इति षस्य यकारे अनुनासिके रूपम् ।

द्रूपम् ॥ एतावद्रूपँय्यज्ञस्ययद्देवैर्ब्रह्मणाकृतम् ॥ तदेतत्सर्व्व
माप्नोतियज्ञेसौत्रामणीसुते ॥ ३१ ॥ [२०-२] सुरावन्त
म्बर्हिषदम् ॥ सुरावन्तम्बर्हिषदꣳसुवीरँय्यज्ञꣳहिन्न्वन्तिम
हिषानमोभिः ॥ दधानाꣳसोमन्दिविदेवतासुमदेमेन्द्रँय्यज
मानाꣳस्वर्क्काः ॥ ३२ ॥ यस्ते ॥ यस्तेरसꣳसम्भृतऽओषधी
षुसोमस्यशुष्मꣳसुरयासुतस्य ॥ तेनजिन्न्वयजमानम्मदेनस
रस्वतीमश्विनाविन्द्रमग्निम् ॥ ३३ ॥ यमश्विना ॥ यम्

श्विनानमुचेरासुराद्धिसरस्वत्यसुनोदिन्द्रियाय ॥ इमन्तꣳ
शुक्रम्मधुमन्तमिन्दुꣳसोमꣳराजानमिह भक्षयामि ॥ ३४ ॥
यदत्र । रिप्तꣳरसिनः सुतस्ययदिन्द्रोऽअपिबच्छचीभिः ॥
अहन्तदस्यमनसाशिवेनसोमꣳराजानमिह भक्षयामि ॥ ३५ ॥
पितृभ्यः स्वधायिभ्यः । स्वधानमः पितामहेभ्यः स्वधा
यिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधान
मः ॥ अक्षन्पितरोमीमदन्तपितरोतीतृपन्तपितरः पितरः

शुन्धंद्ध्वम् ॥ ३६ ॥ पुनन्तुंमा । पितरं÷सोम्म्यासं÷पुनन्तुं
मापितामहाःपुनन्तुप्प्रपितामहाः ॥ पवित्त्रैणशुतायुंषा ॥
पुनन्तुंमापितामहाःपुनन्तुप्प्रपितामहाः ॥ पवित्त्रैणशुतायुं
षांविश्श्वमायुर्व्यंश्नवै ॥ ३७ ॥ अग्नुऽआयूंᳫंषि । पवसुऽ
आसुवोर्ज्जमिषंञ्चनः ॥ आरेबांधस्वदुच्छुनांम् ॥ ३८ ॥
पुनन्तुंमा । देवजनाःपुनन्तुमनंसाधियं÷ ॥ पुनन्तुविश्श्वां
भूतानिजातंवेदःपुनीहिमां ॥ ३९ ॥ पवित्त्रैणपुनीहि ।

माशुक्रेणदेवदीद्यंत् ॥ अग्नेक्रत्वाक्रतूँ१॥ऽरनु ॥ ४० ॥
यत्ते । पवित्रमर्च्चिष्यग्नेवितंतमन्तरा ॥ ब्रह्मतेनंपुनातुमा
॥ ४१ ॥ पवंमानःसः ॥ पवंमानःसोऽअद्यनः पवित्रेण
विर्चर्षणिः ॥ यःपोतासपुनातुमा ॥ ४२ ॥ उभाभ्यान्देव
सवितःपवित्रेणसवेनंच ॥ माम्पुनीहिविश्वतः ॥ ४३ ॥
वैश्वदेवीपुनती । देव्यागाद्यस्यामिमाबह्वयस्तन्वोवीतपृष्ठाः॥
तयामदन्तःसधमादेषुवयꣳस्यामपतयोरयीणाम् ॥ ४४ ॥

येसमानाः । समनसःपितरोयमराज्ये ॥ तेषाँल्लोकःस्वधा
नमोयज्ञोदेवेषुकल्पताम् ॥ ४५ ॥ येसमानाः । समनसो
जीवाजीवेषुमामकाः ॥ तेषांश्रीर्म्मयिकल्पतामस्मिँल्लो
केशतंसमाः ॥ ४६ ॥ द्वेसृती ॥ द्वेसृतीऽअशृणवम्पितृ
णामहन्देवानामुतमर्त्यानाम् ॥ ताभ्यामिदंविश्वमेजत्समे
तियदन्तरापितरम्मातरञ्च ॥ ४७ ॥ इदंहविः ॥ इदंह
विःप्रजननम्मेऽअस्तुदशवीरंसर्व्वगणंस्वस्तये ॥ आत्मस

सनिं प्रजासनिं[2] पशुसनिं लोकसन्यंभयसनिं ॥ अग्निः प्रजाम्ब

हुलाम्मेकरोत्त्वन्नम्पयोरेतोऽअस्म्मासुधत्त ॥४८॥ [१७-३]

उदीरताम् ॥ उदीरतामवरऽउत्परासऽउन्मंद्ध्यमाः पितरः सो

म्म्यासः ॥ असुँय्यऽईयुरवृकाऽऋतज्ञास्तेनोवन्तु पितरोह

वेषु ॥ ४९ ॥ अङ्गिरसोनः । पितरोनवग्ग्वाऽअथर्व्वाणोभृग

वः सोम्म्यासः ॥ तेषांव्वयꣳ सुमतौयज्ञियानामपिभद्द्रेसौमन

१-२ प्रजासनि पशुसनि "भा गेभ्य स प समानपदे" (शु य प्रा ३ अ. ५६ सू.) इत्यनेन पकारप्राप्तौ "अनुसन्तनोतु°" (शु य. प्रा ३ अ ८२ सू.) इत्यनेन निषिध्यते।

उपहूताꣳपितरः । सोम्म्यासो बर्हिष्ष्येषु निधिषु प्प्रियेषु ॥
तऽआगमन्तु तऽइह श्रुवन्त्वधिब्रुवन्तु तेवन्त्वस्म्मान् ॥ ५७ ॥
आयन्तु । नः पितरः सोम्म्यासोग्निष्ष्वात्ताः पथिभिर्द्देवयानैः ॥ अस्मिन्यज्ञे स्वधया मदन्तोधिब्रुवन्तु तेवन्त्वस्म्मान्
॥ ५८ ॥ अग्निष्ष्वात्ताः पितरः ॥ अग्निष्ष्वात्ताः पितरऽ
एहगच्छत सदः सदः सदत सुप्प्रणीतयः ॥ अत्ता हवीꣳषि
प्प्रयतानि बर्हिष्ष्यथा रयिꣳ सर्व्ववीरन्दधातन ॥ ५९ ॥ येऽ

ओग्निष्वात्ताः ॥ येऽअग्निष्वात्तायेऽअनग्निष्वात्ताम
ध्यैदिवःस्वधयामादयन्ते ॥ तेभ्यःस्वराडसुनीतिमेताँऽय
थावशन्तन्वङ्कल्पयाति ॥ ६० ॥ अग्निष्वात्तानृतुम
तः ॥ अग्निष्वात्तानृतुमतोहवामहेनाराशꣳसेसोमपीथँ
यऽआशुः ॥ तेनोविप्रासꣳसुहवाभवन्तुवयꣳस्यामपतयो
रयीणाम् ॥ ६१ ॥ [१३-४] आच्याजानु । दक्षिण
तोनिषद्येमँऽयज्ञमभिगृणीतविश्वे ॥ माहिꣳसिष्टपितरःकेन

च्छिन्नोयद्दूरऽआगं÷पुरुषताकराम ॥ ६२ ॥ आसीनासोऽअरु
णीनाम् ॥ आसीनासोऽअरुणीनामुपस्थेरयिन्धत्तदाशुषेम
र्त्याय ॥ पुत्रेभ्यः÷पितरस्तस्यवस्वः÷प्रयच्छततऽइहोर्ज्जन्द
धात ॥ ६३ ॥ यमग्ने । कव्यवाहनत्वञ्चिन्मन्यसेरयिम् ॥
तन्नोगीर्भिःश्रवाय्यन्देवत्रा[1]पनयायुजम् ॥ ६४ ॥ योऽअ
ग्निः । कव्यवाहनः पितॄन्यक्षदृतावृधः÷ ॥ प्रेदुहव्यानिवोच
तिदेवेभ्यश्चपितृभ्यऽआ ॥ ६५ ॥ त्वमग्ने ॥ त्वमग्नऽईं

१ पनय युजम् इति पदम्। अत्र "अयोढारियपनय॰" (शु य प्रा ३ अ ११३ सू ) इत्यनेन सूत्रोक्तपदाना यकारे परे दीर्घो विधीयते। तेन पनयायुजम्।

डितःकव्यवाहनावाड्ढ्व्यानिसुरभीणिकृत्वी ॥ प्रादाꣳपितृ
भ्यः स्वधयातेऽअक्षन्नद्धित्वन्देवप्रयताहवीꣳषि ॥ ६६ ॥
येच ॥ येचेहपितरोयेचनेहयाँश्चविद्मयाँ२॥ऽउचनप्प्रवि
द्म ॥ त्वंवेत्थयतितेजातवेदꣳस्वधाभिर्यज्ञꣳसुकृतञ्जुषस्व
॥६७॥ इदम्पितृभ्यः ॥ इदम्पितृभ्योनमोऽअस्त्वद्ययेपूर्वा
सोयऽउपरासऽईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनꣳसुवृ
जनासुविक्षु ॥६८॥ अध्यायथा । नꣳपितरꣳपरासꣳप्रत्नासोऽ

अग्नऽऋतमाशुषाणाः ॥ शुचीदयन्दीधितिमुक्थशासः क्षामा
भिन्दन्तोऽअरुणीरपव्रन् ॥ ६९ ॥ उशन्तस्त्वा ॥ उशन्तस्त्वा
निधीमह्युशन्तः समिधीमहि ॥ उशन्नुशतऽआवह पितॄन्हवि
षेऽअत्तवे ॥ ७० ॥ अपाम्फेनेन ॥ अपाम्फेनेन नमुचेः शिरऽ
इन्द्रोदवर्त्तयः ॥ विश्वा यदजय स्पृधः ॥ ७१ ॥ [ १०-५ ]
सोमोराजा ॥ सोमोराजामृतं सुतऽऋजीषेणाजहान्मृत्युम् ॥

१ पितॄन्हविषे । अत्र पितॄन् पदस्य नस्य "ऋपरेभ्य" (शु य प्रा ३ अ ८५ सू ) इत्यनेन समानपदे विधीयमान णत्व प्राप्तम् । परन्तु 'प्रकृत्या पदान्तीय" (शु य प्रा ३ अ ९० सू ) इत्यनेन पदान्तीयस्य नकारस्य णत्व नोपपद्यते । इति निषेधान्न णत्वम् ।

ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिद
म्पयोमृतम्मधु ॥ ७२ ॥ अद्भ्यःक्षीरम् ॥ अद्भ्यःक्षीरंव्यं
पिबत्कुङ्ङाङ्गिरसोधिया ॥ ऋतेनसत्यमिन्द्रियंविपानꣳ
शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७३ ॥ सो
मम्मद्भ्यः ॥ सोमम्मद्भ्योव्यपिबच्छन्दसाहꣳसःशुचिषत् ॥
ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमि
दम्पयोमृतम्मधु ॥ ७४ ॥ शतम् ॥ ११०० ॥ अन्नात्परिस्रु

तं÷ ॥ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्रम्पयःसोमम्प्र
जापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रमन्धसऽइन्द्र
स्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७५ ॥ रेतोमूत्रम् ॥ रेतोमूत्रं
विजहातियोनिम्प्रविशदिन्द्रियम् ॥ गर्ब्भोजरायुणावृतऽउ
ल्बञ्जहातिजन्मना ॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रम
न्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ७६ ॥ दृष्ट्वारूपे।
व्याकरोत्सत्यानृतेप्रजापतिः ॥ अश्रद्धामनृतेदधाच्छ्र

द्धाꣳसत्येप्रजापतिः॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रम
न्धसइन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ ७७ ॥ वेदेनरू
पे। व्यपिबत्सुतासुतौप्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंवि
पानꣳशुक्रमन्धसइन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु॥७८॥
दृष्ट्वापरिस्रुतः ॥ दृष्ट्वापरिस्रुतोरसꣳशुक्रेणशुक्रंव्यपिब
त्पयꣳसोमम्प्रजापतिः॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रम
न्धसइन्द्रस्येन्द्रियमिदम्पयोऽमृतम्मधु ॥ ७९ ॥ [८-६]

सीसेनतन्त्रम्[1] ॥ सीसेनतन्त्रम्मनसामनीषिणऽऊर्णासूत्रेणक
वयोव्वयन्ति ॥ अश्विनायज्ञꣳसवितासरस्वतीन्द्रस्यरूपंव्वरुणो
भिषज्यन् ॥ ८० ॥ तदस्य । रूपममृतꣳशचीभिस्तिस्रोद
धुर्देवताःसꣳरराणाः ॥ लोमानिशष्पैर्बहुधानतोक्मभि
स्त्वगस्यमाꣳसमभवन्नलाजाः ॥ ८१ ॥ तदश्विना । भिष
जारुद्रवर्त्तनीसरस्वतीव्वयतिपेशोऽअन्तरम् ॥ अस्थिमज्जान

१ सीसेन तन्त्रम् । अत्र "भाविभ्य स प समानपदे" ( शु य प्रा ३ अ. ५६ सू ) इत्यनेन षत्वापत्तौ "अनुमन्तनोतु०" । ( शु य. प्रा ३ अ ८५ सू ) इत्यनेन निषिध्यते । अतो न षकार इत्यर्थः ।

स्मासैरैःकारोतरेणदधंतोगवान्त्वचि ॥ ८२ ॥ सरस्वतीम
नंसा । पेशलंव्वसुनासंत्त्याभ्यांव्वयतिदर्शतंव्वपुः ॥ रसंम्प
रिस्रुतानरोहितन्नग्नहुर्द्धीरस्तसंरन्नवेमं ॥ ८३ ॥ पयंसाशुक्क
मू ॥ पयंसाशुक्कममृतंज्जनित्रंहसुरयामूत्राज्जनयन्तुरेतः ॥
अपामंतिन्दुर्म्मतिम्बाधमानाऽऊर्वध्यंव्वातंᳶसब्बुन्तदारात्
॥ ८४ ॥ इन्द्रःसुत्रामा ॥ इन्द्रःसुत्रामाहृदयेनसत्त्यम्पुरो
डाशेनसविताजंजान ॥ सक्कंत्त्क्षोमानंव्वरुणोभिषुज्ज्यक्ष्मतस्त्रे

वा॒युर्य्यैर्न्नमि॑नातिपि॒त्तम् ॥ ८५ ॥ आ॒न्त्राणि॑स्त्था॒लीः ॥ आ॒न्त्रा
णि॑स्त्था॒लीर्म्मधु॑पिन्न्व॑माना॒गुदाःपात्रा॑णिसु॒दुघा॒न्धे॒नुः ॥ श्ये॒
नस्य॒पत्र॒न्नप्लीहा॒शची॑भिरासन्दीनाभि॑रु॒दरन्नमा॒ता ॥८६॥ कु॒
म्भोव॑नि॒ष्ठुः ॥ कु॒म्भोव॑नि॒ष्ठुर्ज्जनि॑ता॒शची॑भि॒र्य्यस्मि॒न्नग्ग्रे॒यो
न्याङ्गर्भोऽअ॒न्तः ॥ प्ला॒शिर्व्यक्तःश॒तधा॑र॒ऽउत्सो॑दु॒हेन्नकु॒
म्भीस्व॒धाम्पि॒तृभ्यः॑ ॥८७॥ मु॒खꣳस॒त् ॥ मु॒खꣳसद॑स्य॒शिर॒ऽ
इत्सतेनजि॒ह्वाप॒वित्र॑म॒श्विना॒सन्त्सर॑स्वती ॥ चप्प॒न्नपा॒युर्भि॒

पयंस्यवालोवस्तिर्न्नशेपोहरसातरस्वी ॥ ८८ ॥ अश्विभ्या
ञ्चक्षुः ॥ अश्विभ्याञ्चक्षुरमृतङ्ग्रहाभ्याञ्छागेनतेजोहवि
षाशृतेन ॥ पक्ष्माणिगोधूमैःकुवलैरुतानिपेशोनशुक्रमसितं
वसाते ॥ ८९ ॥ अविर्न्न । मेषोनसिवीर्य्यायप्राणस्यपन्थाऽ
मृतोग्रहाभ्याम् ॥ सरस्वत्युपवाकैर्व्यानन्नस्यानिबर्हिर्ब
दरैर्जजान ॥ ९० ॥ इन्द्रस्यरूपम् ॥ इन्द्रस्यरूपमृषभोब
लायकर्णाभ्याᳪंश्रोत्रममृतङ्ग्रहाभ्याम् ॥ यवानबर्हिर्भ्रु

विकेसंराणिकुर्क्कन्धुंजङ्मधुंसारुघम्मुखात् ॥ ९१ ॥ आत्मन्न्नुपस्त्थे ॥ आत्मन्न्नुपस्त्थेनवृकंस्युलोमुमुखेश्म्मश्श्रूणिन्न्यांग्घ्रलोम ॥ केशानशीर्षन्न्यशंसेश्श्रियैशिखासिंहस्युलोमत्त्विषिरिन्द्रियाणि ॥ ९२ ॥ अङ्गान्न्यात्मन् ॥ अङ्गान्न्यात्मन्भिषजातदश्श्विनात्मानमङ्गैःसमंधात्सरंस्वती ॥ इन्द्रंस्यरूपᳬशतमानमायुंश्श्चन्द्रेणज्ज्योतिरमृतन्दधानाः ॥ ९३ ॥ सरंस्वतीयोन्न्यांम् ॥ सरंस्वतीयोन्न्याङ्गर्भमन्तरश्श्विभ्यांम्प

श्रिये

त्क्षीसुकृतम्बिभर्त्ति ॥ अपांरसेनवरुणोनसाम्नेन्द्रंश्रियै जनयन्नप्सुराजा ॥ ९४ ॥ तेजःपशूनाम् ॥ तेजःपशु अश्विनांहविरिन्द्रियावंत्परिस्रुतापयंसासारघम्मधु ॥ अश्वि नांहविरिन्द्रियावंत्परिस्रुतापयंसासारघम्मधु ॥ सोमइ भ्यांदुग्धम्भिपजासरस्वत्यासुतासुताभ्याम्मृतंसोमइ न्दुः ॥ ९५ ॥ [ १६-७ ] इतिश्रीवाजसनेयसंहितायामेकोन विंशतितमोऽध्यायः ॥ १९ ॥ श्रीवेदपुरुषायनमः ॥ अनु

[illegible]

वाकसूत्रम् ॥ क्षत्रस्ययोनिस्त्रयोदश, सद्देवादश, म्यादध्धा
म्यष्टौ, योभूतानाङ्गतस्त्र:, समिद्धऽइन्द्रऽएकादश, ऽआया
त्वष्टौ, समिद्धोऽअग्निर्द्वादश, श्विनाहविस्त्रयोदश, श्विना
तेजसैकादश, नव नवति: ॥ [अ. २० मं. ९० अ. ९]
हरि: ॐ ॥ क्षुत्रस्युयोनि÷ ॥ क्षुत्रस्युयोनिरसिक्षुत्रस्युनाभि
रसि ॥ मात्त्वांहिꣳसीन्मामांहिꣳसीः ॥ १ ॥ निषसाद ।
धृतव्व्रतोव्वरुणःपस्त्त्यास्वा ॥ साम्म्राज्ज्यायसुक्रतु÷ ॥ मृत्त्योः

पाहिविद्योत्त्पाहि ॥ २ ॥ देवस्यंत्त्वा । सवितुःप्प्रंसवेश्विनो
र्बाहुब्भ्यांम्पूष्णोहस्त्ताब्भ्याम् ॥ अश्विनोर्ब्भैषज्ज्येनतेजंसे
ब्ब्रह्मवर्च्चसायाभिषिञ्चामिसरंस्वत्त्यैभैषज्ज्येनवीर्य्यायान्नाद्या
याभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियैयशसेभिषिञ्चामि
॥ ३ ॥ कोसि । कतमोसिकस्म्मैत्त्वाकायंत्त्वा ॥ सुश्श्लोक
सुमंङ्गलसत्त्यंराजन् ॥ ४ ॥ शिरोमे ॥ शिरोमेश्श्रीर्य्यशोमु
खन्त्विषिःकेशाश्श्चश्म्मश्श्रूणि ॥ राजामेप्प्राणोऽअमृतंᳪसम्म्राा

द्दृचक्षुर्व्विराड्श्रोत्रम् ॥ ५ ॥ जिह्वामे । मुद्द्रंवाङ्महोमनोम्
न्न्युःस्वराड्भामं÷ ॥ मोदांःप्प्रमोदाऽअङ्गुलीरङ्गांनिमित्रम्मे
सहं÷ ॥ ६ ॥ बाहूमे ॥ बाहूमेबलंमिन्द्रियᳬंहस्तौमेकर्म्म
वीर्य्यम् ॥ आत्कमाक्षत्रमुरोममं ॥ ७ ॥ पृष्टीर्म्मे । राष्ट्रमु
दरमᳬंसौग्ग्रीवाश्चश्श्रोणी । ऊरूऽअंरत्नीजानुंनीविशोमेङ्गां
निसर्व्वतं÷ ॥ ८ ॥ नाभिर्म्मे । चित्तंविज्ञानंम्पायुर्म्मेपंचिति
र्भसत् ॥ आनन्दनन्दावाण्डौमेभगःसौभांग्ग्यम्पसं÷ ॥

जङ्घाभ्याम्पद्भ्यान्धर्म्मोऽस्मि विशि राजा प्प्रतिष्ठितꣳ ॥ ९ ॥
प्रति क्षत्रे । प्प्रतितिष्ठामि राष्ट्रे प्प्रत्यश्श्वेषु प्प्रतितिष्ठामि गोषु
प्प्रत्यङ्गेषु प्प्रतितिष्ठाम्म्यात्मन्न्प्रति प्प्राणेषु प्प्रतितिष्ठामि पुष्टे
प्प्रति द्यावापृथिव्व्योः प्प्रतितिष्ठामि यज्ञे ॥ १० ॥ त्र्यादेवाः ॥
त्र्यादेवाऽएकादशत्त्रयस्त्रिꣳशाः सुराधसꣳ ॥ बृहस्प्पतिपुरोहि
तादेवस्यꣳसवितुः सवे ॥ देवादेवैरवन्तुमा ॥ ११ ॥ प्रथमाद्वि
तीयैꣳ ॥ प्रथमाद्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाꣳ सत्त्येनस

र्यँस्यज्ञेनं यज्ञो यजुर्भिर्य्यजूंᳪषि सामभिः सामान्यृग्भिर्ऋ
चंः पुरोनुवाक्याभिः पुरोनुवाक्यायाज्ज्याभिर्य्याज्ज्यावषट्का
रैर्व्वषट्काराऽआहुतिभिराहुतयो मे कामान्त्समर्द्धयन्तु भूः स्वा
हा ॥ १२ ॥ लोमानि प्प्रयतिः ॥ लोमानि प्प्रयतिर्म्मम त्वङ्मऽ
आनतिरागतिः ॥ माᳪसम्मऽउपनतिर्व्वस्वास्थि मज्जा मऽआ
नतिः ॥ १३ ॥ [ १३-१ ] यद्देवाः ॥ यद्देवा देवहेडनन्देवा ॥२२१॥

१ पुरोनुवाक्याभि । अत्र समानपदे "ऋपरेभ्यो णकार समानपदे" ( शु य प्रा ३ अ ८५ सू ) इत्यनेन णत्वप्राप्तौ "इन्द्राग्नी चित्रमान्ते" ( शु य प्रा ३ अ ९३ सू ) इत्यनेन निषेधान्न णत्वम् ।

सिचकृमावयम् अग्निर्म्मातस्म्मादेनंसोविश्वान्मुञ्चत्वंहं
सः ॥ १४ ॥ यदिदिवा ॥ यदिदिवायदिनक्तमेनांॐसिचकृ
मावयम् ॥ वायुर्म्मातस्म्मादेनंसोविश्वान्मुञ्चत्वंहंसः
॥ १५ ॥ यदिजाग्ग्रत् ॥ यदिजाग्ग्रद्यदिस्वप्नऽएनांॐ
सिचकृमावयम् ॥ सूर्य्योमातस्म्मादेनंसोविश्वान्मुञ्चत्वंहं
हंसः ॥ १६ ॥ यद्ग्रामे ॥ यद्ग्रामेयदरण्येयत्सभायां
ऽयदिन्द्रिये ॥ यच्छूद्रेयदर्य्येयदेनश्चकृमावयंयदेकस्या

र्धिधर्म्मीणितस्यांवुयजांनमासि ॥ १७ ॥ यद्दापं॑ ॥ यदा
पोंऽअग्घ्याऽइतिव्वरुणोतिशपांमहेततोंव्वरुणनोमुञ्च ॥ अवं
भृथनिचुम्पुणनिचेरुरसिनिचुम्पुणः ॥ अवंदेवैर्देवकृतमेनोयं
क्ष्यवमर्त्यैर्म्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पाहि ॥ १८ ॥ सुमु
द्रेते ॥ सुमुद्रेतेहृदंयमप्स्वन्तःसन्त्वांविशन्त्वोषंधीरुतापं॑ ॥
सुमित्रियानुऽआपुऽओषंधयः सन्तुदुर्म्मित्रियास्तस्मैस
न्तुयोस्मान्द्वेष्टियञ्चंवयन्द्विष्मः ॥ १९ ॥ द्रुपदादिवमुमु

चानः । स्विन्नःस्नातोमलादिव ॥ पूतम्पवित्रेणेवाज्यमापः
शुन्धन्तुमैनसꣳ ॥ २० ॥ उद्वयम् ॥ उद्वयन्तमसस्परिस्वः
पश्यन्तऽउत्तरम् ॥ देवन्देवत्रासूर्य्यमगन्मज्योतिरुत्तमम्
॥ २१ ॥ अपोऽअद्य ॥ अपोऽअद्यान्वचारिषꣳरसेनसमसृ
क्ष्महि ॥ पयस्वानग्नऽआगमन्तम्मासꣳसृजवर्चसाप्रजया
चधनेनच ॥ २२ ॥ एधोसि ॥ एधोस्येधिषीमहिसमिदसि
तेजोसितेजोमयिधेहि ॥ समाववर्त्तिपृथिवीसमुषाःसमुसू

रुयीं ÷ ॥ समुद्विश्वमिदञ्जगत् ॥ वैश्वानरज्ज्योतिर्भूयासंवि
भूक्कामान्व्यश्नवैभूःस्वाहा ॥ २३ ॥ [ १०-२ ] ॥ अुब्भ्या
दंधामि । सुमिधमग्नेव्रतपतेत्त्वयि ॥ व्रुतञ्चश्रुद्धाञ्चोपैमी
न्धेत्त्वांदीक्षितोऽअहम् ॥ २४ ॥ यत्रुब्रह्म । चक्षत्रञ्चसम्म्य
ञ्चौचरंतह्सह ॥ तँल्लोकम्पुण्ण्यम्प्रज्ञेषँय्यत्रदेवाःसहाग्निना
॥ २५ ॥ यत्रेन्द्रं ÷ ॥ यत्रेन्द्रश्चवायुश्चसम्म्यञ्चौचरंतह्सह ॥
तँल्लोकम्पुण्ण्यम्प्रज्ञेषँय्यत्रसेदिर्न्नविद्यते ॥ २६ ॥ अुह्शुना

ते ॥ अँशुनातेऽअँशुःपृच्यताम्परुषापरुः ॥ गन्धस्तेसो
मंमवतुमदायरसोऽअच्युतः ॥ २७ ॥ सिञ्चन्तिपरि । षिञ्च
न्त्युत्सिञ्चन्तिपुनन्तिच ॥ सुरायैबभ्र्वैमदेकिन्त्वोवदतिकि
न्त्वः ॥ २८ ॥ धानावन्तङ्करम्भिणम् ॥ धानावन्तङ्करम्भि
णंमपूपवन्तमुक्थिनम् ॥ इन्द्रप्प्रातर्ज्जुषस्वनः ॥ २९ ॥ बृह
दिन्द्राय । गायतमरुतोवृत्रहन्तमम् ॥ येनज्ज्योतिरजनयन्नृ
तावृधोदेवन्देवायजागृवि ॥ ३० ॥ अर्द्धस्थोऽअद्रिभिः ।

सुत६ꣳसोमम्पवित्त्रऽआनय ॥ पुनाहीन्द्रायपातवे ॥ ३१ ॥
[ ८-३ ] योभूतानाम् ॥ योभूतानामधिपतिर्य्यस्मिँल्लोकाऽ
अधिश्श्रिताः ॥ यऽईशेमहतोमहाँस्तेनगृह्णामित्त्वामहम्म
यिगृह्णामित्त्वामहम् ॥ ३२ ॥ उपयामगृहीतोसि ॥ उपयाम
गृहीतोस्यश्विब्भ्यान्त्वासरस्वत्त्यैत्त्वेन्द्रायत्त्वासुत्राम्म्णऽएष
तेयोनिरश्विब्भ्यान्त्वासरस्वत्त्यैत्त्वेन्द्रायत्त्वासुत्राम्म्णे ॥ ३३ ॥
प्राणपामे ॥ प्राणपामेऽअपानपाश्चक्षुष्पाःश्रोत्त्रपाश्चमे ॥

सोसिविलायकं ॥ ३४ ॥ अश्विनं
वाचोमेविश्वभेषजोमनसोसिविलायकं ॥ ३४ ॥ अश्विनं
वाचोमेविश्वभेषजोमनसोसिविलायकं ॥ ३४ ॥ अश्विनं
वाचोमेविश्वभेषजोमनसोसिविलायकं ॥ ३४ ॥ अश्विनं

मानस्तनूनपात्प्रतियज्ञस्यधाम ॥ गोभिर्वपावान्मधुनासम
ञ्जन्हिरण्यैश्चन्द्रीयजतिप्रचेताः ॥ ३७ ॥ ईडितोदेवैः ॥
ईडितोदेवैर्हरिवाँ२॥ऽअभिष्टिराजुह्वानोहविषाशर्द्धमानः ॥
पुरन्दरोगोत्रभिद्वज्रबाहुरायातुयज्ञमुपनोजुषाणः ॥ ३८ ॥
जुषाणोबर्हिः ॥ जुषाणोबर्हिर्हरिवान्नऽइन्द्रः प्राचीनंᳯसीद
त्प्रदिशापृथिव्याः ॥ उरुप्रथाः प्रथमानᳯस्योनमादित्यैर
क्तंवसुभिःसजोषाः ॥ ३९ ॥ इन्द्रन्दुरः । कवष्योधावमा

द्वारो॑दे॒वीर॒भितो॒ विश्र॑यन्ताᳬँ सु॒वीरा॑ वी॒रम्प्रथ॑माना॒ महो॑भिः ॥ ४० ॥ उ॒षासा॒नक्ता॑ बृ॒हती॒ बृह॑न्तम्पय॑स्वती सु॒दुघे॒ शूर॒मिन्द्र॑म् ॥ तन्तु॑न्त॒तम्पेश॑सा सं॒वय॑न्ती दे॒वाना॑न्दे॒वँय॑जतᳬँ सुरु॒क्मे ॥ ४१ ॥ दैव्या॒ मिमा॑ना॒ मनु॑षᳬः पुरु॒त्रा होता॑रा॒विन्द्र॑म्प्रथ॒मा सु॒वाचा॑ ॥ मू॒र्द्धन्य॒ज्ञस्य॒ मधु॑ना॒ दधा॑ना प्रा॒चीन॒ञ्ज्योति॑र्ह॒विषा॑ वृधा॒ना ॥

१ प्रथमानामहोभि उषासा। अत्र "उपमहोभि" (शु य प्रा ३ अ ११९ सू.) इत्यनेन उप इत्यस्य ह्रस्वो दीर्घमापद्यते महोभि नक्त इम् इकार-एकारौकारनकारेभ्य परश्चेत्। तेन महोभि परस्य उपशब्दाकारस्य दीर्घाकार.। अत्र महोभि शब्दात्पर उपशब्दो वर्तते। २ प्राचीनज्योति । अत्र "स्वर-यवहकपैश्च" इत्यनेनैतैरेवव्यवधाने समानपदे "ऋपरेभ्यो नकारो णकार समानपदे" (शु य प्रा ३ अ ८२ सू ) इत्यनेन विधीयमानस्य णत्वस्यात्र

तहं ॥ ४२ ॥ तिस्रोदेवीः ॥ तिस्रोदेवीर्हविषावर्द्धमानाऽइ
न्द्रंजुषाणाजनयोनपत्नीः ॥ अच्छिन्नन्तन्तुम्पयसासरस्व
तीडादेवीभारतीविश्वतूर्त्तिः ॥ ४३ ॥ त्वष्टादधत् ॥ त्वष्टाद
धच्छुष्ममिन्द्रायवृष्णेपाकोचिंष्टुर्य्यशसेपुरूणि ॥ वृषाय
जन्वृषणम्भूरिरेतामूर्द्धन्यज्ञस्यसमनक्तुदेवान् ॥ ४४ ॥ वन
स्प्पतिरवसृष्टः ॥ वनस्प्पतिरवसृष्टोनपाशैस्त्मन्यासमञ्ज

व्यवधानोक्तातिरिक्तचवर्गस्य व्यवधानेनाप्राप्त णत्व "शिलिसिवर्गमध्यमव्यवहितोऽपि०" (शु य प्रा ३ अ. ९६ सू ) इत्यनेन शकार-लकार-सकार-व्यवहितो मध्यमवर्गैश्चटतवर्गैर्व्यवहित ऋपरेभ्य उत्तरो नकार प्रकृत्या भवति । इति णकारो निषिध्यते तच्छिष्यबुद्धिव्युत्पत्त्यर्थम् ।

न्धोमितानदेवः ॥ इन्द्रंस्यहृव्यैर्ज्जठरम्पृणानःस्वदातियज्ञ
म्मधुनाघृतेन ॥ ४५ ॥ स्तोकानामिन्दुम् ॥ स्तोकाना
मिन्दुम्प्रतिशूरऽइन्द्रोवृषायमाणोवृषभस्तुराषाट् ॥ घृतप्रु
षामनसामोदमानाःस्वाहादेवाऽअमृतामादयन्ताम् ॥ ४६ ॥
[ ११-५ ] आयातु ॥ आयात्विन्द्रोवसऽउपनऽइहस्तु
तःसधमादस्तुशूरः ॥ वावृधानस्तविषीर्य्यस्यपूर्वीर्द्यौर्न
क्षत्रमभिभूतिपुष्यात् ॥ ४७ ॥ आनः ॥ आनऽइन्द्रो

१ वृषायमाण । अत्र यकारे परे वृषशब्दाकारस्य "अथोदारिथ" (शु य प्रा ३ अ ११५ सू ) इत्यनेन दीर्घः ।

दूरादानऽआसादमभिहूिकृद्वंसेयासदुग्ग्रः ॥ ओजिष्ठेभिर्न्नृपति
र्व्वज्ज्रबाहुःसङ्गेसमत्सुतुर्व्वणिःपृतन्न्यून् ॥ ४८ ॥ आनः ॥
आनऽइन्द्रोहरिभिर्य्यात्वच्छार्व्वाचीनोवसेराधसेच ॥ तिष्ठा
तिव्वज्ज्रीमघवाव्विरप्प्शीमँय्यज्ञमनुनोव्वाजसातौ ॥ ४९ ॥
त्रातारमिन्द्रम् ॥ त्रातारमिन्द्रमवितारमिन्द्रहहवेहवेसुहवह
शूरमिन्द्रम् ॥ ह्वयामिशक्क्रम्पुरुहूतमिन्द्रस्वस्तिनोमघवा
धात्त्विन्द्रः ॥ ५० ॥ इन्द्रःसुत्रामा ॥ इन्द्रःसुत्रामास्व

वाँ॒ २॥ ऽअवो॑भिः॒सुमृ॒डीको भ॑वतुवि॒श्ववे॑दाः ॥ बाध॑तान्द्वेषो॒ऽ
अभ॑यङ्कृणोतुसु॒वीर्य॑स्य॒पत॑यः॒स्याम ॥ ५१ ॥ तस्य॑व्व॒यम् ॥
तस्य॑व्व॒यꣳ सु॑म॒तौय॒ज्ञिय॒स्यापि॑भ॒द्रेसौ॑मन॒सेस्या॑म ॥ सस॒त्रा
मा॒स्ववाँ॒ऽइन्द्रो॑ऽअ॒स्मेऽआ॒रा॒च्चि॒द्द्वेषः॑ सनु॒तर्यु॑योतु ॥ ५२ ॥
आम॒न्द्रैः ॥ आम॒न्द्रैरि॑न्द्र॒हरि॑भि॒र्याहि॑म॒यूर॑रोमभिः ॥
मात्त्वा॒केचि॒न्नियं॑म॒न्विन्नपा॒शिनो॑ति॒धन्वे॑व॒ताँ २॥ऽइ॑हि॥ ५३ ॥
ए॒वेत् ॥ ए॒वेदिन्द्रं॒वृष॑णं॒वज्र॑बाहुं॒वसि॑ष्ठासोऽअ॒भ्य॒र्च॒न्त्य॒

कैः ॥ सनंस्तुतोवीरवद्धातुगोमंद्युयम्पातस्वस्तिभिःसदांनः
॥ ५४ ॥ [ ८-६ ] समिद्धोऽअग्निः ॥ समिद्धोऽअग्निरश्वि
नातप्तोघर्म्मोविराट्सुतः ॥ दुहेधेनुःसरंस्वतीसोमंꣳशुक्रमि
हेन्द्रियम् ॥ ५५ ॥ तनूपाभिषजा । सुतेश्विनोभासरंस्वती ॥
मद्ध्वारजांꣳसीन्द्रियमिन्द्रायपथिभिर्वहान् ॥ ५६ ॥ इन्द्रा
येन्दुम् ॥ इन्द्रायेन्दुꣳसरंस्वतीनराशꣳसेननग्नहुम् ॥ अधा
तामश्विनामधुभेषजम्भिषजासुते ॥ ५७ ॥ आजुह्वानासरं

॥२२८॥

स्वती ॥ आजुह्वानासरस्वतीन्द्रायेन्द्रियाणिवीर्यम् ॥ इडा
भिरश्विनाविषꣳसमूर्जꣳसꣳरयिन्दधुः ॥ ५८ ॥ अश्विनान
मुचेः । सुतꣳसोमꣳशुक्रम्परिस्रुता ॥ सरस्वतीतमाभरद्ब
र्हिषेन्द्रायपातवे ॥५९॥ कवष्योन । व्यचस्वतीरश्विभ्यान्न
दुरोदिशः ॥ इन्द्रोनरोदसीऽउभेदुहेकामान्त्सरस्वती ॥६०॥
उषासानक्तम् ॥ उषासानक्तमश्विनादिवेन्द्रꣳसायमिन्द्रि
यैः ॥ सञ्जानानेसुपेशसासमञ्जातेसरस्वत्या ॥६१॥ पातन्नः ॥

पातन्नोऽअश्विनादिवांपाहिनक्तᳫंसरस्वति ॥ दैव्यांहोतारा
भिषजापातमिन्द्रᳫंसचासुते ॥ ६२ ॥ तिस्रस्त्रेधा । सरस्वत्य
श्विनाभारतीडा ॥ तीव्रम्परिस्रुतासोममिन्द्रायसुषुवुर्म्मदम्
॥ ६३ ॥ अश्विनाभेषजम् ॥ अश्विनाभेषजम्मधुभेषजन्नᳫं
सरस्वती ॥ इन्द्रेत्त्वष्ट्रायशःश्रियᳫंरूपᳫंरूपमधुᳫंसुते ॥६४॥
ऋतुथेन्द्रः ॥ ऋतुथेन्द्रोवनस्पतिःशशमानःपरिस्रुता ॥
कीलालमश्विभ्याम्मधुदुहेधेनुःसरस्वती ॥ ६५ ॥ गोभिर्न्न ।

सोमंमाश्विनामासंरेणपरिस्रुतौ ॥ समंधातहुसरंस्वत्त्यास्वाहे
न्द्रैसुतम्मधुं ॥ ६६ ॥ [१२-७] अश्विनांहुविः ॥ अश्वि
नांहुविरिंन्द्रियन्नमुंचेर्द्धियासरंस्वती ॥ आशुक्क्रमांसुराद्धसुंम
घमिन्द्रांयजभ्रिरे ॥ ६७ ॥ यमश्विनां ॥ यमश्विनासरं
स्वतीहुविषेन्द्रमवंर्द्धयन् ॥ सबिंभेदब्बलम्मुघन्नमुंचावासुरेस
चां ॥ ६८ ॥ तमिन्द्रंम् ॥ तमिन्द्रम्पशवहसचाश्विनोभासरं
स्वती ॥ दधांनाऽअभ्यनूषतहुविषांयज्ञऽइंन्द्रियैः ॥ ६९ ॥

यऽइन्द्रे ॥ यऽइन्द्रंऽइन्द्रियन्दुधुःसंवितावरुणोभगः ॥ ससु
त्रामांहुविष्पांतिर्य्यजंमानायसश्चत ॥७०॥ सवितावरुणं ॥
सवितावरुणोदधुद्यजंमानायदाशुषे ॥ आदंत्तनमुचेर्व्वसुंसुत्रा
माबलंमिन्द्रियम् ॥७१॥ वरुणंक्षुत्रम् ॥ वरुणंक्षुत्रमि
न्द्रियम्भगेनसवितांश्रियंम् ॥ सुत्रामायशंसाबलन्दधांनाय
ज्ञमांशत ॥ ७२ ॥ अश्विनागोभिः ॥ अश्विनागोभिरिन्द्र
यमश्वेभिर्व्वीर्य्यम्बलंम् ॥ हविषेन्द्रसरंस्वतीयजंमानमवर्द्ध

यन् ॥ ७३ ॥ तानासंत्त्या । सुपेशंसाहिरंण्ण्यवर्त्तनीनरां ॥
सरंस्वतीहुविष्म्मुतीन्द्रकर्म्मंसुनोवत ॥ ७४ ॥ ताभिषजां ।
सुकर्म्मंणासासुदुघासरंस्वती ॥ सव्वृंत्रहाशतक्क्रंतुरिन्द्रांयदधु
रिन्द्रियम् ॥ ७५ ॥ युवꣳसुरामंम् ॥ युवꣳसुराम्मंम
श्विनानमुंचावासुरेसचां ॥ विपिपानाःसंरस्वतीन्द्रङ्कर्म्मं
स्वावत ॥ ७६ ॥ पुत्रमिंवपितरौं ॥ पुत्रमिंवपितरांव
श्विनोभेन्द्रावथुःकाव्यैर्दꣳसनांभिः ॥ यत्सुरामंव्यापिंबःश

चीभिꣳसरस्वतीत्त्वामघवन्नभिष्णक् ॥ ७७ ॥ यस्मिन्नश्वा
श्वासऽऋषभासऽउक्षणो॑व्व॒शामे॒षाऽअ॑वसृ
ष्टासऽआहुताः ॥ कीलालपेसोमपृष्ठायव्वेधसेहृदामतिञ्जनय
चारुमग्नये ॥ ७८ ॥ अहाव्यग्ने । हविरास्येतेस्रुचीवघृत
ञ्चम्वीवसोमः ॥ व्वाजसनिꣳरयिमस्मेसुवीरम्प्रशस्तन्धे
हियशसम्बृहन्तम् ॥ ७९ ॥ [१३-८] शतम् १२०० ॥
अश्विनातेजसा ॥ अश्विनातेजसाचक्षुःप्राणेनसरस्वतीव्वी

ष्यम् ॥ व्वाचेन्द्रोबलेनेन्द्रायदधुरिन्द्रियम् ॥ ८० ॥ गोमँ[1]
दूषुणासत्त्या ॥ गोमदूषुणासत्त्याश्श्वावद्यातमश्श्विना ॥ व्वर्त्ती
रुद्रानृपाय्यम् ॥ ८१ ॥ नयत् ॥ नयत्त्परोनान्तरऽआदध
र्षद्वृषण्णवसू ॥ दुःशऽसोमत्त्योरिपुः ॥ ८२ ॥ तानः ॥
तानऽआवोढमश्श्विनारयिम्पिशङ्गसन्दृशम् ॥ धिषण्ण्यावारि
वोविदम् ॥ ८३ ॥ पावकानः ॥ पावकानःसरस्वतीव्वाजे

[1] गोमदूषु णासत्या । अत्र समानपदत्वाभावेन णत्वाप्राप्तौ "निपण्णाय°" (शु य प्रा ३ अ ८७ सू ) इत्यनेन णत्वस्य निपात ।

भिर्व्वाजिनीवती ॥ युज्ञंव्वष्टुधियावसुः ॥ ८४ ॥ चोदुयित्री सूनृतानाम् ॥ चोदुयित्रीसूनृतानाञ्चेतन्तीसुमतीनाम् ॥ युज्ञन्दधेसरस्वती ॥ ८५ ॥ महोऽअर्णः ॥ महोऽअर्णः सरस्वतीप्रचेतयतिकेतुना ॥ धियोव्विश्वाव्विराजति ॥ ८६ ॥ इन्द्रायाहि । चित्रभानोसुताऽइमेत्त्वायवः ॥ अण्वीभिस्त्त नापूतासः ॥ ८७ ॥ इन्द्रायाहि । धियेषितोव्विप्रजूतः

१ चित्रभानो । अत्र समानपदे "ऋपरेभ्य" इत्यनेन भस्य व्यवधानेनाप्राप्तो "स्वरयवहकपैश्च" इत्यनेन पवर्गव्यवधानेऽपि णत्वप्रतिप्रसवेन पुनर्णत्वप्राप्तौ "इन्द्राग्नी चित्रभानो०" ( शु य प्रा ३ अ ९३ सू ) इत्यनेन निषिद्ध्यते ।

सुतावंतः[1] ॥ उपब्रह्माणिवाघतः ॥ ८८ ॥ इन्द्रायाहि ॥
इन्द्रायाहितूतुंजानऽउपब्रह्माणिहारिवः ॥ सुतेदंधिष्वनुश्च
नः ॥ ८९ ॥ अश्विनापिबताम् ॥ अश्विनापिबताम्मधुसरं
स्वरयासुजोषसा ॥ इन्द्रःसुत्रामावृत्रहाजुषतांसोम्यम्म
धु ॥ ९० ॥ [११-९] इतिश्रीवाजसनेयसंहितायांविंशति-
तमोऽध्यायः ॥ २० ॥ पूर्वाविंशतौ मंत्रसंख्या १२११ ॥

१ सुतावत्' । अत्र "अश्वरश्मिमतिसुमतिश्वसुत" (शु य. प्रा. ३ अ ९८ सू ) इत्यनेन वकारे परे सुतस्याकारस्य दीर्घः ।

इति श्रीवाजसनेयसंहितायां पूर्वविंशतिः समाप्ता ॥

# अथ श्रीवाजसनेयसंहितोत्तरविंशतिप्रारम्भः ॥

॥ श्रीगणेशायनमः ॥ अनुवाकसूत्रम् ॥ इमम्मे, समिद्धोऽ
अग्निरेकादशकौ, व्वसन्तेनऽऋतुना षड्, होतायक्षत्त्समिधा
मिन्द्राद्वादशा, श्विनौच्छागस्य सप्त, देवम्बर्हिश्चतुर्द्दश, षडेक
षष्टिः [अ. २१ मं. ६१ अनु. ६]॥ हरिःॐ ॥ इमम्मे। व्वरु
णश्श्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ १ ॥ तत्त्वा।
यामिब्ब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ ॥ १ ॥
अहेडमानोव्वरुणेहबोद्ध्युरुशꣳसमानऽआयुःप्प्रमोषीः ॥ २ ॥

त्वन्नं÷ ॥ त्वन्नोऽअग्ग्नेव्वरुणस्यव्विद्वान्देवस्यहेडोऽअवंयासि सीष्ठाः ॥ यजिष्ठोव्वह्नितमःशोशुचानोव्विश्श्वाद्वेषांᳬसिप्प्रमुमु ग्ध्यस्म्मत् ॥ ३ ॥ सत्त्वम् ॥ सत्त्वन्नोऽअग्ग्नेवमोभंवोतीनेदिं ष्ठोऽअस्याऽउषसोव्युष्ठौ ॥ अवंयक्ष्वनोव्वरुणह्ररांणोव्वीहिम्मृं डीकᳬसुहवोनऽएधि ॥ ४ ॥ महीमूषु । मातरं[2]ᳬसुव्रतानामृत

१ अवयासिसीष्ठा । अत्र "भाविश्य. स प समानपदे" (शु य. प्रा ३ अ ५६ सू ) इत्यनेन पत्वप्राप्तौ "पृथिविदिव्युपरिचर्पणिशकुनियासिभ्य" (शु य. प्रा. ३ अ ८४ सू ) इत्यनेन प्रकृतिभावे न पत्वम्। २ मातरसुवᳬतानाम् । वर्णे तु मात्रिके पूर्वे ह्यनुस्वारो द्विमात्रिक । या. शि । मात्रिके ह्रस्ववर्णपूर्वेऽनुस्वारो द्विमात्रिको दीर्घᳬइत्याकारको ज्ञेय.। अत्र "अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धमात्रा पूर्वा चार्धमात्रा" (शु.य.प्रा. ४ अ १४८ सू ) इति लिङ्गम् ।

स्यपत्क्नीमवंसेहुवेम ॥ तुविक्षत्रामजरंन्तीमुरूचीꣳसुशर्म्मी
णमदितिꣴसुप्प्रणीतिम् ॥ ५ ॥ सुत्रामाणम्पृथिवीम् ॥ सुत्रा
माणम्पृथिवीन्द्यामनेहसंꣴसुशर्म्माणमदितिꣴसुप्प्रणीतिम् ॥
दैवीन्नाव[1]ꣳस्वरित्रामनागसमस्त्रवन्तीमारुहेमास्वस्तये ॥ ६ ॥
सुनावमारुहेयम् ॥ सुनावमारुहेयमस्त्रवन्तीमनागसम् ॥
शतारित्रा[2]ꣳस्वस्तये ॥ ७ ॥ आनंः ॥ आनोमित्रावरुणाघृ



१–२ संयोगाद्यश्च यो भवेत्। या शि । यत्र सयोगाद्यो मात्रिको द्विमात्रिको वा वर्ण सोऽपि ऋवर्णव्यञ्जनादिग सयोगाद्यं वर्जयित्वा ह्रस्व एकमात्रिको भवति न तु गुरुभूत । तत्र ह्रस्वोच्चारणप्रदर्शक ꣳ इत्याकारक चिह्न ज्ञेयम् । दीर्घस्य ꣴ इत्याकारक चिह्नम् ।

मद्धारजांॅसिसुक्क्रतू ॥ ८ ॥ प्रबाहवां ।
तैर्ग्गव्यूतिमुक्क्षतम् ॥ मद्धारजांॅसिसुक्क्रतू ॥ आमाजनैश्च
सिसृतञ्जीवसेनऽआनोगव्यूतिमुक्क्षतङ्घृतेन ॥ शन्नं ॥
वयतॅंयुवानाश्रुतम्मोमित्रावरुणाहवेमा ॥ ९ ॥ जम्भयु
शन्नोभवन्तुव्वाजिनोहवेषुदेवतातामितद्रवस्वर्क्का ॥ १० ॥
न्तोहिंवृकॅरक्षांॅसिसनेम्म्यस्म्मद्युयवन्नमीवाः ॥
व्वाजेवाजेवत । व्वाजिनोनोधनेषुविप्पाऽअमृताऽकृतज्ञाः ॥

1 रक्षाॅसि । द्विमात्रे मात्रिक स्यात् । या शि. । यत्र द्विमात्रिक पूर्ववर्णस्तत्र मात्रिको ह्रस्वोऽनुस्वार ॅ इत्याकारक. । अत्र "दीर्घादर्द्धमात्रा पूर्वा चाद्धर्गा" (शु य प्रा ४ अ १४९ सू ) लिङ्गम् ।

अस्यमद्ध्वंःपिबतमादयंद्ध्वन्तृप्तायातपथिभिर्द्देवयानैंः ॥ ११ ॥
[ ११-१ ] समिद्धोऽअग्निः । समिधासुसमिद्धो
वरेण्ण्यंः ॥ गायत्रीच्छन्दंऽइन्द्रियन्त्र्यविर्गौर्व्वयोदधुंः
॥ १२ ॥ तनूनपाच्छुचिंव्रतंः ॥ तनूनपाच्छुचिंव्रतस्तनूपा
श्चसरंस्वती ॥ उष्णिहाच्छन्दंऽइन्द्रियन्दित्यवाड्गौर्व्वयो
दधुंः ॥ १३ ॥ इडाभिरग्निः ॥ इडाभिरग्निरीड्यंःसोमो
देवोऽअमर्त्त्यंः ॥ अनुष्टुप्छन्दंऽइन्द्रियम्पञ्चाविर्गौर्व्वयो

दधुः ॥१४॥ सुबर्हिरग्निः । पूषण्वान्तस्तीर्णबर्हिरमर्त्त्यः ॥
बृहतीच्छन्दऽइन्द्रियन्त्रिवत्सोगौर्वयोदधुः ॥ १५ ॥ दुरो
देवीः ॥ दुरोदेवीर्दिशोमहीर्ब्रह्मादेवोबृहस्पतिः ॥ पङ्क्तिश्छ
न्दऽइहेन्द्रियन्तुर्यवाड्गौर्वयोदधुः ॥ १६ ॥ उषेयह्वी ॥
उषेयह्वीसुपेशसाविश्वेदेवाऽअमर्त्त्याः ॥ त्रिष्टुप्छन्दऽइहेन्द्रि
यम्पष्ठवाड्गौर्वयोदधुः ॥ १७ ॥ दैव्याहोतारा । भिषजेन्द्रे
णसयुजासुजा ॥ जगतीच्छन्दऽइन्द्रियमनड्वान्गौर्वयोदधुः

॥ १८ ॥ तिस्त्रऽइडा ॥ तिस्त्रऽइडासरस्वतीभारतीमुरुतो
व्विशं÷ ॥ व्विराट्छन्दंऽइहेन्द्रियन्धेनुग्गौर्न्नव्वयोदधुः ॥ १९ ॥
त्वष्टांतुरीपं÷ ॥ त्वष्टांतुरीपोऽअद्भुतऽइन्द्राग्नीपुंष्टिवर्द्धना ॥
द्विपदाच्छन्दंऽइन्द्रियमुक्षागौर्न्नव्वयोदधुः ॥ २० ॥ शमि
तानं÷ ॥ शमितानोव्वनस्प्पतिं÷सवितापप्रंसुवन्भगंम् ॥ कुकु
प्प्छन्दंऽइहेन्द्रियंव्वशाव्वेहद्वयोदधुः ॥ २१ ॥ स्वाहायुज्ञम् ॥
स्वाहायुज्ञंव्वरुणःसुक्षत्रोभेषुजङ्करत् ॥ अतिच्छन्दाऽइन्द्रि

यंबृहद्द्वृषभोगौर्व्वयोदधुः ॥ २२ ॥ [११-२] व्वसन्तेनऽऋतुना । देवाव्वसवस्त्रिवृतास्स्तुताः ॥ रथन्तरेणतेजसाहविरिन्द्रेव्वयोदधुः ॥ २३ ॥ ग्रीष्मेणऽऋतुना । देवारुद्राःपञ्चदशेस्स्तुताः ॥ बृहतायशसाबलꣳहविरिन्द्रेव्वयोदधुः ॥२४॥ व्वर्षाभिर्ऋतुना । दित्यास्स्तोमेसप्तदशेस्स्तुताः ॥ व्वैरूपेणव्विशौजसाहविरिन्द्रेव्वयोदधुः ॥ २५ ॥ शारदेनऽऋतुना । देवाऽएकविꣳशऽऋभवस्स्तुताः ॥ व्वैराजेनाश्रियाश्रियꣳहवि

रिन्द्रेव्वयोदधुः ॥ २६ ॥ हेमन्तेनऽऋतुना । देवास्त्रिणवेमरुत
स्त्तुताः ॥ बलेनशक्करीःसहोहविरिन्द्रेव्वयोदधुः ॥ २७ ॥ शैशि
रेणऽऋतुना । देवास्त्रयस्त्रिꣳशेमृतास्त्तुताः ॥ सत्त्येनरेवतीःक्क्ष
त्रꣳहविरिन्द्रेव्वयोदधुः ॥ २८ ॥ [ ६-३ ] होतायक्क्षत् । होताय
क्क्षत्त्समिधाग्ग्निमिडस्प्पदेश्विनेन्द्रꣳसरस्वतीमजोधूम्म्रोनगो
धूमैःकुवलैर्ब्भेषजम्मधुशष्प्पैर्न्नतेजऽइन्द्रियम्पयःसोमः परि
स्रुताघृतम्मधुव्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ २९ ॥ होतायक्क्षत्त्त

॥ ५ ॥

१ पादादौ च पदादौ च संयोगावग्रहेषु य । जशब्द इति विज्ञेयो योऽन्य स य इति स्मृत. । या. शि । अत्र पदादौ यकारस्य सत्त्वाज्जकारो चारणम् ।

नूनपात्त्सरस्वतीम् ॥ होतायक्षत्तनूनपात्त्सरस्वतीमविम्मेँ
षौनभेषजम्पथामधुमताभरन्नाश्विनेन्द्रायवी[1]र्य्यम्बदरैरुपवा
काभिर्भेषजन्तोक्मभिःपयःसोमःपरिस्रुताघृतम्मधुव्य
न्त्वाज्यस्यहोतर्य्यजं ॥ ३० ॥ होतायक्षन्नराशꣳसन्न ।
नग्नहुम्पातिꣳसुरयाभेषजम्मेषःसरस्वतीभिषग्ग्रथोनचन्द्र्यु
श्विनोर्वपाऽइन्द्रस्यवीर्य्यम्बदरैरुपवाकाभिर्भेषजन्तोक्मभिः
पयःसोमःपरिस्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्य्यजं ॥ ३१ ॥

१ अत्र रकारयकारयो संयोगाज्जकारोच्चारणम्। एव होतर्य्यजेत्यादौ।

होतायक्षदिडेडितऽ ॥ होतायक्षदिडेडितऽआजुह्वानᳪसरं
स्वतीमिन्द्रम्बलेनवर्द्धयन्नृषभेणगवेन्द्रियमश्विनेन्द्रायभेषजँ
ऽयवैः कर्कन्धुभिर्म्मधुलाजैर्न्नमासरम्पयᳪसोमः परिस्रुताघृत
म्मधुव्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३२ ॥ होतायक्षद्बर्हि
रूर्णम्म्रदाᳪ ॥ होतायक्षद्बर्हिरूर्णम्म्रदाभिषड्नासत्त्या
भिषजाश्विनाश्वाशिशुमतीभिषग्धेनुःसरस्वतीभिषग्दुहऽइ
न्द्रायभेषजम्पयᳪसोमः परिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोत

र्य्यज ॥ ३३ ॥ होतायक्षद्दुरोदिशः । कवष्ष्योनव्यचस्व
तीरश्विभ्याान्नदुरोदिशऽइन्द्रोनरोदसीदुघेदुहेधेनुःसरस्वत्त्य
श्विनेन्द्रायभेषजꣳशुक्क्रन्नज्योतिरिन्द्रियम्पयꣳसोमःपरिस्रु
ताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३४ ॥ होतायक्ष
त्सुपेशसोषे । नक्क्तन्दिवाश्विनासम्मञ्जातेसरस्वत्त्यात्त्विषिमि
न्द्रेनभेषजꣳश्येनोनरजसाहृदाश्रियानमासरम्पयꣳसोमः
परिस्रुताघृतम्मधुव्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३५ ॥ होताय

क्षद्दैव्याहोतारा । भिषजाश्विनेन्द्रन्नजागृविदिवानक्तन्नभे
षजैःशूषꣳसरस्वतीभिषक्सीसेनदुहऽइन्द्रियम्पयꣳसोमः÷परि
स्रुताघृतम्मधुव्यन्त्वाज्यस्यहोतर्यज ॥ ३६ ॥ होतायक्ष
त्तिस्रोदेवीः ॥ होतायक्षत्तिस्रोदेवीर्न्नभेषजन्त्रयस्त्रिधात
वोपसोरूपमिन्द्रेहिरण्ययमश्विनेडानभारतीवाचासरस्वती
महऽइन्द्रायदुहऽइन्द्रियम्पयꣳसोमः÷परिस्रुताघृतम्मधुव्य
न्त्वाज्यस्यहोतर्यज ॥ ३७ ॥ होतायक्षत्सुरेतसम्

षभम् ॥ होता यक्षत्सुरेतसमृषभन्नर्यापसन्त्वष्टारमिन्द्र
मश्विना भिषजन्न सरस्वतीमोजो न जूतिरिन्द्रियं वृको न रभसो
भिषग्ग्यशꣳ सुरया भेषजꣳ श्रिया न मासरम्पयꣳ सोमः परिस्रु
ता घृतम्मधु व्यन्त्वाज्यस्य होतर्यज ॥ ३८ ॥ होता यक्षद्व
नस्पतिꣳ शमितारम् ॥ होता यक्षद्वनस्पतिꣳ शमितारꣳ श
तक्रतुम्भीमन्न मन्युꣳ राजानं व्याघ्रन्नमसाश्विना भामꣳ सरं

---

१ "वर्णे तु मात्रिके पूर्वे ह्यनुस्वारो द्विमात्रिक" या शि । मात्रिके (ह्रस्ववर्णपूर्वे) अनुस्वारो द्विमात्रिक ꣳ इत्याकारको दीर्घो ज्ञेयो लेख्यश्च । अत्र अनुस्वारो ह्रस्वपूर्वोऽध्यर्द्धमात्रा पूर्वा चार्धमात्रा (शु य प्रा ४ अ १४८सू) इत्यनेन चोक्तम्। अत्र मन्यु राजानम् इत्यत्रानुस्वारस्य ह्रस्ववर्णपूर्वत्वं वर्तते।

स्वतीभिषगिन्द्रायदुहऽइन्द्रियम्पयꣳसोमंः परिस्रुताघृतम्मधु
व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३९ ॥ होतायक्षदग्निꣳस्वाहा ॥
होतायक्षदग्निꣳस्वाहाज्ज्यस्यस्तोकानाꣳस्वाहामेदसाम्पृथ
क्स्वाहाच्छागमश्विभ्याꣳस्वाहामेषꣳसरस्वत्त्यैस्वाहऽऋषभ
मिन्द्रायसिꣳहायसहसऽइन्द्रियꣳस्वाहाग्निन्नभेषजꣳस्वाहा
सोममिन्द्रियꣳस्वाहेन्द्रꣳसुत्रामाणꣳसवितारंव्वरुणम्भिषजा
म्पतिꣳस्वाहाव्वनस्प्पतिम्प्रियम्पाथोनभेषजꣳस्वाहादेवाऽआ

ज्यपाजुषाणोऽअग्निर्भैषजम्पयःसोमःपरिस्रुताघृतम्मधुव्य
न्त्वाज्यस्यहोतर्य्यज ॥४०॥ [ १२-४ ] होतायक्षदश्विनौ
छागस्य । वपायामेदसोजुषेताꣳहविर्होतर्य्यज ॥ होतायक्ष
त्सरस्वतीम्मेषस्यवपायामेदसोजुषताꣳहविर्होतर्य्यज ॥ हो
तायक्षदिन्द्रमृषभस्यवपायामेदसोजुषताꣳहविर्होतर्य्यज
॥४१॥ होतायक्षदश्विनौसरस्वतीम् ॥ होतायक्षदश्विनौसरं

१ "द्विमात्रिके मात्रिक स्यात्" या शि । यत्र द्विमात्रिक पूर्ववर्णं (दीर्घस्वर) तत्रानुस्वारो ह्रस्व ꣳ इत्याकारको ज्ञेयो लेख्य उच्चारणीयश्च । अत्र "दीर्घादर्द्धमात्रा पूर्वा चाद्व्यर्घा" (शु य प्रा ४ अ १४९ सू.) प्रमाणम् । अत्र "जुषता ꣳ हवि" इति पदे दीर्घवर्णपूर्वोऽनुस्वारो वर्तते ।

स्वतीमिन्द्रᳬ सुत्रामाणमिमेसोमाᳬ सुरामाणश्च्छागैर्न्नमेषैर्ऋ
षभैः सुताःशष्पैर्न्नतोक्मभिर्लाजैर्म्महस्वन्तोमदामासरेण[1] परि
ष्कृताᳬशुक्राःपयस्वन्तोमृताᳬप्रस्थितावोमधुश्च्युतस्त्तानश्वि
नासरस्वतीन्द्रः सुत्रामावृत्रहाजुषन्ताᳬसोम्म्यम्मधुपिबन्तुम
दन्तुव्व्यन्तुहोतर्य्यज ॥ ४२ ॥ होतायक्षदश्विनौछागस्य । हवि
षऽआत्तामद्यमध्यतोमेदऽउद्भृतम्पुराद्वेषोभ्यᳬपुरापौरुषेय्या

1 परिष्कृता । अत्र "परिष्कृते पकारेण" ( शु य प्रा ३ अ ५३ सू ) इत्यनेन परिपद् कृते परे पकारेण व्यवधीयते । ततोऽत्र "ऊष्मान्तस्थाभ्यश्च स्पर्शे" ( शु य प्रा ४ अ १०२ सू ) इत्यनेन द्वित्व प्राप्त परञ्च "ऋवर्णे च" ( शु य प्रा ४ अ १११ सू ) इत्यनेन कृतघटितकारे परे द्वित्वस्य निषेधात् द्वित्त्व न ।

गृभोघस्त्तान्नूनङ्घ्रासेऽअंज्ज्राणाँऽयवंसप्प्रथमानाꣳसुमत्त्क्षंरा
णाꣳशतरुद्द्रियाणामग्ग्निष्ष्वात्तानाम्पीवोपवसनानाम्पार्श्व
तःश्श्रोणितःशितामुतऽउत्त्सादुतोङ्गादङ्गादवत्तानाङ्करतऽए
वाश्श्विनाजुषेताꣳहविर्होतर्य्यज ॥ ४३ ॥ होतायक्क्ष
त्सरस्वतीम्मेषस्य । हविषऽआवयदद्यमद्ध्यतोमेदऽउद्धृत
म्पुराद्द्वेषोभ्भ्यःपुरापौरुषेय्यागृभोघसन्नूनङ्घ्रासेऽअंज्ज्राणाँऽय
वंसप्प्रथमानाꣳसुमत्त्क्षराणाꣳशतरुद्द्रियाणामग्ग्निष्ष्वात्ता

१ पीव. उपवसनानाम् इत्यत्र "उपवसने पीव" (शु. य प्रा २ अ १४ सू.) इत्यनेन उपवसने परे विसर्जनीयस्य लोपे "उवर्ण ओकारम्"

नाम्पीवोपवसनानाम्पार्श्वतः श्रोणितः[1] शितामुतऽउत्सादतो
दङ्गादवत्तानाङ्करदेवꣳ सरस्वतीजुषताꣳ हविर्होतर्यज
॥ ४४ ॥ होतायक्षदिन्द्रमृषभस्य । हविषऽआवयदद्यमध्य
तोमेदऽउद्धृतम्पुराद्वेषोभ्यः पुरापौरुषेय्या गृभोघसन्नूनङ्घासेऽ
अज्राणाँ यवसप्रथमानाꣳ सुमत्क्षराणाꣳ शतरुद्रियाणा
मग्निष्वात्तानाम्पीवोपवसनानाम्पार्श्वतः श्रोणितः शितामु



---

( शु य प्रा ४ अ ५३ सू ) इति गुणे रूपं भवति । १ अत्र स्वरात्संयोगादिर्द्विरुच्यते इति सूत्रेण शकारस्य द्वित्वे प्राप्तेऽपि "नास्वरपूर्वा०" इति सूत्रस्य वृत्तौ विसर्जनीयाद्व्यञ्जनपरस्य द्वित्वञ्चेत्स्पर्शवर्णस्यैवेति नियमात्स्पर्शातिरिक्तशकारस्य द्वित्वं न भवति । तेन न द्वित्वम् ।

तऽउत्त्सादुतोऽङ्गादङ्गादवत्तानाङ्करदेवमिन्द्रोजुषताꣳहविर्होतर्य्यज ॥ ४५ ॥ होतायक्षद्वनस्प्पतिमभि। हिपिष्टतमयारभिष्ठयारशनयाधित ॥ यत्राश्विनोश्च्छागस्यहविषः प्प्रियाधामानियत्रसरस्वत्यामेषस्यहविषः प्प्रियाधामानियत्रेन्द्रस्यऽऋषभस्यहविषः प्प्रियाधामानियत्राग्नेः प्प्रियाधामानियत्रसोमस्यप्प्रियाधामानियत्रेन्द्रस्यसुत्राम्म्णः प्प्रियाधामानियत्रसवितुः प्प्रियाधामानियत्रवरुणस्यप्प्रियाधामानियत्रवनस्प्प

तेँ॑प्प्रियापाथाᳬ॑सि यत्रं देवानांमाज्ज्यपानाम्प्प्रियाधामानि यत्र

त्राग्ग्नेर्होतुः प्प्रियाधामानि तत्रैताम्प्रस्तुत्येवोपस्तुत्येवोपाव

स्रक्षद्रभीयसऽइवकृत्वीकरदेवन्देवोव्वनस्प्पतिर्ज्जुषताᳬ॑हवि

र्होतर्य्यज ॥४६॥ होतायक्षदग्ग्निᳬ॑स्विष्टकृतम् ॥ होतायक्षद

ग्ग्निᳬ॑स्विष्टकृतमयाडग्ग्निरश्विनोश्छागस्यहविषः प्प्रियाधा

मान्ययाट्सरस्वत्यामेषस्यहविषः प्प्रियाधामान्ययाडिन्द्रस्यऽ



---

१ "सयोगाद्यश्च यो भवेत्" या शि । यद्यनुस्वारस्य पूर्वो वर्णो दीर्घो वा ह्रस्व संयोगाद्यश्चेत्तदाऽनुस्वारो मात्रिकोᳬ॑इत्याकारको ह्रस्वो ज्ञेयो लेख्य उच्चारणीयश्च सर्वत्र । परञ्च यत्र सयोगाद्य ऋवर्णव्यञ्जनादिगो दीर्घो वा ह्रस्वो वर्णस्तत्र तु ᳮ इत्याकारकोऽनुस्वारो दीर्घो ज्ञेयो बोद्ध्य । यथा देवाना हृदयेन ।

ऋषभस्यंहविषंः प्प्रियाधामान्ययांडग्नेः प्प्रियाधामान्ययाट्सो
मंस्यप्प्रियाधामान्ययाडिन्द्रंस्यसुत्राम्मणंः प्प्रियाधामान्ययां
ट्सवितुः प्प्रियाधामान्ययाड्वरुणस्यप्प्रियाधामान्ययाड्वन
स्पतेंः प्प्रियापाथांᳬंस्ययाड्देवानामाज्ज्यपानांम्प्प्रियाधामानि
यक्षदग्नेर्होतुः प्प्रियाधामानियक्षत्स्वम्महिमानमायजता
मेज्याडइषंःकृणोतुसोऽअध्वराजातवेदाजुषतांᳬंहविर्होतर्य्य
जं॥४७॥ [७-५] देवम्बर्हिः[1]। सरस्वतीसुदेवमिन्द्रेऽअश्विना॥

१ रकारहकारयोगेऽत्र करिण्यादीना पचस्वरभक्तीना मध्ये "करिणी रहयोर्योगे" (या शि.) इत्यनेन करिणी स्वरभक्तिर्ज्ञेया। एव सर्वत्र।

तेजो॒नचक्षु॑र॒क्ष्योर्ब॒र्हिषा॑दधुरिन्द्रि॒यंव्व॑सु॒वने॑व्वसु॒धेय॑स्यव्यन्तु
यज॑ ॥ ४८ ॥ दे॒वीर्द्वारः॑ ॥ दे॒वीर्द्वारो॑ऽअ॒श्विना॑भि॒षजे
न्द्रे॒सर॑स्वती ॥ प्रा॒णन्न॒वी॒र्य॑न्न॒सिद्वारो॑दधुरिन्द्रि॒यंव्व॑सु॒वने॑व्वसु
धेय॑स्यव्यन्तु॒यज॑ ॥ ४९ ॥ दे॒वीऽउ॒षासौ॑ ॥ दे॒वीऽउ॒षासा॑व॒
श्विना॑सु॒त्रामे॒न्द्रे॒सर॑स्वती ॥ बल॒न्नवा॒चमा॒स्य॑ऽउ॒षाभ्यां॑न्दधुरि
न्द्रि॒यंव्व॑सु॒वने॑व्वसु॒धेय॑स्यव्यन्तु॒यज॑ ॥ ५० ॥ दे॒वीजो॒ष्ट्री॑ ॥
दे॒वीजो॒ष्ट्रीसर॑स्वत्त्य॒श्विनेन्द्र॑मवर्द्धयन् ॥ श्रोत्र॒न्नकर्ण॑यो॒र्य॒

शोजोष्ट्रीभ्यान्दधुरिन्द्रियंव्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥५१॥
देवीऽऊर्ज्जाहुती ॥ देवीऽऊर्ज्जाहुतीदुघेसुदुघेन्द्रेसरस्वत्यश्वि
नाभिषजावतः ॥ शुक्रन्नज्ज्योतिस्तनयोराहुतीधत्तऽइन्द्रियं
व्वसुवनेव्वसुधेयस्यव्यन्तुयज ॥ ५२ ॥ देवादेवानाम् ॥ देवा
देवानाम्भिषजाहोताराविन्द्रमश्विना ॥ व्वषट्कारैःसरस्वती
त्त्विषिन्नहृदयेमतिᳬहोतृभ्यान्दधुरिन्द्रियंव्वसुवनेव्वसुधेयस्य
व्यन्तुयज ॥ ५३ ॥ देवीस्तिस्रः ॥ देवीस्तिस्रस्तिस्रोदे

वीरश्विनेडासरंस्वती ॥ शूषन्नमद्योनाभ्यामिन्द्रायदधुरिन्द्रि
यंवंसुवनेवसुधेयस्यव्यन्तुयजं ॥ ५४ ॥ देवऽइन्द्रं ÷ ॥ देवऽ
इन्द्रोनराशꣳसंस्त्रिवरूथःसरंस्वत्याश्विभ्यामीयतेरथं ÷ ॥ रेतो
नरूपममृतंजनित्रमिन्द्रायत्त्वष्टादधदिन्द्रियाणिवसुवनेवसु
धेयस्यव्यन्तुयजं ॥ ५५ ॥ देवोदेवैः ॥ देवोदेवैर्वनस्पति
हिरंण्यपर्णोऽअश्विभ्याꣳसरंस्वत्यासुपिप्पलऽइन्द्रायपच्यं ॥ १३ ॥
तेमधुं ॥ ओजोनजूतिरृषभोनभामंवनस्पतिर्नोदधदिन्द्रि

याणिंव्वसुवनैंव्वसुधेयंस्यव्यन्तुयज ॥ ५६ ॥ देवम्बर्हिः ॥
देवम्बर्हिर्व्वारितीनामध्वरेस्तीर्ण्णमश्विभ्यामूर्ण्णम्म्रदाः सरस्व
त्यास्योनमिन्द्रतेसदः ॥ ईशायैमन्युः राजानम्बर्हिषादधु
रिन्द्रियंव्वसुवनेव्वसुधेयंस्यव्यन्तुयज ॥ ५७ ॥ देवोऽअग्निः ।
स्विष्टकृद्देवान्यक्षद्यथायथः होताराविन्द्रमश्विनांव्वाचाव्वा
चः सरस्वतीमग्निः सोमंः स्विष्टकृत्स्विष्टऽइन्द्रः सुत्रामासवि
ताव्वरुणोभिषगिष्टोदेवोव्वनस्पतिः स्विष्टादेवाऽआज्यपाः स्वि

ष्टोऽअग्निरग्निनाहोताहोत्रेस्विष्टकृद्यशोनदधदिन्द्रियमूर्ज्जम
पचितिꣳस्वधांवसुवनेवसुधेयस्यव्यन्तुयज ॥५८॥ अग्निमद्य ।
होतारमवृणीतायँयजमानःपचन्पक्तीःपचन्पुरोडाशान्ब
ध्नन्नश्विभ्याञ्छागꣳसरस्वत्यैमेषमिन्द्रायऽऋषभꣳसुन्वन्न
श्विभ्याꣳसरस्वत्याऽइन्द्रायसुत्राम्णेसुरासोमान्त्सूपस्थाऽ
अद्य ॥५९॥ सूपस्थाऽअद्य । देवोवनस्पतिरभवदश्विभ्या
ञ्छागेनसरस्वत्यैमेषेणेन्द्रायऽऋषभेणाक्षँस्तान्मेदस्तःप्र

तिपचतागृंभीषतावींवृधन्तपुरोडाशैरपुंरश्विनासंरस्वतीन्द्रं÷सुत्रामांसुरासोमाँस्त्वामद्य ॥ ६० ॥ त्वामद्य ॥ त्वामद्यऽऋषऽआर्षेयऽऋषीणान्नपादवृणीतायँय्यजंमानोबहुभ्यऽआसङ्गंतेभ्यऽएषमेदेवेषुवसुवार्यायंक्ष्यतऽइतितायादेवादेवदानान्यदुस्तान्यंस्मऽआचशास्स्वाचंगुरस्वेषितश्चंहोतरसिभद्रवाच्यांयप्प्रेषितोमानुषः सूक्तवाकायंसूक्ताब्रूंहि ॥ ६१ ॥

[१४-६]इतिश्रीवाजसनेयसंहितायामेकविंशोऽध्यायः ॥२१॥

श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ तेजोसिपंचा, स्रयऽएका, हिङ्कारायद्वे, तत्त्सवितुर्द्दश, व्विभूम्मात्रैका, कायद्वे, ऽआब्रह्मँस्त्रयोदश, शेषादेकैको, नविᳪशतिश्चतुस्त्रिᳪशत् [अ. २२ मं. ३४ अनु. १९] ॥ हरिः ॐ ॥

तेजोसि ॥ तेजोसिशुक्क्रममृतमायुष्प्पाऽआयुर्म्मेपाहि ॥ देवस्यंत्त्वासवितुः[1]प्प्रसवेश्श्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्त्ताब्भ्यामाद

१ आयुष्प्पा "समानपदे च" (शु य प्रा ३ अ ३० सू ) इत्यनेन एकस्मिन्पदे यो विसर्ग तत्य विसर्जनीयस्य ककारपकारयो परे यथायोग सकार षकारश्चैकपदे भवत । इति षकारे कृते "ऊष्मान्तस्थाभ्यश्च स्पर्शा" (शु य प्रा ४ अ १०२ सू ) इति षकारस्य द्वित्त्वम् ।

दे ॥ १ ॥ इमामगृभ्णन् ॥ इमामगृभ्णन्नरशनामृतस्यपूर्वऽ
आयुषिविदथेषुकव्या ॥ सानोऽअस्मिन्त्सुतऽआबभूवऽऋ
तस्यसामन्त्सरमारपन्ती ॥ २ ॥ अभिधाऽअसि ॥ अभिधाऽ
असिभुवनमसियन्तासिधर्त्ता ॥ सत्त्वमग्निंवैश्वानरꣳसप्रथ
सङ्गच्छस्वाहाकृतः ॥ ३ ॥ स्वगात्वा । देवेभ्यः प्रजापत
येब्रह्मन्नश्वम्भन्त्स्यामिदेवेभ्यः प्रजापतयेतेनराध्यासम् ॥
तम्बधानदेवेभ्यः प्रजापतयेतेनराध्नुहि ॥ ४ ॥ प्रजापतये

त्त्वा ॥ प्रजापतये त्त्वा जुष्टम्प्रोक्क्षामीन्द्राग्निभ्यान्त्वा जुष्टम्प्रो
क्क्षामि वायवे त्त्वा जुष्टम्प्रोक्क्षामि विश्वेभ्यस्त्त्वा देवेभ्यो जुष्ट
म्प्रोक्क्षामि सर्व्वेभ्यस्त्त्वा देवेभ्यो जुष्टम्प्रोक्क्षामि ॥ योऽअर्व्व
न्तञ्जिघांꣳसति तमभ्यमीति व्वरुणः ॥ परो मर्त्तः परः श्वा ॥५॥
[५-१] अग्नये स्वाहा ॥ अग्नये स्वाहा सोमाय स्वाहापाम्मो
दाय स्वाहा सवित्रे स्वाहा व्वायवे स्वाहा व्विष्णवे स्वाहेन्द्राय स्वाहा
बृहस्पतये स्वाहा मित्राय स्वाहा व्वरुणाय स्वाहा ॥ ६ ॥ [१-२]

१ अत्र द्वयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न दृश्यते विवृत्तिस्तत्र विज्ञेया। (या. शि ) तेमात्रोकाराकारयोः पूर्वरूपकारक. सन्धिर्न भवति।

हिङ्कारायस्वाहा ॥ हिङ्कारायस्वाहाहिङ्कृतायस्वाहाक्क्रन्दते
स्वाहावक्क्रन्दायस्वाहाप्प्रोथतेस्वाहाप्प्रप्प्रोथायस्वाहागन्धाय
स्वाहाग्घ्रातायस्वाहानिविष्टायस्वाहोपविष्टायस्वाहासन्दिताय
स्वाहाव्वल्गतेस्वाहासीनायस्वाहाशयानायस्वाहास्वपतेस्वाहा
जाग्ग्रतेस्वाहाकूजतेस्वाहाप्प्रबुद्धायस्वाहाव्विजृम्भमाणायस्वा
हाव्विचृतायस्वाहासꣳहानायस्वाहोपस्थितायस्वाहायनाय
स्वाहाप्प्रायणायस्वाहा ॥ ७ ॥ [1]यतेस्वाहा ॥ यतेस्वाहा

१ अत्र यकारस्य पादादौ सत्त्वाज्जकारोच्चारणम् ।

धावतेस्वाहोद्द्रावायस्वाहोद्द्रुतायस्वाहाशूकारायस्वाहाशूकृता
यस्वाहानिषण्णायस्वाहोत्त्थितायस्वाहाजवायस्वाहाबलाय
स्वाहाविवर्त्तमानायस्वाहाविवृत्तायस्वाहाविधून्वानायस्वाहा
विधूतायस्वाहाशुश्रूषमाणायस्वाहाशृण्वतेस्वाहेक्क्षमाणाय
स्वाहेक्षितायस्वाहावीक्षितायस्वाहानिमेषायस्वाहायदत्ति
तस्म्मैस्वाहायत्त्पिबतितस्म्मैस्वाहायन्मूत्रङ्करोतितस्म्मैस्वा ॥ १७ ॥

१ निषण्णाय। अत्र द्वयोर्नकारयोर्णत्वं निपात्यते। प्रथमस्य "तवर्गे च" (शु य प्रा ३ अ. ९४ सू) इत्यनेन तवर्गस्य व्यवधानेन णत्वाप्राप्तौ द्वितीयस्य नकारस्य "स्वरयवहकपैश्च" (शु य प्रा ३ अ. ८६ सू) इत्यनेन व्यवधानातिरिक्तनकारस्य व्यवधानाण्णत्वाप्राप्तौ "निषण्णाय०" (शु य प्रा. ३ अ. ८७ सू) इत्यनेन णत्वनिपात।

हांकुर्व्वतेस्वाहांकृतायुस्वाहां ॥ ८ ॥ [ २-३ ] तत्त्सवि
तुः ॥ तत्त्सवितुर्व्वरेण्ण्यम्भग्गौदेवस्यधीमहि ॥ धियोयो
नं÷प्प्रचोदयात् ॥ ९ ॥ हिरंण्ण्यपाणिमूतये । सवितार
मुपंह्वये ॥ सचेत्तादेवतांपदम् ॥ १० ॥ देवस्यचेतंतं ॥
देवस्यचेतंतोमहीम्प्रसंवितुर्हवामहे ॥ सुमतिꣳसत्त्यराधसम्
॥ ११ ॥ सुष्टुतिꣳसुमतीवृधं÷[1] ॥ सुष्टुतिꣳसुमतीवृधोरातिꣳ
संवितुरीमहे ॥ प्रदेवायमतीविदे ॥ १२ ॥ रातिꣳसत्त्प

१ सुमतीवृध । अत्र “अश्वरश्मिसुमति०” (शु य प्रा ३ अ १८ सू ) इत्यनेन वकारे परे ह्रस्वेकारस्य सुमतिशब्दस्य दीर्घत्त्वम् ।

तिम् ॥ रातिꣳसत्त्पतिम्महेसवितारमुपह्वये ॥ आसवन्देव
वीतये ॥ १३ ॥ देवस्यसवितुः ॥ देवस्यसवितुर्म्मतिमासवं
विश्वदेव्यम् ॥ धियाभगम्मनामहे ॥ १४ ॥ अग्निꣳस्तो
मेन । बोधयसमिधानोऽअमर्त्त्यम् ॥ हव्यादेवेषुनोदधत्
॥ १५ ॥ सहव्यवाट् ॥ सहव्यवाडमर्त्त्यऽउशिग्गदूतश्चनो
हितः ॥ अग्निर्द्धियासमृण्णवति ॥ १६ ॥ अग्निन्दूतम् ॥
अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवाँ२॥ऽआसादया

दिह ॥ १७ ॥ अजीजनोहि । पवमानसूर्यैविधारेशक्मना पयः ॥ गोजीरयारंहमाणःपुरन्ध्या ॥ १८ ॥ [ १०-४ ]
विभूर्मात्रा । प्रभूश्पित्राश्वोऽसिहयोऽस्यत्योऽसिमयोऽस्यर्वासिस
प्तिरसिवाज्यसिवृषासिनृमणाऽअसि ॥ ययुर्नामासिशिशुर्ना
मास्यादित्यानाम्पत्वान्विहिदेवाऽआशापालाऽएतन्देवेभ्यो
श्वम्मेधायप्रोक्षितंरक्षतेहरन्तिरिहरमतामिहधृतिरिहस्व
धृतिःस्वाहा ॥ १९ ॥ [ १-५ ] कायस्वाहा ॥ कायस्वाहाकस्मै

स्वाहाकतमस्मैस्वाहास्वाहाधिमाधीतायस्वाहामनः प्रजाप
तयेस्वाहाचित्तंविज्ञातायादित्यैस्वाहादित्यैमह्यैस्वाहादित्यै
सुमृडीकायैस्वाहासरस्वत्यैस्वाहासरस्वत्यैपावकायैस्वाहासर
स्वत्यैबृहत्यैस्वाहापूष्ण्णेस्वाहापूष्ण्णेप्रपथ्यायस्वाहापूष्ण्णे
नरन्धिषायस्वाहात्त्वष्ट्रेस्वाहात्त्वष्ट्रेतुरीपायस्वाहात्त्वष्ट्रेपुरुरूपा ॥ १९ ॥
यस्वाहाविष्ण्णवेस्वाहाविष्ण्णवेनिभूयपायस्वाहाविष्ण्णवेशि
पिविष्टायस्वाहा ॥ २० ॥ विश्वोदेवस्य । नेतुर्म्मर्त्तोवुरीतसख्

ऽव्ययम् ॥ विश्वोराय ऽइंषुद्ध्यातिद्युम्नंवृणीतपुष्यसेस्वाहा ॥२१॥
[ २-६ ] आब्रह्मंन् ॥ आब्रह्मंन्ब्राह्मणोब्रह्मवर्च्चसीजायतामारा
ष्ट्रेराजन्न्यः शूरंऽइषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनु
र्वोढानड्वानाशुः सप्प्तिः पुरंन्धिर्य्योषाजिष्णूरंथेष्ठाः सभेयोयु
वास्ययजंमानस्यवीरोजायतान्निकामेनिंकामेनः पर्ज्जन्न्योवर्ष
तुफलंवत्त्योनऽओषधयः पच्यन्ताँय्योगक्षेमोनंःकल्प्पताम्
॥२२॥[ १-७ ] प्राणायस्वाहा । पानायस्वाहाव्यानायस्वाहा

चक्षुषेस्वाहाश्श्रोत्रांयस्वाहाव्वाचेस्वाहामनंसेस्वाहां ॥ २३ ॥
[१-८] प्राच्यैदिशे । स्वाहाव्वार्च्यैदिशेस्वाहादक्षिणायैदिशे
स्वाहाव्वार्च्यैदिशेस्वाहाप्प्रतीच्यैदिशेस्वाहाव्वार्च्यैदिशेस्वाहोदी
च्यैदिशेस्वाहाव्वार्च्यैदिशेस्वाहोर्द्ध्वायैदिशेस्वाहाव्वार्च्यैदिशे
स्वाहावार्च्यैदिशेस्वाहाव्वार्च्यैदिशेस्वाहां ॥ २४ ॥ [१-९]
अद्भ्यश्स्वाहां । व्वार्भ्यश्स्वाहोदकायस्वाहातिष्ठंन्तीभ्यःस्वा
हास्त्रवंन्तीभ्यःस्वाहास्यन्दंमानाभ्यःस्वाहाकूप्प्याभ्यः

स्वाहासूद्याभ्यःस्वाहाधार्याभ्यःस्वाहार्णवायस्वाहासमु
द्रायस्वाहासरिरायस्वाहा ॥ २५ ॥ [१-१०] वाता
यस्वाहा । धूमायस्वाहाऽभ्रायस्वाहामेघायस्वाहाविद्योतमा
नायस्वाहास्तनयतेस्वाहावस्फूर्जतेस्वाहावर्षतेस्वाहाववर्षते
स्वाहोग्रंवर्षतेस्वाहाशीघ्रंवर्षतेस्वाहोद्गृह्णतेस्वाहोद्गृहीताय
स्वाहाप्रुष्णतेस्वाहाशीकायतेस्वाहाप्रुष्वाभ्यःस्वाहाह्रादु
नीभ्यःस्वाहानीहारायस्वाहा ॥ २६ ॥ [१-११] अग्न

येस्वाहा ॥ अग्नयेस्वाहासोमायस्वाहेन्द्रायस्वाहापृथिव्यै
स्वाहान्तरिक्षायस्वाहादिवेस्वाहादिग्भ्यःस्वाहाशाभ्यःस्वा
होर्व्यैदिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ २७ ॥ [१-१२]
नक्षत्रेभ्यःस्वाहा।नक्षत्रियेभ्यःस्वाहाहोरात्रेभ्यःस्वाहा
र्द्धमासेभ्यःस्वाहामासेभ्यःस्वाहऽऋतुभ्यःस्वाहार्त्तवेभ्यः
स्वाहासंवत्सरायस्वाहाद्यावापृथिवीभ्याᳪंस्वाहाचन्द्रायस्वा
हासूर्य्यायस्वाहारश्मिभ्यःस्वाहावसुभ्यःस्वाहारुद्रेभ्यः

स्वाहादित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा विश्वेभ्यो देवेभ्यः
स्वाहा मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा वनस्पतिभ्यः स्वा
हा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥ २८ ॥
[१-१३] १३०० शतम् ॥ पृथिव्यै स्वाहा ॥ पृथिव्यै स्वाहान्त
रिक्षाय स्वाहा दिवे स्वाहा सूर्याय स्वाहा चन्द्राय स्वाहा नक्ष
त्रेभ्यः स्वाहाद्भ्यः स्वाहौषधीभ्यः स्वाहा वनस्पतिभ्यः स्वा
हा परिप्लवेभ्यः स्वाहा चराचरेभ्यः स्वाहा सरीसृपेभ्यः स्वाहा

॥ २९ ॥ [ १-१४ ] असवेस्वाहा ॥ असवेस्वाहाव्वसवेस्वाहा
व्विभुवेस्वाहाव्विवस्वतेस्वाहागणश्श्रियेस्वाहागणपतयेस्वाहाभि
भुवेस्वाहाधिपतयेस्वाहाशूषायस्वाहासꣳसर्प्पायस्वाहाचन्द्रा
यस्वाहाज्ज्योतिषेस्वाहामलिम्म्लुचायस्वाहादिवापतयतेस्वाहा
॥ ३० ॥ [ १-१५ ] मधवेस्वाहा ॥ मधवेस्वाहामाधवाय
स्वाहाशुक्क्रायस्वाहाशुचयेस्वाहानभसेस्वाहानभस्यायस्वाहे
षायस्वाहोर्ज्जायस्वाहासहसेस्वाहासहस्यायस्वाहातपसेस्वाहा

तपस्यायस्वाहाꣳहसस्पतयेस्वाहा॥ ३१ ॥ [ १-१६ ] व्वाजाय
स्वाहा । प्प्रसवायस्वाहापिजायस्वाहाक्क्रतवेस्वाहास्वः स्वा
हामूर्द्ध्नेस्वाहाव्यश्नुविनेस्वाहान्त्यायस्वाहान्त्यायभौवनाय
स्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहाप्प्रजापतयेस्वाहा
॥ ३२ ॥ [ १-१७ ] आयुर्य्यज्ञेन । कल्प्पताꣳस्वाहाप्प्राणो
यज्ञेनकल्प्पताꣳस्वाहापानोयज्ञेनकल्प्पताꣳस्वाहाव्यानो
यज्ञेनकल्प्पताꣳस्वाहोदानोयज्ञेनकल्प्पताꣳस्वाहासमा

नोयुज्ज्ञेनंकल्प्पताᳬंस्वाहाचक्क्षुंर्य्युज्ज्ञेनंकल्प्पताᳬंस्वाहा
श्श्रोत्त्रँय्युज्ज्ञेनंकल्प्पताᳬंस्वाहाव्वाग्ग्युज्ज्ञेनंकल्प्पताᳬंस्वा
हामनौयुज्ज्ञेनंकल्प्पताᳬंस्वाहात्क्मायुज्ज्ञेनंकल्प्पताᳬंस्वा
हांब्रह्मायुज्ज्ञेनंकल्प्पताᳬंस्वाहाज्ज्योतिंर्य्युज्ज्ञेनंकल्प्पताᳬं
स्वाहास्वर्य्युज्ज्ञेनंकल्प्पताᳬंस्वाहांपृष्ठँय्युज्ज्ञेनंकल्प्पताᳬं
स्वाहायुज्ज्ञोयुज्ज्ञेनंकल्प्पताᳬंस्वाहा॥२३॥[१-१८]एकंस्म्मै ॥ २२ ॥
स्वाहा ॥ एकंस्म्मैस्वाहाद्वाब्भ्याᳬंस्वाहांशतायस्वाहैकंशताय

स्वाहा॒व्युष्ट्यै॒स्वाहा॑स्व॒र्ग्गाय॒स्वाहा॑ ॥३४॥ [१-१९] इतिश्रीवा-
जसनेयसंहितायां द्वाविंशोऽध्यायः ॥ २२ ॥ श्रीवेदपुरुषाय
नमः ॥ अनुवाकसूत्रम् ॥ हिरण्यगर्भोयश्प्राणतोद्वेकौ, सुञ्ज
न्त्यष्टौ, व्वायुष्ट्वापञ्च, प्राणायतिस्र, उत्सक्थ्याद्वादश, गायत्री
त्रिष्टुप्, कस्त्वाषट्कौ, कश्स्विदष्टौ, कास्विद्दश, सुभूश्स्वयंभू-
स्तिस्र, एकादश पञ्चषष्टिः ॥ [अ. २३ मं. ६५ अनु. ११]
हरिः ॐ ॥ हि॒र॒ण्य॒ग॒र्भश्सम् ॥ हि॒र॒ण्य॒ग॒र्भश्सम॑वर्त्त॒ताग्ग्रे॑

भूतस्यंजातश्पतिरेकंऽआसीत् ॥ सदांधारपृथिवीन्द्यामुते
माङ्कस्म्मैदेवायंहविषांविधेम ॥ १ ॥ उपयामगृंहीतोसि ।
प्प्रजापंतयेत्त्वाजुष्टंङ्गृह्णाम्म्येषतेयोनिंःसूर्य्यंस्तेमहिमा ॥
यस्तेहंन्त्संवत्त्सरेमंहिमासंम्बभूवयस्तेंव्वायावन्तरिंक्षेम
हिमसांम्बभूवयस्तेंदिविसूर्य्यैमहिमासंम्बभूवतस्म्मैतेमहि
म्न्नेप्प्रजापंतयेस्वाहांदेवेब्भ्यंः ॥ २ ॥ [२-१] यश्प्प्राण

॥ २४ ॥

तहं ॥ यश्प्प्राणतोनिंमिषतोमंहित्त्वैकऽइद्राजाजगंतोबभूवं ॥

यऽईशेऽअस्यद्विपदश्चतुष्पदःकस्मैदेवायहविषाविधेम
॥ ३ ॥ उपयामगृहीतोसि । प्रजापतयेत्त्वाजुष्टङ्गृह्णाम्म्येष
तेयोनिश्चन्द्रमास्तेमहिमा ॥ यस्तेरात्रौसंवत्सरेमहिमासम्ब
भूवयस्तेपृथिव्यामग्नौमहिमासम्बभूवयस्तेनक्षत्रेषुचन्द्रम
सिमहिमासम्बभूवतस्मैतेमहिम्नेप्रजापतयेदेवेब्भ्यःस्वाहा

---

१ द्वयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न दृश्यते। विवृत्तिस्तत्र विज्ञेया "यऽईशे" तु निदर्शनम्। या शि। अत्र य इति पदस्थस्य विसर्गस्य "कण्ठ्यपूर्वो यकारमरिफित" (शु य प्रा ४ अ ४७ सू) इत्यनेन यकारे "यवयो पदान्तयो स्वरमध्ये लोप." (शु य प्रा ४ अ १२५ सू) इत्यनेन यस्य लोपेऽकारेकारयो "कण्ठ्यादिवर्ण एकारम्" (शु य प्रा ४ अ ५३ सू) इत्यनेनैकारे प्राप्ते "न परकाल पूर्वकाले पुन" (शु य प्रा ३ अ ४ सू) इत्यनेन निषेधे सन्ध्यभाव। उच्चारणेऽप्यर्धमात्राकालिको विराम। तज्ज्ञापक(ऽ)इत्याकारक चिह्नम्। अत्र पाकवतीवृत्तिर्ज्ञेया प्रारम्भे ह्रस्वयोगात्।

॥ ४ ॥ [२-२] युञ्जन्तिब्रुध्नम् ॥ युञ्जन्तिब्रुध्नमंरुषञ्चरं
न्तम्परिंतस्त्थुषंः ॥ रोचंन्तेरोचुनादिवि ॥५॥ युञ्जन्त्यंस्य ॥
युञ्जन्त्यंस्युकाम्म्याहरीव्विपंक्क्षसारथें ॥ शोणांधृष्णूनृवा
हंसा ॥ ६ ॥ यद्वातंः ॥ यद्वातोंऽअुपोऽअगंनीगन्न्प्रियामिन्द्रंस्य
तुन्वम् ॥ एतंᳬस्तोंतरनेनंपुथापुनरश्श्वमावंर्त्तयासिनः ॥७॥
व्वसंवस्त्त्वा । ञ्जन्तुगायुत्रेणुच्छन्दंसारुद्रास्त्त्वांञ्जन्तुत्रैष्टुंभे
नुच्छन्दंसादित्त्यास्त्त्वांञ्जन्तुजागंतेनुच्छन्दंसा ॥ भूर्भुवुःस्वु

र्ल्लांजी३॥ ञ्छाची३॥ व्यव्येगव्यंऽएतदन्नंमत्तदेवाऽएतदन्नंम
द्धिप्प्रजापते ॥ ८॥ कश्स्वित् ॥ कश्स्विदेकाकीचंरतिकऽउंस्वि
ज्जायतेपुनं÷ ॥ किंᳬस्विद्धिमस्यंभेषजाङ्किम्म्वावपंनम्महत्
॥ ९ ॥ सूर्य्यंऽएकाकी । चंरतिचुन्द्रमांजायतेपुनं[1]÷ ॥
अग्निर्हिमस्यंभेषजम्भूमिरावपंनम्महत् ॥ १० ॥ कास्वित् ॥
कास्विदासीत्त्पूर्व्वंचित्तिंᳬकिंᳬस्विदासीद्बृहद्वयं÷ ॥ कास्विदा

१ यत्र सयोगपरोऽसयोगपरो वकाररहितो वकारसहित सविसर्गो मात्रिक स्वरितस्वरस्तस्मात्परस्य विसर्गस्य(—)इत्याकारक उभयक्षेप । मात्रिके भय क्षिपेत् । (या शि ) सवकारे द्विमात्रिके तूभयक्षेप. । जात्यवकारात्परस्य विसर्गस्याप्युभयक्षेप "सद्रुस्रे—" ।

सीत्त्पिलिप्पिलाकास्विदासीत्त्पिशङ्गिला ॥ ११ ॥ द्यौरासी
त् ॥ द्यौरासीत्त्पूर्व्वचित्तिरश्श्वऽआसीद्बृहद्बयं÷ ॥ अविरा
सीत्त्पिलिप्पिलारात्रीरासीत्त्पिशङ्गिला ॥ १२ ॥ [८-३]
व्वायुष्ट्वा । पचतैरवत्त्वसितग्ग्रीवश्च्छागैन्न्यग्ग्रोधश्श्चमसैश्शं
ल्म्मलिर्व्वृद्ध्या ॥ एषस्यरात्थ्योव्वृषापड्ड्भिश्श्चतुर्ब्भिरेदंगन्ब्रह्मा
कृष्णश्श्चनोवतुनमोग्ग्नये ॥ १३ ॥ सꣳशितोरश्म्मिना ॥
सꣳशितोरश्म्मिनारथ[1]ꣳसꣳशितोरश्म्मिनाहयं÷ ॥ सꣳ

१ यत्र मात्रिकात् द्विमात्रिकाद्वानुदात्तात्परो विसर्गस्तस्य विसर्गस्य (c) इत्याकारिकया कनिष्ठिकया निर्देश ।

शिंतोऽअप्प्स्वप्प्सुजाब्ब्रह्मासोमंपुरोगवं ॥ १४ ॥ स्वयं

व्वांजिन् ॥ स्वयंव्वांजिँस्तन्न्वङ्कल्प्पयस्वस्वयँय्यंजस्वस्वयञ्जु

षस्व ॥ महिमातेन्न्येनन्नसन्नशें ॥ १५ ॥ नवै ॥ नवाऽ

उं[1]ऽएतन्म्रियसेनरिष्ष्यसिदेवाँ२॥ऽइदेंषिपथिभिं÷सुगेभिं÷ ॥

यत्रासंतेसुकृतोयत्रतेयुस्तत्रंत्त्वादेवःसंवितादंधातु ॥ १६ ॥

अग्निःपशुः ॥ अग्निःपशुरांसीत्तेनायजन्तसऽएतँल्लोक

---

१ "उकारोऽपृक्तोऽस्पर्शात्" (शु य प्रा ४ अ ९० सू) अपृक्त एकवर्ण उकारोऽस्पर्शात्पर प्रकृत्या भवति स्वरे प्रत्यये । अत्रोकारोऽपृक्तोऽ-स्पर्शात्पर एतदिति स्वरे परे तस्मान्न सन्धि ।

मंजयुद्यस्मिन्नग्निःसतेंलोकोभंविष्ष्यतितञ्जैष्ष्यसिपिबैताँऽ
अपः[1] ॥ व्वायुःपशुरांसीत्तेनांयजन्तसऽएतँल्लोकमंजयुद्य
स्मिन्व्वायुःसतेंलोकोभंविष्ष्यतितञ्जैष्ष्यसिपिबैताऽअपः ॥
सूर्य्यः पशुरांसीत्तेनांयजन्तसऽएतँल्लोकमंजयुद्यस्मिन्त्सू
र्य्यःसतेंलोकोभंविष्ष्यतितञ्जैष्ष्यासिपिबैताऽअपः ॥ १७ ॥
[५-४] प्राणायस्वाहां । पानायस्वाहांव्यानायस्वाहां ॥ ॥ २७ ॥

१ मात्रिकाद्धिमात्रिकादुदात्तात् परस्य विसर्जनीयस्य (ः) इत्याकारिकया निर्देश ।

अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन ॥ ससंस्त्यश्वकः
सुभद्रिकाङ्काम्पीलवासिनीम् ॥ १८ ॥ गुणानान्त्वा ।
गुणपतिꣳहवामहेप्प्रियाणान्त्वाप्प्रियपतिꣳहवामहेनिधीना
न्त्वानिधिपतिꣳहवामहेव्वसोमम ॥ आहमंजानिगर्भधं
मात्त्वमंजासिगर्भधम् ॥ १९ ॥ ताऽउभौचतुरः पुदःस
म्प्रसारयावस्वर्गेलोकेप्प्रोर्णुवाथांवृषावाजीरेतोधारेतोदधातु
॥ २० ॥ [३-५] उत्त्सक्थ्याऽअव । गुदन्धेहिसमञ्जि

श्वौंरयावृषन् ॥ यस्त्रीणाञ्जीवभोजनं ॥ २१ ॥ यकासकौ । शकुन्तिकाहलगितिवञ्चति । आहन्तिगभेपसोनिगल्गलीतिधारका ॥ २२ ॥ यकोसकौ । शकुन्तकऽआहलगितिवञ्चति ॥ विवक्षतऽइवतेमुखमध्वर्य्योमानस्त्वमभिभाषथाः ॥ २३ ॥ माताचं । तेपिताचतेग्ग्रंवृक्षस्यरोहतः ॥ प्रतिलामीतितेपितागभेमुष्टिमतꣳसयत् ॥ २४ ॥

1 चारयावृषन् । अत्र "अश्वरश्मिमतिसुमतिश्वसुतचारय°" (शु य प्रा० ३ अ ९८ सू ) इत्यनेन वृषन् इत्यस्य वकारे परे चारयाकारस्य दीर्घाकार ।

मातावं। तेपिताचतेग्रेवृक्षस्यंक्रीडते[1]ः ॥ व्रिवंक्क्षतऽइवते

मुखम्ब्रह्मन्मात्त्वंवंदोबहु ॥ २५ ॥ ऊर्द्ध्वामेनाम् ॥ ऊर्द्ध्वां

मेनामुच्छ्रापयगिरौभारꣳहरन्निव ॥ अथास्यैमध्यमेधताꣳ

शीतेवातेपुनन्निव ॥ २६ ॥ ऊर्द्ध्वमेनम् ॥ ऊर्द्ध्वमेनमुच्छ्रय

ताद्गिरौभारꣳहरन्निव ॥ अथास्यमध्यमेजतुशीतेवातेपुन

न्निव ॥ २७ ॥ यदस्याः ॥ यदस्याऽअꣳहुभेद्याःकृधुस्थू

१ यत्र मान्त्रिकाद्धिमान्त्रिकाद्वा प्रत्ययात्परो विसर्गस्तत्र विसर्गस्य ( ꣳ ) इत्याकारिकया कनिष्ठिकया निर्देश ।

लमुपातंसत् ॥ मुष्ककाविदंस्याऽएजतोगोशुफेशंकुलाविंव
॥ २८ ॥ यद्देवासं÷ ॥ यद्देवासोंललामंगुम्प्रविंष्टीमिनुमा
विषुः॥सुक्थ्नादेंदिश्श्यतेनारींसत्त्यस्यांक्षिभुवोंयथा ॥२९॥
यद्धंरिणः ॥ यद्धंरिणोयवुमत्तिनपुष्टम्पुशुमन्न्यंते ॥ शुद्राय
दर्य्यजारानपोषांयधनायति ॥ ३० ॥ यद्धंरिणः ॥ यद्धंरि
णोयवुमत्तिनपुष्टम्बुहुमन्न्यंते । शुद्रोयदर्य्यायैजारोनपोषुम
नुंमन्न्यते ॥ ३१ ॥ दुधिक्क्राव्ण्णोंऽअकारिषम् ॥ दुधिक्क्रा

ष्णोऽअकारिषञ्जिष्णोरश्वस्यवाजिनः ॥ सुरभिनोमुखा
करत्प्रणऽआयूᳬंषितारिषत् ॥ ३२ ॥ [ १२-६ ] गायत्री
त्रिष्टुप् ॥ गायत्रीत्रिष्टुब्ब्जगंत्त्यनुष्टुप्पङ्क्त्यासह ॥ बृहत्त्यु
ष्णिहांककुप्प्सूचीभिः शम्म्यन्तुत्त्वा ॥ ३३ ॥ द्विपदायाः ॥
द्विपदायाश्चतुष्पदास्त्रिपदायाश्चषट्पदाः ॥ विच्छन्दायाश्चस
च्छन्दाःसूचीभिः शम्म्यन्तुत्त्वा ॥ ३४ ॥ महानाम्न्योरे
वत्त्यः ॥ महानाम्न्योरेवत्त्योविश्वाऽआशाःप्प्रभूवरीः ॥

मैधीर्व्विद्युतोव्वाचं÷सूचीभिं÷शम्म्यन्तुत्त्वा ॥ ३५ ॥ नाठ्यै
स्त्ते ॥ नाठ्यैस्त्तेपत्क्न्योलोमव्विचिंन्वन्तुमनीषयां ॥ देवा
नाम्पत्क्न्योदिशं÷सूचीभिं÷शम्म्यन्तुत्त्वा ॥ ३६ ॥ रजता
हरिणीः ॥ रजताहरिणीःसीसायुजोंयुज्ज्यन्तेकर्म्मभिः ॥
अश्वंस्यव्वाजिनंस्त्त्वचिसिमांःशम्म्यन्तुशम्म्यन्तीः ॥ ३७ ॥
कुविदुङ्ग । यवंमन्तोयवंञ्चिद्यथादान्त्यंनुपूर्व्वंव्वियूयं ॥ इहेहै
षाङ्कृणुहिभोजंनानियेबर्हिंषोनमंऽउक्क्तिंय्यजंन्ति ॥ ३८ ॥

[ ६-७ ] कस्त्वा ॥ कस्त्वाच्छ्यतिकस्त्वाविशांस्तुकस्ते
गात्राणिशम्म्यति ॥ कउंतेशमिताकविः ॥ ३९ ॥ ऋत
वंस्ते ॥ ऋतवंस्तऽऋतुथापर्वंशमितारोविशासतु ॥ संवत्सर
स्यतेजंसाशमीभिंःशम्म्यन्तुत्वा ॥ ४० ॥ अर्द्धमासाःप
रूंषि । तेमासाऽआच्छ्यन्तुशम्म्यन्तः ॥ अहोरात्राणि
मरुतोविलिष्टंसूदयन्तुते ॥ ४१ ॥ दैव्यांऽअद्ध्वर्यवंः ॥
दैव्यांऽअद्ध्वर्यवस्त्वाच्छ्यन्तुविचंशासतु ॥ गात्राणिपर्व्व

शस्त्तेसिमांहंकृण्णवन्तुशम्म्यंन्तीहं ॥ ४२ ॥ द्यौस्त्तें । पृथि
व्व्यन्तारिंक्क्षंव्वायुश्चिछ्द्रंपृणातुते ॥ सूर्य्यस्त्तेनक्क्षत्रैहंसहलोक
ङ्कृणोतुसाधुया ॥ ४३ ॥ शन्तें ॥ शन्तेपरेंब्भ्योगात्त्रेंब्भ्यहं
शमस्त्त्ववरेंब्भ्यहं ॥ शमुस्त्थब्भ्योमज्जब्भ्यहंशम्म्वंस्त्तुतन्न्वै
तवं ॥ ४४ ॥ [६-८] कश्शस्वित् ॥ कश्शस्विदेकाकी
चंरतिकऽउंस्विज्जायतेपुनं÷ ॥ किंछंस्विद्धिमस्यंभेषजाङ्कि



१ "द्विमात्रिकं क्षिपेद्दक मू" (या शि ) इति नियमेन दीर्घस्वरितस्वराद्यत्र परो विसर्गस्तत्र(C)इत्याकारक कनिष्ठिकानिर्देशवाचकोऽगुलिनिर्देश सर्वत्र कार्यः ॥

स्स्वावपनम्महत् ॥ ४५ ॥ सूर्य्यऽएकाकी । चरतिचन्द्र
माजायतेपुनः ॥ अग्निर्हिमस्यभेषजम्भूमिरावपनम्महत्
॥ ४६ ॥ किँस्वित् ॥ किँस्वित्सूर्य्यसमञ्ज्योतिःकिँ
समुद्रसमँसरः ॥ किँस्वित्पृथिव्यैवर्षीयःकस्यमात्रानवि
द्यते ॥ ४७ ॥ ब्रह्मसूर्य्यसमम् ॥ ब्रह्मसूर्य्यसमञ्ज्योतिर्द्यौः
समुद्रसमँसरः ॥ इन्द्रःपृथिव्यैवर्षीयान्गोस्तुमात्रानवि
द्यते ॥ ४८ ॥ पृच्छामित्वा । चितयेदेवसखयदित्वमत्र

नंसाजगन्थं ॥ येषुव्विष्णुस्त्रिषुपदेष्ष्वेष्टस्त्तेषुव्विश्श्वम्भुवंनमा
विवेशा ३ ॥ ॥ ४९ ॥ अपितेषुं । त्रिषुपदेष्ष्वंस्मिम्येषुव्विश्श्व
म्भुवंनमाविवेशं ॥ सद्यश्पर्य्यैमिपृथिवीमुतद्यामेकेनाङ्गेंनदि
वोऽअस्यपृष्ठम् ॥ ५० ॥ केष्ष्वन्तः । पुरुषऽआविवेशाका
न्यन्तःपुरुषेऽअर्प्पितानि ॥ एतद्ब्रह्मन्नुपवंल्हामासित्त्वाकिं
स्विन्नंप्प्रातिवोचास्यत्रं ॥ ५१ ॥ पञ्चस्वन्तः । पुरुषऽआविं



---

१ "कुर्वणी लहकारयो." (या शि.) लकारहकारयोर्योगे कुर्वणीनाम स्वरभक्ति. । अत्र पञ्चाना स्वरभक्तीना मध्ये कुर्वणी वर्तते ।

वेशुतान्यन्तश्पुरुषेऽअर्प्पितानि ॥ एतत्त्वात्त्रंप्प्रतिमन्न्वानोऽ
अंस्म्मिनमायर्यांभवस्युत्तरोमत् ॥५२॥ [ ८-९ ] कास्वित् ॥
कास्विदासीप्पूर्वचित्तिः किᳬंस्विदासीद्बृहद्वयः ॥ कास्वि
दासीत्पिलिप्पिलाकास्विदासीत्पिशङ्गिला ॥ ५३ ॥ द्यौरा
सीत् ॥ द्यौरासीत्पूर्व्वचित्तिरश्वंऽआसीद्बृहद्वयः ॥ अविरासी
त्पिलिप्पिलारात्त्रिरासीत्पिशङ्गिला ॥ ५४ ॥ काऽईम् ॥
काऽईमरेपिशङ्गिलाकाऽईङ्कुरुपिशङ्गिला ॥ कऽईमास्कन्दम

र्षतिकऽईम्पन्थांव्विसर्प्पति ॥ ५५ ॥ अजारे । पिशङ्गिला
श्श्वाविक्त्कुरुपिशङ्गिला ॥ शशऽआस्क्कन्दमर्षत्यहिः पन्थांव्वि
सर्प्पति ॥ ५६ ॥ कत्त्यंस्य । व्विष्ठाः कत्त्यक्क्षराणिकतिहोमासः क
तिधासमिद्धः ॥ यज्ज्ञस्यंत्त्वाव्विदथापृच्छमत्त्रकतिहोतारऽऋतु
शोयजन्ति ॥ ५७ ॥ षडस्य । व्विष्ठाः शतमक्क्षराण्यशीतिर्होमाः
समिधोहतिस्त्रः ॥ यज्ज्ञस्यंतेव्विदथाप्प्रब्ब्रवीमिसप्तहोतारऽऋतु

१ अत्र "या तु हसपदानाम सा तु रेफपकारयो. । ( या शि ) रकारपकारयोर्योगे हसपदानाम स्वरभक्ति. । अत्र हसपदानामस्वरभक्तिः । एवं सर्वत्र ।

शोयंजन्ति ॥५८॥ कोऽअस्य। वेदभुवनस्यनाभिङ्कोद्यावापृथि
वीऽअन्तरिक्षम्॥ कःसूर्य्यस्यवेदबृहतोजनित्रङ्कोवेदचन्द्रमं
सँय्यतोजाः ॥५९॥ वेदाहम्॥ वेदाहमस्यभुवनस्यनाभिंवेदद्या
वापृथिवीऽअन्तरिक्षम्॥ वेदसूर्य्यस्यबृहतोजनित्रमथोवेदच
न्द्रमसँय्यतोजाः ॥६०॥ पृच्छामित्वा ॥ पृच्छामित्वापरमन्तं
म्पृथिव्याःपृच्छामियत्रभुवनस्यनाभिः ॥ पृच्छामित्वावृ
ष्णोऽअश्वस्यरेतःपृच्छामिवाचःपरमंव्योम ॥ ६१ ॥ इयं

वेदि॑÷ ॥ इ॒यंवेदि॒ᳪपरो॑ऽअन्त॑÷पृथि॒व्याऽअ॒यँऽय॒ज्ञोभुव॑नस्य
नाभि॑÷ ॥ अ॒यᳪसोमो॒वृष्ण्णो॒ऽअश्व॑स्य॒रेतो॑ब्र॒ह्मायंवा॒चᳪप॑र॒मं
व्व्योम ॥ ६२ ॥ [१०-१०] सु॒भूःस्व॑य॒म्भूः । प्प्र॑थ॒मोन्त
र्म्म॑ह॒त्यर्ण्ण॒वे ॥ द॒धेह॒गर्भ॑मृ॒त्वियँ॒ऽयतो॑जा॒तःप्प्र॒जाप॑ति॒ᳪ
॥ ६३ ॥ होता॑यक्षत् ॥ होता॑यक्षत्प्प्र॒जाप॑ति॒ᳪसोम॑स्यम
हि॒म्न्नः ॥ जु॒षता॒म्पिब॑तु॒सोम॒ᳪहोत॒र्य्यज॑ ॥ ६४ ॥ प्रजा॑पते
न । त्वदे॒तान्य॒न्योविश्वा॑रू॒पाणि॒परि॒ता॑बभूव ॥ यत्का॑मा

स्त्तेजुहुमस्त्तन्नोऽअस्त्तुव्वयᳪस्यांमुपतंयोरयीणाम् ॥ ६५ ॥
[ ३-११ ] इतिश्रीवाजसनेयसंहितायां त्रयोविंशोऽध्यायः
॥ २३ ॥ ॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥
अश्वस्त्तूपरो, धूम्म्रान्व्वसन्ताय, समुद्द्रायशिशुमारान्, मयुः
प्प्राजापत्त्योदशका, श्चत्वारश्चत्वारिᳪशत् [ अ. २४ मं.
४० अनु. ४ ] ॥ हरिः ॐ ॥ अश्वस्त्तूपरः ॥ अश्वस्त्तूपरोगो
मृगस्त्तेप्प्राजापत्त्याः कृष्ष्णग्ग्रीवऽआग्नेयोरराटेपुरस्त्तात्त्सार

स्वतीमेष्ष्युधस्त्ताद्धन्वौराश्विनावधोरामौबाह्वोःसौमापौ
ष्णणःश्यामोनाभ्याᳪंसौर्य्यायमौश्वेतश्चकृष्ष्णश्चपार्श्वयो
स्त्वाष्ट्रौलोमशसक्त्थौसक्थ्योर्व्वायव्य÷श्वेतःपुच्छऽइन्द्रायस्व
पस्यायव्वेहद्वैष्ष्णवोव्वामनः ॥ १ ॥ रोहितोधूम्म्ररोहि
तᳪं। कर्कन्धुरोहितस्त्तेसौम्म्याबभ्रुररुणबभ्रुᳪंशुकबभ्रुस्त्ते
व्वारुणाःशितिरन्ध्रोन्यतं÷शितिरन्ध्रᳪंसमन्तशितिरन्ध्रस्त्ते
सावित्राःशितिबाहुरन्यतं÷शितिबाहुᳪंसमन्तशितिबाहुस्त्ते

बार्हस्पत्त्याः पृषती क्षुद्रपृषतीस्त्थूलपृषतीता मैत्रावरुण्ण्यः ॥ २ ॥ शुद्धवालःसर्व्वशुद्धवालः ॥ शुद्धवालःसर्व्वशुद्धवालोमणिव्वालस्त्तऽआश्विनाः श्येतः श्येताक्षोरुणस्त्ते रुद्राय पशुपतये कर्ण्णायामाऽअवलिप्तारौद्रा नभोरूपाः पार्ज्जन्न्याः ॥ ३ ॥ पृश्निस्तिरश्चीनपृश्निः ॥ पृश्निस्तिरश्चीनपृश्निरूर्द्ध्व पृश्निस्त्ते मारुताः फल्गूर्ल्लोहितोर्ण्णी पलक्षीताः सारस्वत्त्यः प्लीहाकर्ण्णः शुण्ठाकर्ण्णोद्ध्यालोहकर्ण्णस्त्ते त्त्वाष्ट्राः कृष्ण्ण

ग्ग्रीवंश्शितिकक्क्षोऽञ्जिसक्क्थस्त्तऽऐन्द्राग्ग्नाः कृष्णाञ्जिरल्प्पाञ्जिर्म्महाञ्जिस्त्तऽउषस्याः ॥ ४ ॥ शिल्प्पाव्वैश्श्वदेव्व्यः ॥ शिल्प्पाव्वैश्श्वदेव्व्योरोहिण्ण्यस्त्र्यवयोव्वाचेविज्ज्ञाताऽअदित्यैसरूपाधात्रेव्वत्सतर्य्योदेवानाम्पत्क्नीब्भ्यः ॥ ५ ॥ कृष्णग्ग्रीवाऽआग्ग्नेयाः । शितिब्भ्रवोव्वसूनाᳯं रोहितारुद्राणाᳯं श्वेताऽअवरोकिणऽआदित्यानान्नभोरूपाः पार्ज्जन्न्याः ॥ ६ ॥

१ अञ्जिसक्थ्यस्त्ते । अत्र "भाविभ्य स पं ममानपदे" (शु य प्रा ३ अ ५९ सू ) इत्यनेन सस्य पत्वे प्राप्ते "अनुसन्त्तनो तु वृहस्पतिसुतस्य सुसमिद्धाय सुसन्दृशममत्वाऽभिसविशन्तु सुसस्याअतिस्थूलम्मुसले पत्नी सयाजान्क्रतुस्थालञ्जिकूस्थो (शु य प्रा ३ अ. ८२ सू.) इत्यनेन सस्य प्रकृतिभावे रूपम् ।

उन्नतऽऋषभः ॥ उन्नतऽऋषभोव्वामनस्तऽऐन्द्रावैष्णवाऽ
उन्नतश्शितिबाहुश्शितिपृष्ठस्तऽऐन्द्राबार्हस्पत्त्याः शुकरूपा
व्वाजिनाः कल्म्माषाऽआग्निमारुताः श्यामाः पौष्णाः ॥ ७ ॥
एताऽऐन्द्राग्नाः ॥ एताऽऐन्द्राग्नाद्विरूपाऽअग्नीषोमीया
व्वामनाऽअनड्वाहऽआग्नावैष्णवाव्वशामैत्रावरुण्ण्योन्यतऽए
न्योमैत्र्यः ॥ ८ ॥ कृष्णग्ग्रीवाऽआग्नेयाः ॥ कृष्णग्ग्री

१ अत्र "जात्ये च स्वरिते चैव वकारो यत्र दृश्यते । कर्तव्यस्तूभयक्षेपो "वायुष्ट्या– इति निदर्शनम्" ( या शि ) न्युब्जापरपर्यायं जात्यस्वरे वकारे यकारे वा वःसश्रृङ्गवत् कुमारीकुचयुग्मवत् (–) इत्याकारको दक्षिणहस्तस्याङ्गुल्या उभयक्षेपः कार्यं । यथा वकारयोगे जात्य उभयक्षेपस्तथैव यकारेऽप्युभयक्षेप ।

वाऽआग्नेयाबभ्रवं सौम्म्याः श्वेतावायव्याऽअविज्ञाताऽ
अदित्यैसरूपाधात्रेवत्सतर्य्योदेवानाम्पत्नीभ्यः ॥ ९ ॥
कृष्णाभौमाः ॥ कृष्णाभौमाधूम्राऽआन्तरिक्षाबृहन्तो
दिव्याःशबलावैद्युताःसिध्मास्तारकाः ॥ १० ॥ [ १०-१ ]
धूम्रान्वसन्ताय ॥ धूम्रान्वसन्तायालभतेश्वेतान्ग्रीष्माय
कृष्णान्वर्षाभ्योरुणाञ्छरदेपृषतोहेमन्तायपिशङ्गाञ्छि
शिराय ॥ ११ ॥ त्र्यवयोगायत्र्यै । पञ्चावयस्त्रिष्टुभेदित्य

वाहोजगंत्त्यैत्रिवृत्त्साऽअंनुष्टुभैतुर्य्यवाहंऽउष्णिणहैं ॥ १२ ॥
पृष्ठवाहौंव्विराजें ॥ पृष्ठवाहौंव्विराजंऽउक्क्षाणौंबृहत्त्याऽऋष
भाःककुभेंनड्वाहं÷पङ्क्त्यैधेनवोतिच्छन्दसे ॥ १३ ॥ कृष्णण
ग्ग्रीवाऽआग्ग्नेयाः ॥ कृष्णणग्ग्रीवाऽआग्ग्नेयाबब्भ्रवं÷सौ
म्म्याऽउंपद्ध्वस्त्ताःसांवित्त्रावंत्सतर्य्य÷सारस्वत्त्य÷श्यामाः
पौष्णणाःपृश्श्नंयोमारुताबंहुरूपावैंश्श्वदेवाव्वशाद्यावापृथिवी
सं. ४६ यां ॥ १४ ॥ उक्त्ताःसंञ्चराः ॥ उक्त्ताःसंञ्चराऽएताऽऐन्द्रा

ग्न्नाऽकृष्ण्णाव्वारुणाऽपृश्न्नयोमारुताऽकायास्तूपराऽ ॥ १५ ॥
अग्न्नयेनीकवते । प्प्रथमजानालभतेमरुद्भ्यं÷सान्तपने
ब्भ्यं÷सवात्त्याम्मरुद्भ्योगृहमेधिब्भ्योबष्क्किहाम्मरुद्भ्यं÷
क्क्रीडिब्भ्यं÷सꣳसृष्टाम्मरुद्भ्यꣳस्वतवद्भ्योनुसृष्टान् ॥ १६ ॥
उक्क्ताऽसञ्चराऽ ॥ उक्क्ताऽसञ्चराऽएताऽऐन्द्राग्न्नाऽप्प्राशृङ्गा[1]
माहेन्द्रावहुरूपाव्वैश्वकर्म्मणाऽ ॥ १७ ॥ धूम्म्राबब्भ्रुनीका

१ प्राशृङ्गा। अत्र प्रशृङ्ग इति पदम्। प्रशब्दात् शृङ्गशब्दे परे "प्रवणशृङ्गयासेषु" (शु. य. प्रा ३ अ १०५ सू ) इत्यनेन ह्रस्वाकारस्य दीर्घाकारे प्राशृङ्गा।

शाᳲ । पितॄणाᳬं सोमवतां[1] बभ्रवो धूम्रनीकाशाᳲ पितॄणां बर्हि

षदां कृष्णा बभ्रुनीकाशा[2]ᳲ पितॄणामग्निष्वात्तानां कृष्णाᳶ पृ

षन्तस्त्रैयम्बकाᳶ ॥ १८ ॥ उक्ताᳶ सञ्चराᳶ ॥ उक्ताᳶ

सञ्चराऽएताᳲ शुनासीरीयाᳲ श्वेता वायव्या᳭ श्वेताᳶ सौर्याᳶ

॥ १९ ॥ वसन्ताय कपिञ्जलान् ॥ वसन्ताय कपिञ्जलानाल

१ सोमवतीम् । अत्र "विश्वदेव्यसोमौ" ( शु य. प्रा ३ अ ११८ सू ) इत्यनेन वतीशब्दपरे सोमशब्दाकारस्य दीर्घाकारविधानान्न वतापरे भवति, अतो न दीर्घ । २ कृष्णा बभ्रुनीकाशा । अत्र समानपदे "ऋपरेभ्य" इति णत्वप्राप्तौ "निवनिनस प्रपीनम्" ( शु य प्रा ३ अ ९१ सू ) इत्यनेन नि वनि नस प्रपीनम् एते नकारा प्रकृत्या भवन्ति समानपदे इति निषेधान्नात्र णत्वम् । त्वत्र निशब्दस्य दीर्घत्व "पीवासोमम्" ( शु य प्रा ३ अ १३० सू ) इत्यनेन भवति ।

भतेग्ग्रीष्म्मायंकलविङ्कान्वर्षाब्भ्यंस्तित्तिरीन्छरदेवर्त्तिकाहे
मन्तायककराञ्छिशिरायविककरान् ॥ २० ॥ [१०-२]
समुद्द्रायंशिशुमारान् ॥ समुद्द्रायंशिशुमारानालभतेपर्ज्जन्न्या
यमण्डूकानद्भ्योमत्त्स्यान्मित्त्रायंकुलीपयान्वरुणायनाक्क्रा
न् ॥ २१ ॥ सोमायहहंसान् ॥ सोमायहहंसानालभतेव्वायवेब
लाकाऽइन्द्राग्ग्निब्भ्याङ्कुञ्चान्मित्त्रायमद्गून्वरुणायचक्क्रवाका
न् ॥ २२ ॥ अग्ग्नयेकुटरून् ॥ अग्ग्नयेकुटरूनालभतेव्वनस्प्पति

ब्भ्यऽउलूकानग्नीषोमाब्भ्याञ्चाषानश्विब्भ्याम्मयूरान्मित्राव
रुणाब्भ्याङ्कपोतान् ॥ २३ ॥ सोमायलबान् ॥ सोमायलबा
नालभतेत्त्वष्ट्रेकौलीकान्गोषादीर्देवानाम्पत्नीब्भ्यङ्कुलीका
देवजामिब्भ्योग्नयेगृहपतयेपारुष्णान् ॥ २४ ॥ अह्नेपाराव
तान् ॥ अह्नेपारावतानालभतेरात्र्यैसीचापूरहोरात्रयोःसन्धि
ब्भ्योजतूर्म्मासेब्भ्योदात्यौहान्त्संवत्सरायमहतःसुपर्णान्
॥ २५ ॥ भूम्म्याऽआखून् ॥ भूम्म्याऽआखूनालभतेन्तरि

क्षायपाङ्क्त्रान्दिवेकशान्दिग्भ्योनकुलान्बभ्रूंकानवान्तर
दिशाभ्यः ॥ २६ ॥ वसुभ्यऽऋश्यान् ॥ वसुभ्यऽऋश्या
नालंभतेरुद्रेभ्योरुरूनादित्येभ्योन्यङ्कूविश्वेभ्योदेवेभ्यः
पृषतान्त्साध्येभ्यःकुलुङ्गान् ॥ २७ ॥ ईशानायपरस्वतः ॥
ईशानायपरस्वतऽआलंभतेमित्रायगौरान्वरुणायमहिषान्बृह
स्पतयेगवयाँस्त्वष्ट्रऽउष्ट्रान् ॥ २८ ॥ प्रजापतयेपुरुषान् ॥
प्रजापतयेपुरुषान्हस्तिनऽआलंभतेवाचेप्लुषींश्चक्षुषेमश

काऽन्छ्रोत्त्रांयभृङ्गाॅः ॥ २९ ॥ शतम् ॥१४००॥ प्रजापंतयेच ।
व्वायवेंचगोमृगोव्वरुंणायारण्ण्योमेषोसुमायकृष्ष्णोमनुष्ष्यरा
जायंमुर्क्कटः शार्दूलायंरोहिद्दंषभायंगवयीक्षिप्प्रश्श्येनायव्व
र्त्तिकानीलंङ्गोः क्क्रिमिः समुद्द्रायंशिशुमारोंहिमवंतेहस्त्ती
॥ ३० ॥ [ १०-३ ] मयुःप्प्राजापत्त्यः ॥ मयुःप्प्राजापत्त्यऽ
उलोहलिक्क्षण्णोंव्वृषदुढशस्त्तेधात्त्रेदिशाङ्क्कङ्कोधुङ्क्षाग्ग्नेयीकंल
विङ्कोलोहिताहिः पुंष्क्करसादस्त्तेत्त्वाष्ट्राव्वाचेक्क्रुञ्च्चः ॥ ३१ ॥

सोमायकुलुङ्गः ॥ सोमायकुलुङ्गऽआरण्ण्योजोनकुलःशका
तेपौष्ण्णाःक्क्रोष्टामायोरिन्द्रस्यगौरमृगःपिद्वोन्न्यङ्कुः कक्कट
स्त्तेनुमत्त्यैप्प्रतिश्श्रुत्त्कायैचक्रवाकः ॥ ३२ ॥ सौरीबलाका ।
शार्ग्गःसृंजयःशयाण्डकस्त्तेमैत्त्राःसरस्वत्त्यैशारिः पुरुषवाक्
श्वा[1]विद्धौमीशार्दूलोवृकःपृदाकुस्त्तेमन्न्यवेसरस्वतेशुकः पुरुष
वाक् ॥ ३३ ॥ सुपर्ण्णःपार्ज्जन्न्यः ॥ सुपर्ण्णःपार्ज्जन्न्यऽ
आतिर्व्वाहसोदार्व्विदातेव्वायवेबृहस्प्पतयेव्वाचस्प्पतयेपैङ्गराजो

१ श्वाविद्गोमी। अत्र श्वविद्धौमी इति पदम् । "अश्वरश्मिमतिसुमतिश्वसुत°" (शु. य प्रा. ३ अ ९८ सू. ) इत्यनेन वकारे परे श्वस्य ह्रस्वाकारस्य दीर्घाकार. ।

लजऽआन्तरिक्क्षः प्लुवो मुद्गुर्मत्स्यस्त्ते नदीपतये द्यावापृथिवी यं कूर्म्मः ॥ ३४ ॥ पुरुषमृगश्चन्द्रमसं ॥ पुरुषमृगश्चन्द्रमसो गोधा कालका दार्व्वाघाटस्त्ते व्वनस्प्पतीनाङ्कृकवाकुः सावित्रो हंसो व्वातस्य नाक्को मकरं कुलीपयस्त्ते कूपारस्य ह्रियैशल्यकं ॥ ३५ ॥ एण्यहः ॥ एण्यह्नो मण्डूको मूषिका तित्[2]

---

१ दार्वाघाट । दारु आघात इति पदम् । अत्र "त आपादनाऽस्वरात्" ( शु. य प्रा. ३ अ. ४८ सू ) इत्यनेनानादस्वरादाघाशब्दात्परस्य तकारस्य मूर्द्धन्यो भवति दार्वाघाट इति । २ तित्तिरिस्ते । अत्र "सकारे परे च" ( शु य. प्रा ३ अ ७८ सू. ) इत्यनेन सकारपरादेकाक्षरादेकारपरे तकारे विसर्जनीयस्य सकार प्राप्त । स "प्रकृत्या नानापदस्थे तकारे ( शु य. प्रा ३ अ ८१ सू ) इत्यनेन प्रकृतिभावे प्राप्ते "अनुसन्तनोतु०" ( शु. य. प्रा. ३ अ ८२ सू ) इत्यनेन निषिद्ध्यते । सकारो भवत्येव ।

त्तिरिस्त्तेसुप्पर्णाँल्लोपाशऽआश्विनश्शःकृष्णोरात्र्याऽऋक्षौज

तूश्सुषिलीकातऽइतरजनानाञ्जहकाव्वैष्णवी ॥ ३६ ॥ अन्न्य

वापोर्द्धमासानाम् ॥ अन्न्यवापोर्द्धमासानाम्मृश्श्यौमयूरः

सुपर्णस्त्तेगन्धर्व्वाणामपामुद्रोमासाङ्कश्श्यपोरोहित्कुण्डृणा

चीगोलत्तिकातेप्सरसाम्मृत्त्यवेसितः ॥ ३७ ॥ व्वर्षाहूर्ऋतु

नाम् ॥ व्वर्षाहूर्ऋतूनामाखुश्शःकशौमान्थालस्त्तेपितॄणाम्बलायाा

१ "ए-ओ-आभ्यामुदात्ताभ्यामकारो निहितश्च य । स च यत्र प्रलुप्येते त चाभिनिहितं विदु " या शि. ॥ अत्र ते आप्सरसामित्यासीत् । अत्रैकारात्परस्याकारस्य "एदोद्भ्यामकार." (शु. य प्रा अ ३६१ सू ) इत्यनेनाकारस्य पूर्वरूप. । अत्राभिनिहितस्वरो ज्ञेय । तथौकारेऽपि वेदोसीत्यादौ ।

जगरोव्वसूनाङ्कपिञ्जलङ्कपोतऽउलूकःशशस्तेनिर्ऋत्यैव्वरुणा

यारण्ण्योमेषः ॥ ३८ ॥ श्वित्रऽआदित्त्यानाम् ॥ श्वित्रऽ

आदित्त्यानामुष्ट्रोघृणीवान्वार्ध्रीनसस्तेमत्त्याऽअरण्ण्यायसृ

मरोरुरूरौद्रःक्क्वयिः कुटरुर्दात्त्यौहस्तेवाजिनाङ्कामायपिकः

॥ ३९ ॥ खड्गोवैश्वदेवः । श्वाकृष्ण्णःकर्ण्णोगर्दभस्तरक्षु

स्तेरक्षसामिन्द्रायसूकरःसिꣳहोमारुतःकृकलासःपिप्पका

1 घृणीवान् । अत्र "अश्वरश्मिमतिसुमतिश्वसुतचारयघृणि" इत्यनेन वकारे परे घृणिशब्दस्येकारस्य दीर्घंकार । 2 वार्ध्रीनसस्ते । अत्र समानपदे "ऋपरेभ्य" इति णत्वप्राप्तौ "लिवनिनस. प्रपीनम्" (शु य प्रा. २ अ ९१ सू.) इत्यनेन नस णत्व निषिद्ध्यते । मतो न णत्वम् ।

कुनिस्त्तेशंरुघ्यायैर्व्विश्वैषान्देवानाम्पृषतः ॥ ४० ॥ [ १०-४ ]
इति श्रीवाजसनेयसंहितायां चतुर्विंशोऽध्यायः ॥ २४ ॥



श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ शादन्दद्भिर्नवैकैका, हिरण्यगर्ब्भश्चतस्त्र, ऽआनोदश, मानोमित्रो, यदश्वस्याष्टकौ, यत्तेषाडि, मानुकंद्वे, पञ्चदशसप्तचत्वारिꣳशत् ॥ [अ. २५-मं. ४७ अनु. १५] हरिः ॐ ॥ शादन्दुद्भिः ॥



शादन्दुद्भिरवकान्दन्तमूलैर्म्मृदम्बस्वैस्त्तेगान्दꣳष्ट्राभ्याꣳ

सरस्वत्याऽअग्ग्रजिह्वञ्जिह्वायाऽउत्सादमवक्क्रन्देनतालुव्वा

जञ्हनुब्भ्यामपऽआस्येनवृषणमाण्डाब्भ्यामादित्याँश्मश्श्रु

भिर्पन्थानम्भ्रूब्भ्यान्द्यावापृथिवीव्वर्तोब्भ्याँव्विद्युतङ्कनीनका

ब्भ्याᳬंशुक्क्लायस्वाहाकृष्णायस्वाहापार्याणिपक्ष्माण्यव्वा

र्या᳘ऽइक्षवःपार्याणिपक्ष्माणिपार्याऽइक्षवः ॥ १ ॥

[१-१] व्वातम्प्राणेन ॥ व्वातम्प्राणेनापानेननासिकेऽउपयाम

१ अवक्रन्देन तालु इत्यत्र "ऋपरेभ्य" इत्यनेन समानपदे नस्य प्राप्तं णत्वं "तवर्गे च" (शु. य. प्रा. ३ अ. ९४ सू.) इत्यनेन निषेधान्न भवति।

मधरेणौष्ठेनसदुत्तरेणप्प्रकाशेनान्तरमनूकाशेनबाह्यन्निवेष्ष्यम्
म्मूर्द्ध्नास्तनयित्नुन्निर्बाधेनाशनिम्मस्तिष्क्केणविद्युतङ्कनी
नकाब्भ्याङ्कर्णाब्भ्याᳪंश्रोत्रᳪंश्रोत्राब्भ्याङ्कर्णौतेदनीमधर
कण्ठेनापःशुष्ककण्ठेनचित्तम्मन्न्याभिरदितिᳪंशीर्ष्णानि
र्ऋतिन्निर्ज्जर्ज्जल्प्येनशीर्ष्ष्णासंक्क्रोशैःप्प्राणान्रेष्ष्माणᳪंस्तुपेन
॥२॥ [१-२] मशकान्केशैः ॥ मशकान्केशैरिन्द्रᳪंस्वपसावहेन

बृहस्पतिᳬ शकुनिसादेन[1] कूर्म्मान्खुरैराक्रमणᳬ स्थूराभ्या
मृक्षलाभिः कपिञ्जलाञ्जवञ्जङ्घाभ्यामध्वानम्बाहुभ्याञ्जा
म्बीलेनारण्यमग्निमतिरुग्भ्याम्पूषणन्दोर्भ्यामश्विनावᳬ
साभ्याᳬ रुद्रᳬ रोराभ्याम् ॥३॥ [१-३] अग्नेः पक्षतिः ॥
अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीया सोमस्य चतुर्थ्य
दित्यै पञ्चमीन्द्राण्यै षष्ठी मरुताᳬ सप्तमी बृहस्पतेरष्टम्यर्य

---

१ शकुनि सादेन । अत्र "भाविभ्य स प समानपदे" (शु य प्रा ३ अ ५६ सू) इत्यनेन सस्य षत्वमाप्तौ "पृथिवीदिव्युपरिचर्षणिशकुनिया-सिभ्य" (शु य प्रा ३ अ ८४ सू) इत्यनेन शकुनिपरस्य सस्य प्रकृतिभावे न षत्वम् ।

ष्णोनवमीधातुर्दशमीन्द्रस्यैकादशीवरुणस्यद्वादशीयमस्यत्र
योदशी ॥४॥ [१-४] इन्द्राग्न्योःपक्षतिः । सरस्वत्यैनि
पक्षतिर्मित्रस्यतृतीयापाञ्चतुर्थीनिर्ऋत्यैपञ्चम्यग्नीषोम
योःषष्ठीसर्पाणाꣳसप्तमीविष्णोरष्टमीपूष्णोनवमीत्वष्टुर्द
शमीन्द्रस्यैकादशीवरुणस्यद्वादशीयम्यैत्रयोदशीद्यावापृथि
व्योर्दक्षिणम्पार्श्वंविश्वेषान्देवानामुत्तरम् ॥५॥ [१-५]
मरुताꣳस्कन्धाः ॥ मरुताꣳस्कन्धाविश्वेषान्देवानाम्प्रथ

माकीकसारुद्राणान्द्वितीयादित्यानान्तृतीयावायोःपुच्छम
ग्नीषोमयोर्भासदौक्रुञ्चौश्श्रोणिभ्यामिन्द्राबृहस्पतीऽऊ
रुभ्याम्मित्रावरुणावल्गाभ्यामाक्क्रमणꣳस्थूराभ्याम्बल
कुष्ठाभ्याम् ॥ ६ ॥ [ १-६ ] पूषणंवनिष्ठुना । न्धाही
न्त्स्थूलगुदयासर्प्पान्गुदाभिर्विह्रुतऽआन्त्रैरपोवस्तिनावृषण
माण्डाभ्यांवाजिनꣳशेपेनप्प्रजाꣳरेतसाचाषान्पित्तेनप्प्रदरा
न्पायुनाकूश्मान्छकपिण्डैः ॥ ७ ॥ [ १-७ ] इन्द्रस्य

क्क्रोडः ॥ इन्द्रस्यक्क्रोडोदित्त्यैपाजस्यन्दिशाञ्जत्रवोदित्त्यै
भसज्जीमूतान्हृदयौपशेनान्तरिक्षम्पुरीततानभऽउदर्य्येणच
क्कवाकौमतस्न्नाभ्यान्दिवंवृक्काभ्याङ्गिरीन्प्लाशिभिरुपला
न्प्लीह्नावल्म्मीकान्क्लोमभिर्ग्लौभिर्ग्गुल्म्मान्हिराभिःस्रव
न्तीर्ह्रदान्कुक्षिभ्याᳬसमुद्रमुदरेणवैश्वानरम्भस्मना ॥८॥
[१-८] विधृतिन्नाभ्यां । घृतᳬरसेनापोयूष्णामरीचीर्व्वि
प्रुड्भिर्न्नीहारमूष्मणाशीनंवसयाप्प्रुष्वाऽअश्रुभिर्ह्रादुनी

हृषीकाभिरस्नारक्षाॅᳪसिचित्राण्ण्यङ्गैर्न्नक्षत्राणिरूपेणपृथि
वीन्त्वचाजुम्बकायस्वाहा ॥ ९ ॥ [ १-९ ] हिरण्ण्यग
र्भश्समृ ॥ हिरण्ण्यगर्भश्समवर्त्ततारग्रेभूतस्यजातश्पतिरे
कऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहवि
षाविधेम ॥ १० ॥ यश्प्प्राणतश् ॥ यश्प्प्राणतोनिमिष
तोमहित्वैकऽइद्राजाजगतोबभूव ॥ यऽईशेऽअस्यद्विपद
श्चतुष्प्पदश्कस्मैदेवायहविषाविधेम ॥ ११ ॥ यस्येमे ।

हिमवन्तोमहित्वायस्यंसमुद्रꣳरसयांसहाहुः ॥ यस्येमाः
प्प्रदिशोयस्यंबाहूकस्म्मैदेवायंहविषांविधेम ॥ १२ ॥ यऽ
आत्मदाः ॥ यऽआत्मदाबलदायस्यविश्वंऽउपासतेप्प्रशिषँ
ज्यस्यंदेवाः ॥ यस्यच्छायामृतँज्यस्यंमृत्युःकस्म्मैदेवायंहवि
षांविधेम ॥ १३ ॥ [ ४-१० ] आनं ÷ ॥ आनोभद्राःक्क्र
तंवोयन्तुविश्वतोदब्धासोऽअपरीतासऽउद्भिदं ÷ ॥ देवानोय
थासदमिद्वृधेऽअसन्नप्प्रायवोरक्क्षितारोदिवेदिवे ॥१४॥ देवा

नांम्भुद्राः ॥ देवानांम्भुद्रासुमतिर्ऋजूयताम्[1] देवानां ᳬरातिर्भिनोनिवर्त्तताम् ॥ देवानां ᳬसुख्यमुपसेदिमा[2] व्वयन्देवानऽआयुः प्रतिरन्तुजीवसें ॥ १५ ॥ तान्पूर्व्वया । निविदांहूमहेव्वयम्भगंम्मित्रमदितिन्दक्षंमस्त्रिधंम् ॥ अर्य्यमणंव्वरुणᳬ सोमंमश्विनासरंस्वतीनः सुभगामयंस्करत् ॥ १६ ॥ तन्नो ॥ तन्नोव्वातोमयोभुव्वांतुभेषजन्तन्माता पृथिवीतत्पिताद्यौः ॥

---

१ ऋजूयता । अत्र यकारे परे "अथोदारिथ" ( शु य प्रा ३ अ. ११३ सू ) इत्यनेन ह्रस्वाकारस्य दीर्घे ऋजूयता । २ उपसेदिमाव्वयम् । अत्र "अध्वरशिममतिसुमतिश्वसुतश्वरयष्टणिसेदिमे" ( शु य प्रा ३ अ. ९८ सू ) इत्यनेन वकारे परे उपसेदिमपदघटितह्रस्वाकारस्य दीर्घाकार ।

तद्ग्रावांणꣳसोमसुतोंमयोभुवस्तदंश्विनाशृणुतन्धिषण्ण्यायुवम्
॥ १७ ॥ तमीशांनम् ॥ तमीशांनञ्जगंतस्तस्त्थुषस्प्प
तिन्धियञ्जिन्न्वमवंसेहूमहेव्वयम् ॥ पूषानोयथावेदंसामसंद्वृधे
रंक्क्षितापायुरदंब्धःस्वस्त्तये ॥ १८ ॥ स्वस्त्तिनं÷ ॥ स्वस्त्ति
नऽइन्द्रोंवृद्धश्श्रंवाꣳस्वस्त्तिनं÷पूषाव्विश्श्ववेदाꣳ ॥ स्वस्त्तिन
स्त्ताक्क्ष्योंऽअरिंष्टनेमिꣳस्वस्त्तिनोबृहस्प्पतिर्दधातु ॥ १९ ॥

१ वृहस्पति । अत्र "तद्बृहतौ करपत्योस्तलोपश्च" (शु य प्रा ३ अ ५२ सू ) तद् वृहतैतौ करपतिशब्दयोर्यथासख्य सकारेण व्यवधीयेते तकारस्य लोपो भवति । अत्र वृहच्छब्दात्पतिशब्दे परे तकारस्य लोपे सकारस्य विधानम्। तत "ऊष्मान्तस्थाभ्यश्च स्पर्श " (शु य प्रा ४अ.१०२) इत्यनेन पकारस्य द्वित्वम् ।

पृषदश्वा मरुतः ॥ पृषदश्वा मरुतः पृश्निमातरः शुभंया
वानो विदथेषु जग्मयः ॥ अग्निजिह्वा मनवः सूरचक्षसो वि
श्वे नो देवाऽअवसागमन्निह ॥ २० ॥ भद्रङ्कर्णेभिः ।
शृणुयाम देवा भद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तु
ष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ २१ ॥ शत
मित् ॥ शतमिन्नु शरदोऽअन्ति देवा यत्रा नश्चक्रा जरसन्तनूना
म् ॥ पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः

॥ २२ ॥ अदि॑तिर्द्यौः ॥ अदि॑तिर्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑ति
र्म्मा॒ता सपि॒ता सपु॒त्रः ॥ विश्वे॑दे॒वाऽअदि॑ति॒ḥपञ्च॒जना॒ऽअदि॑
ति॒र्ज्जा॒तमदि॑ति॒र्ज्जनि॑त्त्वम् ॥ २३ ॥ [ १०-११ ] मानः ॥
मानो॑मि॒त्रोव्वरु॑णोऽअर्य्य॒मायुरिन्द्रं॑ऽऋभु॒क्षामरु॒तḥपरि॑ख्य
न् ॥ यद्वा॒जिनो॑दे॒वजा॑तस्य॒सप्तेḥप्रव॒क्ष्यामो॑वि॒दथे॑वी॒र्य्या॑णि
॥ २४ ॥ यन्निर्णिज॑ ॥ यन्नि॒र्णिजा॒रेक्ण॑सा॒प्प्रावृ॑तस्य॒राति
ङ्गृभी॒ताम्मु॑ख॒तोनय॑न्ति ॥ सुप्रा॑ङ्जोमेम्म्य॑द्वि॒श्वरू॑पऽइन्द्रा

पूष्णोऽप्रियमप्प्यैतिपाथः ॥२५॥ एषच्छागः । पुरोऽअश्वे
नवाजिनापूष्णोभागोनीयतेविश्वदेव्यः ॥ अभिप्रियँऽस्य
त्पुरोडाशमर्वतात्त्वष्टेदेनꣳसौश्रवसायंजिन्वति ॥२६॥ यद्धवि
ष्ष्यम् ॥ यद्धविष्ष्यमृतुशोदेवयानन्त्रिर्म्मानुषाः पर्य्यश्वन्न
यन्ति ॥ अत्रापूष्णःप्रथमोभागऽएतियज्ञन्देवेभ्यःप्र
तिवेदयन्नजः ॥ २७ ॥ होताध्वर्युः ॥ होताध्वर्युरावयाऽ
अग्निमिन्धोग्ग्रावग्ग्राभऽउतशꣳस्तासुविप्रः ॥ तेनयज्ञे

१ अत्रापूष्णण । अत्र "पूष्णो जहीमस्लेष्वत्र" (शु य प्रा ३ अ १२१ सू ) इत्यनेन पूष्ण जहीम ते इत्येतेषु पदेषु परेषु अत्रशब्दस्य दीर्घाकार ।

न्स्वरङ्कृतेनास्विष्टेनवृक्क्षणाऽआपृणद्धम् ॥ २८ ॥ सुपब्रस्क्का
ऽउत । येयूंपवाहाश्चषालँऽयेऽअंश्वयूपायुतक्क्षंति ॥ येचार्व्वं
तेपचंनꣳसम्भरंन्त्युतोतेषांमभिगूर्त्तिर्न्नऽइन्वतु ॥ २९ ॥
उपप्प्र ॥ उपप्प्रागांत्सुमन्मेंधायिमन्मंदेवानामाशाऽउपंवीत
पृंष्ठꣳ ॥ अन्वेनंविप्प्राऽऋषंयोमदन्तिदेवानांम्पुष्टेचंकृमासुब
न्धुम् ॥ ३० ॥ यद्वाजिनं÷ ॥ यद्वाजिनोदामंसन्दानमर्व्वं
तोयाशीर्षण्ण्यारशनारज्जुंरस्य ॥ यद्वांघास्यप्प्रभृंतमास्येतृणꣳ

सर्व्वाताते ऽअपिदेवेष्वस्तु ॥ ३१ ॥ [८-१२] यदश्वस्य ।
क्रविषोमक्षिकाशयद्वास्वरौस्वधितौरिप्तमस्ति ॥ यद्ध
स्तयोःशमितुर्यन्नखेषुसर्व्वाताते ऽअपिदेवेष्वस्तु ॥ ३२ ॥
यदूवध्यम् ॥ यदूवध्यमुदरस्यापवातिय ऽआमस्यक्रविषो
गन्धो ऽअस्ति ॥ सुकृतातच्छमितारःकृण्वन्तूतमेधंशृत
पाकम्पचन्तु ॥ ३३ ॥ यत्ते ॥ यत्तेगात्रादग्निनापच्य
मानादभिशूलन्निहतस्यावधावति ॥ मातद्भूम्यामाश्रिष

न्मातृणेषुदेवेभ्यस्तदुशद्भ्योरातमंस्तु ॥ ३४ ॥ येवाजि
नंम् ॥ येवाजिनम्पारिपश्यंन्तिपक्कँय्यऽईमाहुःसुरभिर्न्नि
र्हरेति ॥ येचार्वतोमाᳫंसभिक्षामुपासंतऽउतोतेषामभिगूर्त्ति
र्न्नऽइन्वतु ॥३५॥ यन्नीक्षंणम् ॥ यन्नीक्षंणम्माँस्पचन्याऽ
उखायायापात्राणियूष्णऽआसेचंनानि ॥ उष्मण्यापिधा
नाचरूणामङ्काःसूनाःपरिभूषन्त्यश्वम् ॥ ३६ ॥ मात्वा ॥
मात्वाग्निर्द्ध्वनयीद्धूमगन्धिर्म्मोखाभ्राजन्त्युभिविक्तुज

इ॒ष्टं वी॒तम॒भिगू॑र्त्तं॒ वष॑ट्कृत॒न्तन्दे॒वास॒: प्रति॑ गृभ्ण॒न्त्यश्व॑म् ॥ ३७ ॥

यन्निक्र॑मणन्नि॒षद॑नं वि॒वर्त्त॑नं॒ यच्च॒ पड्वी॑श॒मर्व॑त॒: ॥ यच्च॑ प॒पौ यच्च॑ घा॒सिं ज॒घास॒ सर्वा॒ ता ते॒ऽअपि॑ दे॒वेष्व॑स्तु ॥ ३८ ॥

यदश्वा॑य॒ वास॑ऽ उपस्तृ॒णन्त्य॑धीवा॒सं या हिर॑ण्यान्यस्मै ॥ स॒न्दान॒मर्व॑न्त॒म्पड्वी॑शम्प्रि॒या दे॒वेष्वा या॑मयन्ति ॥ ३९ ॥ [८-१२] सप्त ।

---

१ अधीत्राम्म्। अत्र "अश्वरश्मि०" (शु य प्रा. ३ अ ९८ सू.) इत्यनेन वासमित्यस्य वकारे परे अधि इत्यस्य ह्रस्वाकारस्य दीर्घकार ।

सादेमहंसाशूकृतस्यपाꣳछ्यांवाकशंयाव्वातुतादं ॥ स्रुचेवताहु

विषोऽअद्धरेषुसर्वांतातेब्रह्मणासूदयामि ॥ ४० ॥ चतुस्त्रिꣳ

शद्वाजिनः ॥ चतुस्त्रिꣳशद्वाजिनोदेवबंन्धोर्वंक्रीरश्वंस्यस्वधि

तिःसमेति ॥ अच्छिद्रागात्रांवयुनांकृणोतुपरुꣳष्परुरनुघुष्या

विशस्त ॥ ४१ ॥ एकस्त्वष्टुंः ॥ एकस्त्वष्टुर[2]श्वंस्याविशु

स्ताद्वायन्तारांभवतस्तथऽऋतुः ॥ यातेगात्राणामृतुथाकृ ॥५२॥

१ अनुघुष्याविशस्त । अत्र "अश्वरश्मिमतिसुमतिश्वसुतचारय०" ( शु य प्रा ३ अ ९८सू ) इत्यनेन वकारे परे घुष्येत्यस्य ह्रस्वाकारस्य दीर्घाकार. । २ अश्वस्यादिशस्तात्० । अत्र "अश्वरश्मिमतिसुमतिश्वसुताचारयघृणिसेदिमेन्द्रियधारयचित्रमङ्गुरवयुनाश्वस्य०" इत्यनेन वकारे परे अश्वशब्दस्याकारस्य दीर्घाकार ।

णोमितातापिण्डांनाम्प्रजुंहोम्म्यग्नौ ॥ ४२ ॥ मात्त्वां ।
तपात्प्रियऽआत्क्मापियन्तम्मास्वधितिस्तन्न्वऽआतिष्ठिपत्ते ॥
मातेगृध्नुरंविशस्तातिहायंछिद्रागात्राण्यसिनामिथूकः ॥ ४३ ॥
नवै ॥ नवाऽउंऽएतन्म्रियसेनरिष्ष्यसिदेवाँ२॥ ऽइदेषिपथि
भिः सुगेभिः ॥ हरीतेयुञ्जापृषंतीऽअभूतामुपास्त्थाद्वाजीधु
रिरासंभस्य ॥ ४४ ॥ सुगव्यन्नः ॥ सुगव्यंन्नोवाजीस्वश्व्यंम्पुं
सः पुत्राँ२॥ ऽउतविश्वापुषंꣳरयिम् ॥ अनागास्त्त्वन्नोऽअदि

१ विश्वापुष, । अत्र "विश्वसहमुन्युषवसुपु" । ( अ य मा २ अ १०२ सू. ) इत्यनेन पुषपरे विश्वाकारस्य दीर्घाकार ।

तिं꣡ कृणोतु꣡ क्षत्र꣡न्नो꣡ऽअश्वो꣡ व्व꣡नता꣡ᳪं꣡ हवि꣡ष्म꣡मान्
[ ६-१३ ] इ꣡मानु । कम्भुवं꣡नासी꣡षं꣡धा꣡मेन्द्रं꣡ श्च꣡ व्विश्वे꣡ च꣡ दे꣡वाः ॥ ४५ ॥
आ꣡दि꣡त्यै꣡रि꣡न्द्र꣡ᳪं꣡स꣡गणो꣡ म꣡रु꣡द्भि꣡रस्म꣡भ्यं꣡भेषजा꣡ क꣡रत् ॥
य꣡ज्ञं꣡ न꣡स्त꣡न्वञ्च꣡ प्र꣡जा꣡ञ्चा꣡दि꣡त्यै꣡रि꣡न्द्रः꣡ स꣡ह꣡सी꣡षधा꣡ति ॥ य꣡ज्ञ
अ꣡ग्ने꣡ त्व꣡म् ॥ अ꣡ग्ने꣡ त्व꣡न्नो꣡ऽअ꣡न्त꣡म꣡ऽउ꣡त त्रा꣡ता꣡ शि꣡वो꣡ भ꣡वा꣡ व꣡रू꣡ ॥ ४६ ॥
थ्य꣡ः ॥ व꣡सु꣡र꣡ग्नि꣡र्व꣡सु꣡श्र꣡वा꣡ऽअ꣡च्छा꣡ न꣡क्षि꣡ द्यु꣡म꣡त्त꣡म꣡ᳪं꣡ र꣡यि꣡न्दाः꣡ ॥

१ सीपधामेन्द्रश्च । सीसधामेन्द्रश्च इति पदम् । अत्र "भाविम्य स प समानपदे" ( शु य. प्रा ३ अ. ५६ सू ) सकारस्य षत्वे ...

तन्त्वांशोचिष्ठदीदिवꣳसुम्नायंनूनमीमहेसखिभ्यः ॥ ४७ ॥
[२-१४] इतिश्रीवाजसनेयसंहितायांपञ्चविंशोऽध्यायः ॥२५॥

श्रीवेदपुरुषाय नमः॥ अनुवाकसूत्रम्॥ अग्निश्चपंचदशो, च्चातऽ
एकादश, द्वौ षाड्विꣳशतिः [ अ. २६ मं. २६ अनु. २ ]॥ हरिः
ॐ ॥ अग्निश्च । पृथिवीचसन्नतेतेमेसन्नमतामदोवायुश्चान्त
रिक्षञ्चसन्नतेतेमेसन्नमतामदऽआदित्यश्चद्यौश्चसन्नतेतेमेसन्न
मतामदऽआपश्चवरुणश्चसन्नतेतेमेसन्नमतामदः ॥ सप्तसꣳस

दोऽअष्टमीभूंतसाधंनी ॥ सकामाँ२॥ऽअध्वंनस्कुरुसँज्ञानंमस्तु
मेमुना ॥ १ ॥ यथेमाम् ॥ यथेमांवाचंङ्कल्याणीमावदांनिजनें
भ्यः ॥ ब्रह्मराजन्याभ्याᳬशूद्रायचार्य्यायचस्वायचारंणा
यच ॥ प्रियोदेवानान्दक्षिणायैदातुरिहभूंयासमयम्मेकामः
समृध्यतामुपंमादोनंमतु ॥ २ ॥ बृहंस्पतेऽअति ॥ बृहंस्पतेऽ
अतियदर्य्योऽअर्हाद्युमद्विभातिक्रतुंमज्जनेषु ॥ यद्दीदयच्छवं

१ अध्वनस्कुरु इति पदे। "अध्वनस्कुर्वीति च" (शु य. प्रा ३ अ २७ सू ) इत्यनेनात्र कुरुत्तरे पदे अध्वनो विसर्जनीयस्य सकारो जात.।
तत "ऊष्मान्तस्थाभ्यश्च स्पर्शा." (शु य प्रा ४ अ. १०२ सू ) इत्यनेन ककारस्य द्वित्वम्।

सऽऋतप्प्रजातुतदुस्म्मासुद्द्रविंणन्धेहिचित्रम् ॥ उपयामगृं
हीतोसिबृहस्प्पतयेत्त्वैषतेयोनिर्बृहस्प्पतयेत्त्वा ॥ ३ ॥ इन्द्र
गोमंन् ॥ इन्द्रगोमंन्निहायाहिपिबासोमᳫंशतक्क्रतो ॥
विद्यद्भिर्ग्रावभिᳫंसुतम् ॥ उपयामगृंहीतोसीन्द्रायत्त्वागोमंतऽ
एषतेयोनिरिन्द्रायत्त्वागोमंते ॥ ४ ॥ इन्द्रायाहि ॥ इन्द्रा
याहिवृत्रहन्पिबासोमᳫंशतक्क्रतो ॥ गोमद्भिर्ग्रावभिᳫंसुतम् ॥
उपयामगृंहीतोसीन्द्रायत्त्वागोमंतऽएषतेयोनिरिन्द्रायत्त्वा

गोमते ॥ ५ ॥ ऋतावानंवैश्वानरम् ॥ ऋतावानंवैश्वानरमृत
स्यज्ज्योतिषस्पतिम् ॥ अजस्रङ्घर्ममीमहे ॥ उपयामगृही
तोसिवैश्वानरायत्त्वैषतेयोनिर्वैश्वानरायत्त्वा ॥ ६ ॥ वैश्वा
नरस्यसुमतौ । स्यामराजाहिकम्भुवनानामभिश्रीः ॥ इतो
जातोविश्वमिदंविचष्टेवैश्वानरोयततेसूर्य्येण ॥ उपयामगृही
तोसिवैश्वानरायत्त्वैषतेयोनिर्वैश्वानरायत्त्वा ॥ ७ ॥ वैश्वान
रोनः ॥ वैश्वानरोनऽऊतयऽआप्रयातुपरावतः ॥ अग्निरु

क्त्थेनुव्वाहंसा ॥ उपयामगृंहीतोसिव्वैश्वानरायंत्त्वैषतेयोनिर्व्वै
श्वानरायंत्त्वा ॥ ८ ॥ अग्निर्ऋषिं ॥ अग्निर्ऋषिंपवमानं
पाञ्चंजन्यंपुरोहितं ॥ तमीमहेमहागयम् ॥ उपयामगृंही
तोस्यग्नयेंत्त्वाव्वर्च्चसऽएषतेयोनिरग्नयेंत्त्वाव्वर्च्चसे ॥ ९ ॥ महाँ
२॥ऽइन्द्रं ॥ महाँ२॥ऽइन्द्रोव्वज्रंहस्तंषोडशीशर्म्मयच्छ
तु ॥ हन्तुपाप्मानँय्योस्मान्द्वेष्टि ॥ उपयामगृंहीतोसिमहे
न्द्रायंत्त्वैषतेयोनिर्म्महेन्द्रायंत्त्वा ॥ १० ॥ तंव्वं ॥ तंव्वोदु

स्स्मम्मृंतीषहुंव्वसोम्म्मन्दानमन्धसः ॥ अभिवृत्सन्नस्वसरेषुधे
नवऽइन्द्रंङ्गीर्ब्भिर्न्नवामहे ॥ ११ ॥ यद्वाहिष्ठम् ॥ यद्वाहिष्ठ
न्तदुग्ग्नयेबृहदर्च्चविभावसो ॥ महिषीवुत्त्वद्र्यिस्त्त्वद्वाजाऽउ
दीरते ॥ १२ ॥ एहि ॥ एह्युषुब्ब्रवाणितेग्ग्नऽइत्त्थेतंरागिरंः ॥
एभिर्व्वर्द्धासऽइन्दुभिः ॥ १३ ॥ ऋतवस्त्ते ॥ ऋतवस्त्तेयुज्ञं
वितंन्वन्तुमासारक्षन्तुतेहविंः॥ संव्वत्त्सरस्तेयुज्ञन्दंधातुनः



१ अभिवत्सन् । अत्र "अश्वरश्मिमति०" (शु य प्रा ३ अ ९८ सू ) इत्यनेन प्राप्तस्य अभिशब्दस्य वकारे परे प्राप्तस्य दीर्घेकारस्य "अभिविख्येप वीरविश्ववत्स०" (शु य प्रा ३ अ १०० सू ) [illegible] रेषु दीर्घनिषेधात्रात्र वत्सशब्दपरे दीर्घेकार ।

प्प्रजाङ्गपरिंपातुनः ॥ १४ ॥ उपह्वरेगिरीणाम् ॥ उपह्वरेगि
रीणाᳪंसङ्गमेचंनदीनांम् ॥ धियाव्विप्प्रोऽअजायत ॥ १५ ॥
[ १५-१ ] उच्चाते ॥ उच्चातेंजातमन्धंसोदिविसद्भूम्म्यादंदे ॥
उग्ग्रᳪंशर्म्ममहिश्श्रवं÷ ॥ १६ ॥ सनं÷ ॥ सनऽइन्द्रायुय
ज्यवेव्वरुणायमरुद्भ्यं÷ ॥ व्वरिवोवित्त्परिस्स्रव ॥ १७ ॥
एनाव्विश्श्वानि ॥ एनाव्विश्श्वान्न्यर्य्यऽआद्युम्म्नानिमानुषाणाम् ॥

१ अत्र भूमि आददे । "भूमेश्चाकारेऽपृक्ते" (शु य प्रा ४ अ ३८ सू ) इत्यनेनाकारेऽपृक्तपरे भूमिशब्दस्य विसर्गस्य लोप ततो यकारे भूम्याददे।

सिषासन्तोवनामहे ॥ १८ ॥ अनुंवीरैः ॥ अनुंवीरैरनु
पुष्ष्यास्म्मगोभिरश्वैरनुसर्वैणपुष्टैः ॥ अनुद्विपदानुचतु
ष्प्पदावयन्देवानोयुज्ञमृतुथानंयन्तु ॥१९॥ अग्नेपत्नीः ॥
अग्नेपत्नीरिहावंहदेवानामुशतीरुपं ॥ त्वष्टारंसोमंपीतये
॥२०॥ अभियुज्ञम् ॥ अभियुज्ञङ्गृणीहिनोग्नावोनेष्टःपिबं
ऽऋतुना ॥ त्वꣳहिरत्नधाऽअसि ॥ २१ ॥ द्रविणोदाःपिपी
षति ॥ जुहोतप्प्रचंतिष्ठत ॥ नेष्ट्रादृतुभिरिष्ष्यत ॥ २२ ॥

तवायम् ॥ तवायꣳसोमस्त्वमेह्यर्वाङ्शश्वत्तमꣳसुमनाऽअ
स्यपाहि ॥ अस्मिन्यज्ञेबर्हिष्ष्यानिषद्यादधिष्वेमञ्जठरऽ
इन्दुमिन्द्र ॥ २३ ॥ अमेवन्नः ॥ अमेवन्नःसुहवाऽआहिगन्त
नानिबर्हिषिसदतनारणिष्टन ॥ अथामन्दस्वजुजुषाणोऽअन्ध
सस्त्वष्टर्देवेभिर्जनिभिःसुमद्गणः ॥ २४ ॥ स्वादिष्ठयामदि
ष्ठया ॥ स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ॥ इन्द्रायपात
वेसुतः ॥ २५ ॥ रक्षोहाविश्वचर्षणिरभियोनिमयोहते ॥

द्रोणेसुधस्त्थमासदत् ॥ २६ ॥ [११-२] ॥ २ ॥ इति
श्रीवाजसनेयसंहितायां षड्विंशतितमोऽध्यायः ॥ २६ ॥ ॥
श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ समास्त्वादशो,
द्वौऽअस्य, पीवोऽअन्नाद्वादशका, वभिस्त्वैकादश, चत्त्वारः
पंचचत्त्वारिꣳशत् [अ. २७ मं. ४५ अनु. ४]॥ हरिःॐ॥
समास्त्वा ॥ समास्त्वाग्नऽऋतवोव्वर्द्धयन्तुसंव्वत्त्सराऽऋषयोया
यानिसत्त्या ॥ सन्दिव्येनदीदिहिरोचनेनव्विश्वाऽआभाहिप्र

दिशश्चतंस्त्रः ॥ १ ॥ सञ्चं ॥ सञ्चेद्ध्यस्वांग्ग्नेप्प्रचंबोधयैनमुच्चं
तिष्ठमहुतेसौभंगाय ॥ माचंरिषदुपसत्तातेंऽअग्ग्नेब्ब्रह्माणंस्ते
यशसंः सन्तुमान्न्ये ॥ २ ॥ त्वामंग्ग्ने ॥ त्वामंग्ग्नेव्वृणतेब्ब्राह्म
णाऽइमेशिवोऽअंग्ग्नेसंव्वरंणेभवानः ॥ सपत्नहानोंऽअभिमा
तिजिच्चस्वेगयेंजागृह्यप्प्रंयुच्छन् ॥३॥ इहैव ॥ इहैवाग्ग्नेऽअ
धिधारयारयिम्माल्त्वानिक्रंन्पूर्व्वचितोंनिकारिणंः ॥ क्षत्रमं
ग्ग्नेसुयमंमस्तुतुब्भ्यंमुपसत्ताव्वंर्द्धतान्तेऽअनिष्टृतः ॥४॥ क्षत्रे

णाग्ग्ने ॥ क्षुत्रेणाग्ग्नेस्वायुःसᳬरंभस्वमित्रेणाग्ग्नेमित्रधेयेयत
स्व ॥ सुजातानांम्मद्ध्यमुस्त्थाऽएधिराज्ञामग्ग्नेविहुव्योदीदि
हीह ॥ ५ ॥ अतिनिहः ॥ अतिनिहोऽअतिस्रिधोत्त्यचि
त्तिमत्त्यरातिमग्ग्ने ॥ विश्वाह्यग्ग्नेदुरितासहस्वाथास्म्मब्भ्यᳬ
सहवीराᳬरयिन्दाः ॥ ६ ॥ अनाधृष्ष्योजातवेदाः ॥ अनाधृ
ष्ष्योजातवेदाऽअनिष्टृतोविराडग्ग्नेक्षत्रभृद्दीदिहीह ॥ विश्वा
ऽआशाःप्प्रमुञ्चन्म्मानुषीभिर्यᳬशिवेभिरद्यपरिपाहिनोवृधे

॥ ७ ॥ बृहंस्पतेसवितः ॥ बृहंस्पतेसवितर्ब्बोधयैनुसꣳशिं
तश्चित्त्सन्तुराꣳसꣳशिंशाधि ॥ वृर्द्धयैनम्महुतेसौभंगायुवि
श्वंऽएनुमनुंमदन्तुदेवाः ॥ ८ ॥ अमुत्त्रभूयादधं ॥ अमुत्त्रभू
यादधुसद्यमस्युबृहंस्पतेऽअभिशंस्तेरमुञ्चः ॥ प्रत्त्यौहताम्
श्विनांमृत्त्युमंस्म्माद्देवानांमग्ग्नेभिषजाशचींभिः ॥ ९ ॥ उद्व
यम् ॥ उद्वयन्तमंसुस्प्परिस्वःपश्श्यंन्तुऽउत्तंरम् ॥ देवन्देवुत्रा
सूर्य्यमगंन्मज्ज्योतिरुत्तमम् ॥ १० ॥ [ १०-१ ] ऊर्द्ध्वाऽअं

स्यसमिधोभवन्त्यूर्द्ध्वाशुक्क्राशोचीꣳष्यग्ग्नेः ॥ द्युमत्तमासुप्प्र
तीकस्यसूनोः ॥ ११ ॥ तनूनपादसुरꣳ ॥ तनूनपादसुरोव्वि
श्ववेदादेवोदेवेषुदेवः ॥ पथोऽअनक्क्तुमद्ध्वाघृतेन ॥ १२ ॥
मद्ध्वायज्ञम् ॥ मद्ध्वायज्ञन्नक्क्षसेप्प्रीणानोनराशꣳसोऽअग्ग्ने ॥
सुकृद्देवःसविताव्विश्ववारꣳ ॥ १३ ॥ अच्छायम् ॥ अच्छाय
मेतिशवसाघृतेनेडानोव्वह्निर्न्नमसा ॥ अग्ग्निꣳस्रुचोऽअद्ध्वरे
षुप्प्रयक्षसु ॥ १४ ॥ सयक्क्षत् ॥ सयक्क्षदस्यमहिमानमग्ग्नेः

सऽईम्मुन्द्रासुंप्प्रयसं÷ ॥ व्वसुश्चेतिष्ठोव्वसुधातंमश्च ॥१५॥ द्वारो देवीः ॥ द्वारोदेवीरन्न्वंस्यव्विश्वेव्व्रतादंदन्तेऽअग्नेः ॥ उरुव्यचसो धाम्नापत्त्यंमानाः ॥१६॥ शतम् १६००॥ तेऽअंस्य ॥ तेऽअंस्य योषंणेदिव्व्येनयोनांऽउषासानक्ता ॥ इमँय्यज्ञमंवतामद्ध्वरन्नं÷ ॥ १७ ॥ दैव्व्याहोतारा ॥ दैव्व्याहोताराऽऊर्द्ध्वमंद्ध्वरन्नो ग्नेर्जिह्वामुभिगृंणीतम् ॥ कृणुतन्नंःस्विष्टिम् ॥ १८ ॥ तिस्रो

१ योनाऽउपासा। अत्र ओकारात्परस्य उप इत्यस्य "उप महोभिर्नन्तेमीकारैकारौकारनकारेभ्य" (शु य. प्रा ३ अ ११९ सू.) इत्यनेन उप इत्यय ह्रस्वो दीर्घत्वमापद्यते महोभि इत्यादिपरेषु सत्सु। तेनात्र ह्रस्वाकारस्य दीर्घाकार।

देवीः ॥ तिस्रोदेवीर्बर्हिरेदꣳसंदन्त्विडासरस्वतीभारती ॥
महीगृणाना ॥१९॥ तन्नः ॥ तन्नस्तुरीपमद्भुतम्पुरुक्षुत्वष्टा
सुवीर्यम् ॥ रायस्पोषंविष्यतुनाभिमस्मे ॥ २० ॥ वन
स्पतेव ॥ वनस्पतेवसृजाररराणस्त्मनादेवेषु ॥ अग्निर्हव्यꣳ
शमितासूदयाति ॥ २१ ॥ अग्नेस्वाहा । कृणुहिजातवेदऽ
इन्द्रायहव्यम् ॥ विश्वेदेवाहविरिदञ्जुषन्ताम् ॥ २२ ॥
[ १२-२ ] पीवोऽअन्नारयिवृधः । सुमेधाःश्वेतःसिषक्तिनि

युतांमभिश्रीः ॥ तेवायवेसमंनसोवितंस्त्थुर्विश्वेन्नरं॑स्वपृ
त्यानिचक्कुः ॥ २३ ॥ रायेनु । यञ्जज्ञतूरोदसीमेरायेदेवीधि
षणांधातिदेवम् ॥ अधंवायुन्नियुतं॑सश्चतस्वाऽउतश्वेतंवसुधि
तिन्निरेके ॥ २४ ॥ आपोह ॥ आपोहयद्बृहतीर्विश्वमायुन्ग
र्भन्दधानाजनयंन्तीरग्निम् ॥ ततोदेवानाᳪसमंवर्त्ततासुरे
कःकस्मैदेवायहविषांविधेम ॥ २५ ॥ यश्चित ॥ यश्चिदापो
महिनापर्य्यपश्यद्दक्षन्दधानाजनयंतीर्य्यज्ञम् ॥ योदेवे

च्छ्वाधिदेवऽएकऽआसीत्कस्मैदेवायहविषाविधेम ॥ २६ ॥
प्रयाभिः ॥ प्रयाभिर्य्यासिदाश्वाꣳसमच्छानियुद्भिर्व्वायविष्ट
येदुरोणे ॥ निनोरयिꣳसुभोजसंयुवस्वनिवीरङ्गव्यमश्व्यंञ्च
राधः ॥ २७ ॥ आनः ॥ आनोनियुद्भिःशतिनीभिरध्वरꣳ
सहस्रिणीभिरुपयाहियज्ज्ञम् ॥ व्वायोऽअस्मिन्त्सवनेमादय
स्वयूयम्पातस्वस्तिभिःसदानः ॥ २८ ॥ नियुत्वान्वायो ॥
नियुत्वान्वायवागह्ययꣳशुक्रोऽअयामिते ॥ गन्तासिसुन्व

तोगृहम् ॥ २९ ॥ व्वायोंशुक्क्रः ॥ व्वायोंशुक्क्रोऽअयामितेम्म
द्धोऽअग्ग्रन्दिविष्टिषु ॥ आयाहिसोमंपीतयेस्प्पार्होदेंवनियुत्त्वं
ता ॥ ३० ॥ व्वायुरंग्ग्रेगाः ॥ व्वायुरंग्ग्रेगायंज्ज्ञप्प्रीःसाकङ्गन्म
नंसायज्ज्ञम् ॥ शिवोनियुद्भिः÷शिवाभिः÷ ॥ ३१ ॥ व्वायोये । तेंस
हस्त्रिणोरथांसस्त्तेभिरागंहि ॥ नियुत्त्वान्त्सोमंपीतये ॥ ३२ ॥
एकयाच । दशभिंश्श्वस्वभूतेद्वाब्भ्यांमिष्टयेंव्विᳪशतीच ॥
तिसृभिंश्श्ववहंसेत्रिᳪशतांचनियुद्भिर्व्वायविहताव्विमुञ्च ॥ ३३ ॥

तवंव्वायो ॥ तवंव्वायवृतस्प्पते[1]त्त्वष्टुर्ज्जामातरद्भुत ॥ अवा
स्यावृणीमहे॥३४॥ [ १२-३ ] अभित्त्वा। शूरनोनुमोदुग्धा
इवधेनवं॥ ईशानमुस्यजगतंस्वर्द्दृशमीशानमिन्द्रतस्त्थुषं
॥ ३५ ॥ नत्त्वावान् ॥ नत्त्वावाँ२॥ ऽअन्न्योदिव्योनपात्थि
वोनजातोनजनिष्ष्यते ॥ अश्वायन्तोमघवन्निन्द्रव्वाजिनोग
व्यन्तस्त्वाहवामहे ॥ ३६ ॥ त्वामित् ॥ त्वामिद्धिहवामहे

1 ऋतस्प्पते अत्र। "प्रकृत्या कपयो खफयोश्च" (शु. य. प्रा. ३ अ. ११ सू.) इति प्रकृतिभावे प्राप्ते "ऋतावरौ च परयो" (शु य प्रा. ३ अ. ५१ सू.) ऋत अवरश्च यथासंख्यं पतिपरयो सकारेण व्यवधीयते। इति सकारे तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा ४ अ १०२ सू.) इत्यनेन पकारस्य [illegible]

सातौव्वाजस्यकारवं÷ ॥ त्वांव्वृत्रेष्विन्द्रसत्पतिन्नरस्त्वाङ्का

ष्ठास्वर्वतः ॥ ३७ ॥ सत्त्वम् ॥ सत्त्वन्नंश्चित्रव्वज्रहस्तधृ

ष्णुयामहस्त्तंवानोऽअद्रिवः ॥ गामश्वंꣳरत्थ्यमिन्द्रसङ्किर

सत्राव्वाजन्नजिग्ग्युषे ॥ ३८ ॥ कयानः ॥ कयान्नश्चित्रऽ

आभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ ३९ ॥

कस्त्वा । सत्त्योमदानाम्मꣳहिष्ठोमत्त्सदन्धसः ॥ दृढाचिदा

रुजेव्वसु ॥ ४० ॥ अभीषुणं÷ ॥ अभीषुणःसखीनामविता

---

१ अभीपुण । अत्र अभीपुन । अत्र समानपदत्वाभावेन णत्वाप्राप्तौ "निपणाय°" (शु य प्रा ३ अ. ८१ सू.) इत्यनेन णत्व निपात्यते ।

जरितॄणाम् ॥ शृतम्भवास्यूतये ॥ ४१ ॥ सुज्ज्ञायंज्ज्ञावङ्ं ॥
सुज्ज्ञायंज्ज्ञावोऽअग्नयेगिरागिराचदक्षसे ॥ प्रप्रवयममृतं
ञ्जातवेदसम्प्रियम्मित्रन्नशꣳसिषम् ॥४२॥ पाहिनः ॥ पाहि
नोऽअग्नऽएकयापाह्युतद्वितीयया ॥ पाहिगीर्भिस्तिसृभि
रूर्ज्जाम्पतेपाहिचतसृभिर्व्वसो ॥ ४३ ॥ ऊर्ज्जोनपातम् ॥
ऊर्ज्जोनपातꣳसहिनायमस्मयुर्दाशेमहव्यदातये ॥ भुवद्वा
जेष्ववितामुवद्वृधऽउतत्रातातनूनाम् ॥ ४४ ॥ संवत्सरो

सि । परिवत्सरोसीदावत्सरोसीद्वत्सरोसिवत्सरोसि ॥ उष संस्तेकल्पन्तामहोरात्रास्तेकल्पन्तामर्द्धमासास्तेकल्पन्ताम्मासास्तेकल्पन्तामृतवस्तेकल्पन्ताꣳसंवत्सरस्तेकल्पन्ताम् ॥ प्रेत्त्याऽएत्त्यैसञ्चाञ्चप्प्रचसारय ॥ सुपर्णचिदसितयादेवतयाङ्गिरस्वद्ध्रुवस्सीद ॥ ४५ ॥ [ ११-४ ] इति श्रीवाजसनेयसंहितायां सप्तविꣳशोऽध्यायः ॥ २७॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ होतायक्षदेकादश, देवंबर्हिर्द्वादश,

पुनरप्येवं, चत्त्वारः षट्चत्त्वारिᳬंशत् [ अ. २८ मं. ४६ अनु. ४ ] हरिः ॐ ॥ होतायक्क्षत् ॥ होतायक्क्षत्त्समिधेन्द्र
मिडस्प्पदेनाभापृथिव्व्याऽअधि ॥ दिवोव्वर्ष्मन्त्समिद्ध्यतऽ
ओजिष्ठश्चर्षणीसहांव्वेत्त्वाज्ज्यस्यहोतर्य्यज ॥ १ ॥ होता
यक्क्षत्तनूनपातमूतिभिः ॥ होतायक्क्षत्तनूनपातमूतिभिर्ज्जे
तारमपराजितम् ॥ इन्द्रन्देवᳬंस्वर्व्विदम्पथिभिर्म्मधुमत्त

१ चर्षणीसहावेत्तु । अत्र "भाविभ्य स प समानपदे" (शु य प्रा ३ अ ५६ सू ) इत्यनेन चर्षणीशब्दात्परस्य सस्य षत्वापत्तौ "पृथिवीदिव्युपरि-चर्षणि शकुनियासिभ्य." (शु य प्रा ३ अ ८४ सू ) इत्यनेन तत्परस्य सस्य प्रकृतिभावे न षत्वम् ।

मैन्नराशꣳसेनतेजसाव्वेत्वाज्ज्यस्यहोतर्य्यज ॥ २ ॥ होता
यक्षदिडाभिरिन्द्रम् ॥ होतायक्षदिडाभिरिन्द्रमीडितमाजु
ह्वानममर्त्यम् ॥ देवोदेवैःसवीर्य्योव्वज्रहस्तःपुरन्दरोव्वेत्वा
ज्ज्यस्यहोतर्य्यज ॥ ३ ॥ होतायक्षद्बर्हिषीन्द्रम् ॥ होता
यक्षद्बर्हिषीन्द्रन्निषद्वरंवृषभन्नर्य्यापसम् ॥ व्वसुभीरुद्रैरादि
त्यैꣳसयुग्भिर्बर्हिरासदद्वेत्वाज्ज्यस्यहोतर्य्यज ॥ ४ ॥ होता
यक्षदोजोन ॥ होतायक्षदोजोनवीर्य्यꣳसहोद्वारइन्द्रम

वर्द्धयन् ॥ सुप्प्रायणाऽअस्म्मिन्न्यज्ज्ञेव्विश्रयन्तामृतावृधो
द्वारऽइन्द्रायमीढुषेव्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ५ ॥ होता
यक्क्षदुषेऽइन्द्रस्य । धेनूसुदुघेमातरामही ॥ सवातरौनते
जंसावत्त्समिन्द्रमवर्द्धतांव्वीतामाज्ज्यस्यहोतर्य्यज ॥ ६ ॥ होता
यक्क्षद्दैव्याहोतारा । भिषजासखायाहविषेन्द्रम्भिषज्ज्यतः ॥
कवीदेवौप्प्रचेतसाविन्द्रायधत्तऽइन्द्रियंव्वीतामाज्ज्यस्यहोत
र्य्यज ॥ ७ ॥ होतायक्क्षत्तिस्रोदेवीः ॥ होतायक्क्षत्तिस्रोदेवी

र्भेषजन्त्रयंस्त्रिधातवोपसऽइडासरस्वतीभारतीमहीः ॥ इन्द्र
पत्नीर्हविष्मतीर्व्यन्त्वाज्यस्यहोतर्य्यज ॥ ८ ॥ होतायक्ष
त्त्वष्टारमिन्द्रम् ॥ होतायक्षत्त्वष्टारमिन्द्रन्देवम्भिषजं सुय
जंघृतश्रियम् ॥ पुरुरूपं सुरेतसम्मघोनमिन्द्राय त्त्वष्टादधदि
न्द्रियाणिवेत्वाज्यस्यहोतर्य्यज ॥९॥ होतायक्षद्वनस्पतिं
शमितारम् ॥ होतायक्षद्वनस्पतिं शमितारं शतक्रतुन्धि
योजोष्टारमिन्द्रियम् ॥ मध्वासमञ्जन्पथिभिः सुगेभिः स्वदाति

यज्ज्ञम्मधुनाघृतेनव्वेत्वाज्ज्यस्यहोतर्य्यज ॥१०॥ होतायक्ष
दिन्द्र ँ᳭ स्वाहा ॥ होतायक्षदिन्द्र ँ᳭ स्वाहाज्ज्यस्यस्वाहामेदस ँ᳭
स्वाहास्तोकाना ँ᳭ स्वाहास्वाहाकृतीना ँ᳭ स्वाहाहव्यसूक्तीना
म् ॥ स्वाहादेवाऽआज्ज्यपाजुषाणाऽइन्द्रऽआज्ज्यस्यव्यन्तुहो
तर्य्यज ॥ ११ ॥ [ ११-१ ] देवम्बर्हिरिन्द्रम् ॥ देवम्बर्हि
रिन्द्र ँ᳭ सुदेवन्देवैर्व्वीरवत्स्तीर्ण्णंव्वेद्यामवर्द्धयत् ॥ व्वस्तोर्व्वृत
म्प्राक्तोर्भृत ँ᳭ रायाबर्हिष्मतोऽत्यगाद्वसुवनेव्वसुधेयस्यव्वेतुय

जं ॥ १२ ॥ देवीर्द्वारः ॥ देवीर्द्वारऽइन्द्रंसङ्घातेवीड्वीर्या
मन्नवर्द्धयन् ॥ आवत्सेनतरुणेनकुमारेणचमीवतापार्वाणं
रेणुकंकाटन्नुदन्तांवसुवनेवसुधेयस्यव्यन्तुयजं ॥ १३ ॥ देवीऽ
उषासानक्ता ॥ देवीऽउषासानक्तेन्द्रंयज्ञेप्रयत्यह्वेताम् ॥
देवीर्विशःप्रायासिष्टांसुप्रीतेवसुधितेवसुवनेवसुधेयस्यवी
ताँऽयजं ॥ १४ ॥ देवीजोष्ट्री ॥ देवीजोष्ट्रीवसुधितीदेवमि

[1] देवी उपासा। अत्र "उपमहोभिर्नक्तमीकारेकारौकारनकारेभ्य" (शु.य.प्रा २ अ ११९सू.) इत्यनेन देवीशब्दस्थेकारात्परस्य उप इत्यस्य ह्रस्वाकारस्य दीर्घाकार।

न्द्रंमवर्द्धताम्॥ अयांश्यन्त्याघाद्वेषाᳪंस्यान्याववंक्षद्वसुवाऽय्या
णियजंमानायशिक्षितेव्वंसुवनेंव्वसुधेयंस्यव्वीताँऽयज ॥ १५ ॥
देवीऽऊर्ज्जाहुती ॥ देवीऽऊर्ज्जाहुतीदुघेंसुदुघेपयसेन्द्रंमवर्द्धता
म् ॥ इषमूर्ज्जमन्यावंक्षत्सग्धिᳪंसपीतिमन्यानवेनपूर्व्वन्दय
मानेपुराणेननवमधातामूर्ज्जमूर्ज्जाहुतीऽऊर्ज्जयंमानेव्वसुवाऽय्या
णियजंमानायशिक्षितेव्वंसुवनेंव्वसुधेयंस्यव्वीताँऽयज ॥ १६ ॥
देवादैव्यां ॥ देवादैव्याहोतारादेवमिन्द्रंमवर्द्धताम् ॥ हुताघे

शꣳसावाभांच्छ्वंवसुवार्य्याँणियजंमानायशिक्षितौव्वंसुवनैव्वसु
धेयंस्यव्वीतांय्यजं ॥ १७ ॥ देवीस्तिस्रः ॥ देवीस्तिस्रस्ति
स्रोदेवीःपतिमिन्द्रमवर्द्धयन् ॥ अस्पृक्षद्भारतीदिवꣳरुद्रैर्य्य
ज्ञꣳसरस्वतीडावसुमतीगृहान्वंसुवनैव्वसुधेयंस्यव्यन्तुयज
॥ १८ ॥ देवऽइन्द्रः ॥ देवऽइन्द्रोनराशꣳसस्त्रिवरूथस्त्रिब
न्धुरोदेवमिन्द्रमवर्द्धयत् ॥ शतेनशितिपृष्ठानामाहितꣳसहस्रेण
प्रवर्त्ततेमित्रावरुणेदस्यहोत्रमर्हतोबृहस्पतिःस्तोत्रमश्विना

द्धर्ष्यंवव्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ १९ ॥ देवोदेवैः ॥ देवो
देवैर्व्वनस्प्पतिर्हिरण्ण्यपण्णोर्मधुशाखःसुपिप्पलोदेवमिन्द्रमव
र्द्धयत् ॥ दिवमग्ग्रेणास्पृक्षदान्तरिक्षम्पृथिवीमदृंहीद्वसुव
नेव्वसुधेयस्यव्वेतुयज ॥ २० ॥ देवम्बर्हिः ॥ देवम्बर्हिर्व्वारिती
नान्देवमिन्द्रमवर्द्धयत् ॥ स्वासस्थमिन्द्रेणासन्नमन्न्याब
र्हीᳪंष्यभ्यभूद्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ २१ ॥ देवोऽ
अग्निः ॥ देवोऽअग्निःस्विष्टकृद्देवमिन्द्रमवर्द्धयत् ॥ स्विष्टकृ

वह्निः स्विष्टकृत्स्विष्टमद्य करोतु नो व्वसुवने व्वसुधेयस्य व्वेतु यज
॥ २२ ॥ अग्निमद्य । होतारमवृणीतायँऽयजमानः पचन्प
क्तीः पचन्पुरोडाशम्बध्नन्निन्द्राय च्छागम् ॥ सूपस्थाऽअद्य दे
वो व्वनस्पतिरभवदिन्द्राय च्छागेन ॥ अघत्तम्मेदस्तः प्रतिपच
ताग्रभीदवीवृधत्पुरोडाशेन ॥ त्वामद्यऽऋषे ॥ २३ ॥ [ १२-२ ]
होता यक्षत्समिधानम्महत् ॥ होता यक्षत्समिधानम्महद्य
शः सुसमिद्धं व्वरेण्यमग्निमिन्द्रं व्वयोधसम् ॥ गायत्रीञ्छन्दऽ

१ अ २१, म ६१—त्वामद्यऽऋषऽ आ० ॥ १ ॥ इति प्रतीक ॥

इन्द्रियन्त्र्यविङ्गांव्वयोदधद्वेत्त्वाज्ज्यस्यहोतर्य्यज ॥ २४ ॥ होता
यक्षत्तनूनपातमुद्भिदम् ॥ होतायक्षत्तनूनपातमुद्भिदँयं
गर्भमदितिर्दधेशुचिमिन्द्रंव्वयोधसम् ॥ उष्णिहञ्छन्दऽ
इन्द्रियन्दित्यवाहङ्गांव्वयोदधद्वेत्त्वाज्ज्यस्यहोतर्य्यज ॥ २५ ॥
होतायक्षदीडेन्यमीडितम् ॥ होतायक्षदीडेन्यमीडितंव्वृत्रह
न्तममिडाभिरीड्यँसहःसोममिन्द्रंव्वयोधसम् ॥ अनुष्टुभञ्छ
न्दऽइन्द्रियम्पञ्चाविङ्गांव्वयोदधद्वेत्त्वाज्ज्यस्यहोतर्य्यज ॥२६॥

होतायक्षत्सुबर्हिषम्पूषण्वन्तम् ॥ होतायक्षत्सुबर्हिषम्पू
षण्वन्तममर्त्त्यᳩसीदन्तम्बर्हिषिप्प्रियेमृतेन्द्रंव्वयोधसम् ॥
बृहतीञ्छन्दऽइन्द्रियन्त्रिवत्सङ्गांव्वयोदधद्वेत्वाज्ज्यस्यहोतर्य
ज ॥२७॥ होतायक्षद्व्यचस्वतीᳩसुप्प्रायणाᳩ ॥ होतायक्ष
द्व्यचस्वतीᳩसुप्प्रायणाऽऋतावृधोद्वारोदेवीर्हिरण्ययीर्ब्रह्मा
णमिन्द्रंव्वयोधसम् ॥ पङ्क्तिञ्छन्दऽइहेन्द्रियन्तुर्य्यवाहङ्गांव्व
योदधद्व्यन्त्वाज्ज्यस्यहोतर्यज ॥ २८ ॥ होतायक्षत्सुपेशा

सासुशिल्पे। बृहतीऽउभेनक्तोषासानदंर्शतेव्विश्वमिन्द्रंव्वयो
धसंम् ॥ त्रिष्टुभञ्छन्दंऽइहेन्द्रियम्पष्ठवाहङ्गांव्वयोदधंद्धीता
माज्ज्यंस्यहोतुर्य्यजं ॥२९॥ होतांयक्षत्प्रचेतसादेवानाम् ॥
होतांयक्षत्प्रचेतसादेवानांमुत्तमँय्यशोहोतांरादैव्यांकवीस
युजेन्द्रंव्वयोधसंम्॥ जगंतिञ्छन्दंऽइन्द्रियमंनड्वाहङ्गांव्वयोदधं
द्धीतामाज्ज्यंस्यहोतुर्य्यजं ॥३०॥ होतांयक्षत्पेशंस्वतीस्त्
त्रः ॥ होतांयक्षत्पेशंस्वतीस्त्त्वोदेवीहिंरण्ययीर्ब्भारंती

बृहतीम्महीऽपतिमिन्द्रँव्वयोधसम् ॥ व्विराजञ्छन्दऽइहेन्द्रि
यन्धेनुङ्गान्नव्वयोदधद्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३१ ॥ होता
यक्षत्सुरेतसन्त्वष्टारम् ॥ होतायक्षत्सुरेतसन्त्वष्टारम्पुष्टिव
र्द्धनꣳरूपाणिबिभ्रतम्पृथक्पुष्टिमिन्द्रँव्वयोधसम् ॥ द्विपदञ्छ
न्दऽइन्द्रियमुक्षाणङ्गान्नव्वयोदधद्वेत्वाज्ज्यस्यहोतर्य्यज ३२॥
होतायक्षद्वनस्पतिꣳशमितारम् ॥ होतायक्षद्वनस्पतिꣳश
मितारꣳशतक्रतुꣳहिरण्यपर्णमुक्थिनꣳरशनाम्बिभ्रतंव

शिम्भगमिन्द्रंव्वयोधसम् ॥ ककुभञ्छन्दऽइहेन्द्रियंव्वेहतङ्गांव्व
योदधद्वेत्वाज्ज्यस्यहोतर्य्यज ॥ ३३ ॥ होतायक्षत्स्वाहाकृती
रग्निम् ॥ होतायक्षत्स्वाहाकृतीरग्निङ्गृहपतिम्पृथग्वरुणम्भे
षजङ्कविंक्षत्रमिन्द्रंव्वयोधसम् ॥ अतिच्छन्दसञ्छन्दऽइन्द्रि
यम्बृहदृषभङ्गांव्वयोदधद्व्यन्त्वाज्ज्यस्यहोतर्य्यज ॥ ३४ ॥
[११-३] देवम्बर्हिः ॥ देवम्बर्हिर्व्वयोधसन्देवमिन्द्रमवर्द्ध
यत् ॥ गायत्र्याच्छन्दसेन्द्रियञ्चक्षुरिन्द्रेव्वयोदधद्वसुवनेव्वसु

धेयंस्यव्वेतुयजं ॥ ३५ ॥ देवीर्द्वारः ॥ देवीर्द्वारोंव्वयोधसꣳ
शुचिमिन्द्रमवर्द्धयन् ॥ उष्णिहाच्छन्दसेन्द्रियम्प्राणमिन्द्रे
व्वयोदधंद्वसुवनेंव्वसुधेयंस्यव्यन्तुयजं ॥ ३६ ॥ देवीऽउषासा
नक्ता । देवमिन्द्रंव्वयोधसंन्देवीदेवमंवर्द्धताम् ॥ अनुष्टुभा
च्छन्दसेन्द्रियम्बलमिन्द्रेव्वयोदधंद्वसुवनेंव्वसुधेयंस्यव्वीतांयजं
॥ ३७ ॥ देवीजोष्ट्री ॥ देवीजोष्ट्रीव्वसुधितीदेवमिन्द्रंव्वयो
धसंन्देवीदेवमंवर्द्धताम् ॥ बृहत्याच्छन्दसेन्द्रियꣳश्रोत्रमि

न्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वीताँऽयज ॥ ३८ ॥ देवीऽऊ
र्ज्जाहुती ॥ देवीऽऊर्ज्जाहुतीदुघेसुदुघेपयसेन्द्रंव्वयोधसन्देवी
देवमवर्द्धताम् ॥ पङ्क्त्याच्छन्दसेन्द्रियꣳशुक्रमिन्द्रेव्वयोद
धद्वसुवनेव्वसुधेयस्यव्वीताँऽयज ॥ ३९ ॥ देवादैव्या ॥ देवा
दैव्याहोतारादेवमिन्द्रंव्वयोधसन्देवौदेवमवर्द्धताम् ॥ त्रिष्टुभा
च्छन्दसेन्द्रियन्त्विषिमिन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वीताँ
ऽयज ॥ ४० ॥ देवीस्तिस्रः ॥ देवीस्तिस्रस्तिस्रोदेवीर्व्वयो

ध्वस्पतिमिन्द्रंमवर्द्धयन् ॥ जगंत्याच्छन्दंसेन्द्रियꣳशूषमि
न्द्रेवयोदधंद्वसुवनेव्वसुधेयंस्यव्यन्तुयजं ॥ ४१ ॥ देवोनराशꣳ
सः ॥ देवोनराशꣳसोदेवमिन्द्रंव्वयोधसंन्देवोदेवमंवर्द्धयत् ॥
व्विराजाच्छन्दंसेन्द्रियꣳरूपमिन्द्रेवयोदधंद्वसुवनेव्वसुधेयंस्य
वेतुयजं ४२ ॥ देवोव्वनस्पतिः ॥ देवोव्वनस्पतिर्द्देवमिन्द्रं
व्वयोधसंन्देवोदेवमंवर्द्धयत् ॥ द्विपदाच्छन्दंसेन्द्रियम्भगमि
न्द्रेवयोदधंद्वसुवनेव्वसुधेयंस्यव्वेतुयजं ॥ ४३ ॥ देवम्बर्हिः ॥

देवम्बर्हिर्व्वारितीनान्देवमिन्द्रँव्वयोधसन्देवन्देवमवर्द्धयत् ॥
ककुभाच्छन्दसेन्द्रियँयशऽइन्द्रेव्वयोदधद्वसुवनेव्वसुधेयस्यव्वे
तुयज ॥ ४४ ॥ देवोऽअग्निः । स्विष्टकृद्देवमिन्द्रँव्वयोधसन्दे
वोदेवमवर्द्धयत् ॥ अतिच्छन्दसाच्छन्दसेन्द्रियङ्क्षत्रमिन्द्रेव
योदधद्वसुवनेव्वसुधेयस्यव्वेतुयज ॥ ४५ ॥ अग्निमद्य ।
होतारमवृणीतायँयजमानः पचन्पक्तीः पचन्पुरोडाशम्बध्न
न्निन्द्रायव्वयोधसेच्छागम् ॥ सूपस्थाऽअद्यदेवोव्वनस्पतिर

भवदिन्द्रायवयोधसेच्छागेन ॥ अघुत्तम्मेदुस्तश्प्रतिपचुता
ग्रंभीदवीवृधुत्पुरोडाशेन ॥ त्वामुद्यऽऋषे ॥ ४६ ॥ [ १२-४ ]
इतिश्रीवाजसनेयसंहितायाम् अष्टाविंशोऽध्यायः ॥ २८ ॥
श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ समिद्धोऽअग्नन्ने
कादश, यदक्रन्दस्त्रयोदश, समिद्धोऽअद्यद्वादश, केतुंकृण्वँ
श्चतुर्विंᳪशति, श्चत्वारःषष्टिः [ अ. २९ मं. ६० अनु. ४ ] ॥
हरिः ॐ ॥ समिद्धोऽअग्नन् ॥ समिद्धोऽअग्नन्कृदरम्मती

नाङ्घृतमग्नेमधुमत्पिन्वमानः ॥ वाजीवहन्वाजिनञ्जातवे
दोदेवानांवक्षिप्प्रियमासधस्त्थम् ॥१॥ घृतेनाञ्जन् ॥ घृते
नाञ्जन्त्सम्पथोदेवयानाम्प्रजानन्वाज्यप्प्येतुदेवान् ॥ अनु
त्वासप्तेप्प्रदिशः सचन्ताँ स्वधामस्म्मैयजमानायधेहि ॥२॥
ईड्यश्च ॥ ईड्यश्चासिवन्द्यश्चवाजिन्नाशुश्चासिमेध्यश्चसप्ते ॥
अग्निष्ट्वादेवैर्वसुभिः सजोषाः प्प्रीतंवह्निंवहतुजातवेदाः ॥३॥
स्तीर्णम्बर्हिः । सुष्टरीमाजुषाणोरुपृथुप्प्रथमानम्पृथिव्याम् ॥

देवेभिर्युक्तमदितिःसजोषाःस्योनङ्कृण्वानासुवितेदधातु
॥ ४ ॥ एताऽउंवः । सुभगाविश्वरूपाविपक्षोभिःश्रयमाणाऽ
उदातैः ॥ ऋष्वाःसतीःकवषःशुम्भमानाद्वारोदेवीःसुप्राय
णाभवन्तु ॥ ५ ॥ अन्तरामित्रावरुणा ॥ अन्तरामित्रावरु
णाचरन्तीमुखँयज्ञानामभिसंविदाने ॥ उषासावाꣳसुहिर
ण्ययेसुशिल्पेऽऋतस्ययोनाविहसादयामि ॥ ६ ॥ प्रथमावा
म् ॥ प्रथमावाꣳसरथिनासुवर्णादेवौपश्यन्तौभुवनानिवि

श्वा ॥ अपिंप्प्रयञ्ञोदंनावास्मिममांनाहोतांराज्योतिं÷प्प्रदिशां
दिशन्तां ॥ ७ ॥ आदित्त्यैर्न्नो÷ ॥ आदित्त्यैर्न्नोभारंतीवष्टुय
ज्ञ६सरंस्वतीसहरुद्रैर्न्नऽआवीत् ॥ इडोपंहूतावसुंभिं६सजोषां
यज्ञन्नोदेवीरमृतेषुधत्त ॥८॥ त्वष्टांवीरम् ॥ त्वष्टांवीरन्देवकां
मज्ञजानत्त्वष्टुरवांजायतऽआशुरश्वं÷ ॥ त्वष्टेदंविश्श्वम्भुवंनञ्ज
जानबहो॒कर्त्तारंमिहयंक्षिहोत६ ॥९॥ अश्वोघृतेनं ॥ अश्वोघृ
तेनत्त्मन्न्यासमंक्तऽउपंदेवाँ २॥ऽऋंतुश॒पाथंऽएतु ॥ वनस्प्प

तिर्द्देवलोकम्प्रजानन्नग्निनाहव्यास्वदितानिवक्षत् ॥ १० ॥
प्रजापतेस्तपसा । वावृधानःसद्योजातोदधिषेयज्ञमग्ने ॥
स्वाहाकृतेनहविषापुरोगायाहिसाध्याहविरदन्तुदेवाः ॥ ११ ॥
[ ११-१ ] यदक्रन्दः । प्रथमञ्जायमानऽउद्यन्त्समुद्राद्
उतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महि
जातन्तेऽअर्वन् ॥ १२ ॥ यमेनदत्तम् ॥ यमेनदत्तन्त्रितऽ
एनमायुनगिन्द्र[1]ऽएणम्प्रथमोऽअध्यतिष्ठत् ॥ गन्धर्वोऽअस्य

1 इन्द्रऽएणम् । अत्र असमानपदत्वेनाप्राप्तौ "निषण्णाय रथवाहणमिन्द्रऽएणम्०" ( शु य प्रा ३ अ ८७ सू ) इत्यनेन णत्व निपात्यते ।

रशुनासंगृभ्णन्त्सूरादश्वंव्वसवोनिरंतष्ट ॥ १३ ॥ असिय
मः ॥ असियमोऽअस्यादित्योऽअर्व्वन्नसित्रितोगुह्येनव्व्रतेन ॥
असिसोमेनसमयाविपृक्तऽआहुस्तेत्रीणिदिविबन्धनानि
॥ १४ ॥ त्रीणिते ॥ त्रीणितऽआहुर्दिविबन्धनानित्रीण्यप्सु
त्रीण्यन्तःसमुद्रे ॥ उतेवमेव्वरुणश्छन्त्स्यर्व्वन्यत्रातऽआहुः
परमञ्जनित्रम् ॥ १५ ॥ इमातेव्वाजिन् ॥ इमातेव्वाजिन्नव
मार्जनानीमाशफानांꣳसनितुर्न्निधाना ॥ अत्रातेभद्रारश

नाऽअंपश्श्यमृतस्यया ऽअंभिरक्षन्तिगोपाः ॥१६॥ आत्क्मानंन्ते ॥ आत्क्मानंन्तेमनंसारादंजानामवोदिवापतयंन्तम्पतङ्गम् ॥ शिरोंऽअपश्श्यम्पथिभिंः सुगेभिंररेणुभिर्ज्जेहंमानम्पतत्रि ॥ १७ ॥ अत्रांते । रूपमुंत्तममंपश्श्यञ्जिगीषमाणमिषऽआपदेगोः ॥ यदातेमर्त्तोंऽअनुभोगमानडादिद्ग्रसिष्ठऽओषंधीरजीगः ॥ १८ ॥ अनुंत्त्वा ॥ अनुंत्त्वारथोऽअनुमर्य्योंऽअर्वन्ननुगावोऽनुभगंः कनीनांम् ॥ अनुव्रातांसस्त्तवं

१ अत्राते । अत्र ते परे अत्रशब्दस्य ह्रस्वाकारस्य "पूष्णो जहीमस्तेष्वत्र" ( शु य प्रा ३ अ १२१ सू ) इत्यनेन दीर्घं ।

सुकृत्यमीयुरनुदेवामंमिरेव्वीरुर्स्न्ते ॥ १९ ॥ हिरंण्ण्यशृङ्गो
यं÷ ॥ हिरंण्ण्यशृङ्गोयोऽअस्यपादामनोजवाऽअवंरऽइन्द्रंऽ
आसीत् ॥ देवाऽइदंस्यहविरद्यमायन्योऽअर्व्वन्तम्प्रथमोऽअ
ध्यतिष्ठत् ॥ २० ॥ ईर्म्मान्तासःसिलिकमध्यमासः ॥ ईर्म्मा
न्तासःसिलिकमध्यमासःसꣳशूरंणासोदिव्यासोऽअत्त्यां÷ ॥
हꣳसाऽइवश्रेणिशोयंतन्तेयदाक्षिषुर्दिव्यमज्ममश्वां÷
॥ २१ ॥ तवशरीरम् ॥ तवशरीरम्पतयिष्ण्णवर्व्वन्तवंचित्तं

वातंऽइवध्रजीमान्[1] ॥ तवशृङ्गाणिविष्ठितापुरुत्रारण्येषुजर्भुं
राणाचरन्ति ॥२२॥ उपप्र ॥ उपप्रागाच्छसनंवाज्यर्वादेवद्रीं
चामनसादीध्यानः ॥ अजःपुरोनीयतेनाभिरस्यानुपश्चात्कव
योयन्तिरेभाः ॥२३॥ उपप्र ॥ उपप्रागात्परमंयत्सधस्थम
र्वाँ २ ॥ऽअच्छापितरम्मातरञ्च ॥ अद्यादेवाञ्जुष्टतमोहिगम्याऽ
अथाशास्तेदाशुषेवार्य्याणि ॥२४॥ [१३-२] समिद्धोऽअद्य ।

---

१ ध्रजिमान् । अत्र "शृणुतत्विपिध्रजिभयत गिवेतसतिछरक्षा मकारे" (शु य प्रा ३ अ ११७ सू ) इत्यनेन मकारे परे गुते दीर्घा भवन्ति तेन दीर्घं ध्रजीमान् ।

मनुंषोदुरोणेदेवोदेवान्यंजसिजातवेदः ॥ आचुवहंमित्रमह
श्चिकित्वान्त्वन्दूतःकुविरंसिप्रचेंताः ॥२५॥ तनूंनपात्पथः ॥
तनूंनपात्पथऽऋतस्ययानान्मध्वांसमुञ्जन्त्स्वंदयासुजिह्व ॥ म
न्मांनिधीभिरुतयुज्ञमृन्धन्देंवत्राचंकृणुह्यध्वरन्नं÷ ।२६॥नरा
शꣳसंस्यमहिमानम् ॥ नराशꣳसंस्यमहिमानंमेषामुपंस्तोषा
मयजतस्यंयुज्ञैः॥येसुक्रतंवःशुचंयोधियन्धाःस्वदंन्तिदेवा
ऽउभयांनिहव्या ॥२७॥ आजुह्वांनऽईड्यं÷ ॥ आजुह्वांनऽ

ईड्योवन्द्यश्चायाह्यग्नेवसुभिःसजोषाः ॥ त्वन्देवानामसियह्व
होतासऽएनान्यक्षीषितोयजीयान् ॥ २८ ॥ प्राचीनम्बर्हिः । प्र
दिशापृथिव्यावस्तोरस्यावृज्यतेऽअग्रेऽअह्नाम् ॥ व्युप्रथतेवि
तरंवरीयोदेवेभ्योऽअदितयेस्योनम् ॥ २९ ॥ व्यचस्वतीरुर्विया ।
श्रयन्तामपतिभ्योनजनयःशुम्भमानाः ॥ देवीर्द्वारोबृहतीर्वि
श्वाभिन्वादेवेभ्योभवतसुप्रायणाः ॥ ३० ॥ आसुष्वयन्तीय
जतेऽउपाकेऽउषासानक्तासदतान्नियोनौ ॥ दिव्येयोषणेबृहती

१ उपाकेऽउपामा । अत्र एकारात्परस्य उप इत्यस्य ह्रस्वाकारस्य "उपमहोभिर्नक्के°" ( शु य. प्रा ३ अ ११९ सू ) इत्यनेन दीर्घाकार. ।

सुरुक्मेऽअधिश्श्रियंᳮशुक्रपिशन्दधाने॥३१॥दैव्याहोतारा।
प्रथमासुवाचामिमानायुज्ञम्मनुषोयजंध्यै ॥ प्रचोदयन्ताविदथेषुकारूप्राचीनञ्ज्योतिःप्रदिशादिशन्ता॥३२॥आनः॥
आनोयुज्ञम्भारतीतूयमेत्विडामनुष्वादिहचेतयन्ती॥तिस्रो
देवीर्बर्हिरेदᳫंस्योनᳮसरस्वतीस्वपसःसदन्तु ॥३३॥ यऽइमे ।
द्यावापृथिवीजनित्रीरूपैरपिᳫशद्भुवनानिविश्वा ॥ तमद्यहोत



१ अद्यहोतरि। अत्र "अद्य त हकारचकारभवतवृणीमहेदेवेषु" (शु. य. प्रा ३ अ. ११५ सू.) इत्यनेन हकारे परे दीर्घे प्राप्ते "नहोतरि" (शु. य. प्रा. ३ अ. ११६ सू.) इत्यनेन निषेधान्न दीर्घः।

रिषितोसर्जीयान्देवन्त्वष्टारमिहयंक्षिविद्वान् ॥ ३४ ॥ उपाव
सृजत्त्मन्न्या । समञ्ज्ञन्देवानाम्पाथऽऋतुथाहवीꣳषि ॥ वन
स्प्पतिꣳशमितादेवोऽअग्निःस्वदन्तुहव्यम्मधुनाघृतेन॥३५॥
सद्योजातःसद्योजातोव्यमिमीतयज्ञमग्निर्देवानामभवत्पु
रोगाः ॥ अस्यहोतुꣳप्प्रदिश्यृतस्यवाचिस्वाहाकृतꣳहविरद
न्तुदेवाः ॥३६॥ [ १२-३ ] केतुङ्कृण्वन् ॥ केतुङ्कृण्वन्नकेत

१ वनस्प्पति । अत्र "पत्यौ च सकारेण" ( शु य प्रा ३ अ ५० सू ) इत्यनेन पतिशब्दे परे वनशब्द सकारेण व्यवधीयते । तत ऊष्मान्तस्थाभ्य- श्च स्पर्शं ( शु य प्रा ३ अ १०२ सू ) इत्यनेन पकारस्य द्वित्वे रूपम्। "प्रकृत्या कपयो सफयोश्च" ( शु य प्रा ३ अ. ११ सू ) इत्यस्यापवादोऽयम्।

वेपेशोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः ॥३७॥ जीमूत
स्येवभवति ॥ जीमूतस्येवभवतिप्रतीकँय्यद्वर्म्मीयातिसमदा
मुपस्थे ॥ अनाविद्धयातन्वाजयत्वᳪसत्वावर्म्मणोमहिमा
पिपर्त्तु ॥ ३८ ॥ धन्वनागाः ॥ धन्वनागाधन्वनाजिञ्जयेमध
न्वनातीव्राःसमदोजयेम ॥ धनुःशत्त्रोरपकामङ्कृणोतिधन्व
नासर्व्वाःप्रदिशोजयेम ॥ ३९ ॥ वक्ष्यन्तीवेत् ॥ वक्ष्यन्ती
वेदागनीगन्तिकर्णम्प्रियᳪसखायम्परिषस्वजाना ॥ योषेव

शिङ्क्तेव्विततााधिधन्वञ्ज्याऽइयꣳसमनेपारयन्ती ॥ ४० ॥ तेऽ
आचरन्ती ॥ तेऽआचरन्तीसमनेवयोषामातेवपुत्रम्बिभृता
मुपस्थे ॥ अपशत्रून्विध्यताꣳसंविदानेऽआर्त्नीऽइमेवि
ष्फुरन्तीऽअमित्रान् ॥ ४१ ॥ बह्वीनाम्पिता । बहुरस्यपुत्र
श्चिश्चाकृणोतिसमनावगत्य ॥ इषुधिःसङ्काःपृतनाश्चसर्व्वाः
पृष्ठेनिनद्धोजयतिप्रसूतः ॥ ४२ ॥ रथेतिष्ठन् ॥ रथेतिष्ठन्नय
तिव्वाजिनःपुरोयत्रयत्रकामयतेसुषारथिः ॥ अभीशूनाम्म

शु. य. संहि. ।८२॥

हिमानंरूपनायतमनंःपश्चादनुयच्छन्तिरश्मयंः
तीव्रान्घोषान् ॥ तीव्रान्घोषान्कृण्वतेवृषंपाणयोश्वारथेभिः
सहवाजयन्तः ॥ अवक्रामन्तःप्रपदैरमित्रान्क्षिणन्तिशत्रूँ
१॥ऽरनपव्ययन्तः ॥४४॥ रथवाहणꣳहविः ॥ [1]रथवाहणꣳ
हविरस्यनामयत्रायुधन्निहितमस्यवर्म्म ॥ तत्रारथमुपशग्मꣳ
संदेमाविश्वाहावयꣳसुमनस्यमानाः ॥ ४५ ॥ स्वादुषꣳसदः

१ रथवाहण. । अत्र थकारेण व्यवधानाण्णत्वाप्राप्तौ "निषण्णाय रथवाहणमिन्द्रऽएणम्परीणीयते समिन्द्रणऽउरुष्याणो रक्षाण पूण·पुण.पूणासत्त्या स्वर्णांस्यूरिणौप्रणऽआयूषि" (शु य. प्रा ३ अ ८७ क.) इत्यनेन णत्वं निपात्यते ।

उ. वि. अ. ॥ २९ ॥

पितरः ॥ स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्ती[1]
वन्तो गभीराः ॥ चित्रसेना इषुबलाऽअमृध्राः सतो वीराऽउर
वो व्रातसाहाः ॥ ४६ ॥ ब्राह्मणासः पितरः ॥ ब्राह्मणासः
पितरः सोम्यासः शिवे नो द्यावापृथिवीऽअनेहसा ॥ पूषा नः
पातु दुरितादृतावृधो रक्षा[2] माकिर्नोऽअघशंसऽईशत ॥ ४७ ॥
सुपर्णं वस्ते । मृगोऽअस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता ॥

---

१ शक्तीवन्त । अत्र "अश्वरश्मिमतिसुमति०" (शु य प्रा ३ अ १८ क) इत्यनेन वन्त इति वकारे परे शक्तिशब्दस्य ह्रस्वेकारस्य दीर्घेकार ।

२ रक्षामा । अत्र "शृणुतत्रिपिप्रजि" (शु य प्रा ३ अ १११ सू) इत्यनेन माकारे परे रक्षशब्दस्य ह्रस्वाकारस्य दीर्घाकार । तेन रक्षामा ।

[1] यत्रानरꣳसञ्चविचद्रवन्तितत्रास्मभ्यमिषवꣳशर्म्मयꣳसन्
॥४८॥ ऋजीतेपरि। वृङ्धिनोऽश्माभवतुनस्तनूः॥ सोमोऽ
अधिब्रवीतुनोदितिꣳशर्म्मयच्छतु ॥ ४९ ॥ आजङ्घन्ति ॥
आजङ्घन्तिसान्वेषाञ्जघनाँ२॥ऽउपजिघ्नते ॥ अश्वाजनिप्र
चेतसोश्वान्त्समत्सुचोदय ॥ ५० ॥ अहिरिवभोगैः। पर्य्ये
तिबाहुञ्ज्यायाहेतिम्परिबाधमानꣳ ॥ हस्तघ्नोविश्वावयुना
निविद्वान्पुमान्पुमाꣳसम्परिपातुविश्वतः ॥ ५१ ॥ वनं

१ यत्रानर । अत्र "नर… नऽआहुर्निंयुद्धिष्पु यत्र" (शु य प्रा ३ अ. १२२ सू.) इत्यनेनात्र नरपरे यत्रशब्दा…

स्प्पतेव्वीड्वङ्गः ॥ व्वनस्प्पतेव्वीड्वङ्गोहिभूयाऽअस्म्मत्सखाप्प्र
तरणः सुवीरः ॥ गोभिः सन्नद्धोऽअसिव्वीडयस्वास्थाता
तेजयतुजेत्वानि ॥ ५२ ॥ दिवःपृथिव्याः[1] ॥ दिवः
पृथिव्याःपर्य्योजऽउद्धृतंव्वनस्प्पतिब्भ्यःपर्य्याभृतहसहः ॥
अपामोज्ज्मानम्परिगोभिरावृतमिन्द्रस्यव्वज्ज्रंहविषारथंय्य
ज ॥ ५३ ॥ इन्द्रस्यव्वज्ज्रः ॥ इन्द्रस्यव्वज्ज्रोमरुतामनीक

१ दिवःपृथिव्या । इत्यत्र "दिवोऽककुत्पृथिव्यो" (शु. य प्रा ३ अ. १८ सू.) इत्यनेनाककुत्पृथिव्यो स्वचनिषेधाद्विसर्जनीय एव नान्यत् ।

म्मित्रस्य॒ गर्भो॒ वरु॑णस्य॒ नाभिः॑ ॥ सेमान्नो॑ ह॒व्यदा॑तिञ्जुषा॒णो
दे॒व॑रथ॒ प्रति॑ ह॒व्या गृ॑भाय ॥ ५४ ॥ उप॑ श्वासय । पृ॒थि॒वीमु॒त
द्यां पु॑रु॒त्रा ते॑ मनुतां॒ विष्ठि॑तञ्जग॑त् ॥ स दु॑न्दुभे स॒जूरिन्द्रे॑ण दे॒वै
र्दू॒राद्दवी॑यो॒ऽअप॑ सेध॒ शत्रू॑न् ॥ ५५ ॥ आ क्र॑न्दय ॥ आ क्र॑न्द
य॒ बल॒मोजो॑ न॒ऽआधा॒ नि॑ष्टॅ॑निहि[2] दु॒रि॒ता बाध॑मानः ॥ अप॑ प्रो

---

१ स इमाम् इति पदद्वयम्। अत्र "सऽओपधीमयो." (शु य प्रा. ३ अ. १५ सू.) इत्यनेन इमे परे सपदघटितस्य विसर्जनीयस्य "लोपे च गुणे सेमाम्" इति सिद्ध्यति। २ निष्टनिहि। अत्र "ने स्त्यास्तनो" (शु य प्रा ३ अ ७० सू.) नेरुपसर्गात्परस्य स्त्यास्तनयोः सकारस्य पकारः। इति स्तनोः सकारस्य पत्वे टुत्वे "ऊष्मान्तस्थाभ्यश्च स्पर्शः"। (शु य प्रा ४ अ. १०० सू.) इत्यनेन द्वित्वम्।

थदुन्दुभेदुच्छुनांऽइतऽइन्द्रंस्यमुष्टिरंसिवीडयंस्व ॥ ५६ ॥
आमूः ॥ आमूरंजप्प्रुत्यावंर्त्तयेमाःकेतुमद्दुन्दुभिर्व्वावदी
ति ॥ सम्मश्वंपण्णश्चरंन्तिनोनरोस्म्माकंमिन्द्रंरथिनोजयन्तु
॥ ५७ ॥ आग्नेयःकृष्णग्ग्रीवंः । सारस्वतीमेषीबभ्रुः
सौम्म्यःपौष्णःश्श्यामःशितिपृष्ठोबार्हस्पत्यःशिल्पोवैश्व

१ रथिनो जयन्तु । अत्र "ऋगरेभ्य०" (शु य प्रा ३ अ ८५ सू ) इत्यनेन "स्वरयवहकपैश्च" (शु य प्रा ३ अ ८६ सू ) इत्यनेनैतेर्व्यवधान-विहितस्य णत्वस्य विहितारिक्तरथकारव्यवधानेनाप्राप्तावपि "शिलिसिवर्गमध्यमव्यवहितोऽपि" ( शु य प्रा ३ अ. ९६ सू. ) इत्यनेन प्रकृतिभावो हि नियते । स्वं शिक्षानियमपालनार्थम ।

देवऽऐन्द्रो वारुणो मारुतः कल्माषऽऐन्द्राग्नः संहितो धोरामः सावित्रो वारुणः कृष्णऽएकशितिपात्पेत्वः ॥ ५८ ॥ अग्नयेऽनीकवते ॥ अग्नयेऽनीकवते रोहिताञ्जिरनड्वान्धोरामौ सावित्रौ पौष्णौ रजतनाभी वैश्वदेवौ पिशङ्गौ तूपरौ मारुतः कल्माषऽआग्नेयः कृष्णोजः सारस्वती मेषी वारुणः पेत्वः ॥ ५९ ॥ अग्नये गायत्राय । त्रिवृते राथन्तरायाष्टाकपालऽइन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हतायैकादशकपालो विश्वेभ्यो देवेभ्यो जा

गतेभ्यꣳसप्तदशेभ्योवैरूपेभ्योद्वादशकपालोमित्रावरुणा
भ्यामानुष्टुभाभ्यामेकविꣳशाभ्यांवैराजाभ्याम्पयस्याबृह
स्पतयेपाङ्क्तायत्रिणवायशाक्वरायचरुःसवित्रऽऔष्णिहाय
त्रयस्त्रिꣳशायरैवतायद्वादशकपालꣳप्राजापत्यश्चरुरदित्यैवि
ष्णुपत्न्यैचरुरग्नयेवैश्वानरायद्वादशकपालोनुमत्याऽअष्टा
कपालꣳ॥६०॥ [२४-४]॥ इतिश्रीवाजसनेयसंहितायामेको-
नत्रिंशोऽध्यायः॥२९॥ श्रीवेदपुरुषाय नमः॥ अनुवाकसूत्र-

म् ॥ देवसवितः षट्, तपसेकौलालᳬषोडश, द्वौ द्वाविᳬशतिः ॥
[अ. ३० मं. २२ अ. २] हरिःॐ ॥ देवसवितᳬ ॥ देवसवितᳬ
प्प्रसुवयज्ज्ञम्प्रसुवयज्ज्ञपतिम्भगाय ॥ दिव्योगन्धर्व्वःकेतपूः
केतन्नᳬपुनातुव्वाचस्प्पतिर्व्वाचन्नᳬस्वदतु ॥ १ ॥ तत्सवितुः ॥
तत्सवितुर्व्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनᳬप्प्रचो
दयात् ॥ २ ॥ व्विश्वानिदेव । सवितर्दुरितानिपरासुव ॥
यद्भद्रन्तन्नऽआसुव ॥ ३ ॥ व्विभक्तारᳬहवामहे ॥ व्विभ

क्त्कारं॑ᳪ हवामहे॒ व्वसो॑श्चि॒त्रस्य॒राध॑सः ॥ स॒वि॒तार॑न्नृ॒चक्ष॑सम्
॥४॥ ब्रह्म॑णेब्राह्म॒णम् ॥ ब्रह्म॑णेब्राह्म॒णङ्क्ष॒त्राय॑राज॒न्य॒म्म॒
रु॒द्भ्यो॒व्वैश्य॒न्तप॑सेशू॒द्रन्तम॑से॒तस्क॑रन्ना॒रकाय॑व्वी॒रह॑णम्पा॒
प्प्मनेक्ली॒बमा॑क्क॒याया॑ऽअयो॒गूङ्कामा॑यपुँश्च॒लूमति॑क्कु॒ष्टाय
माग॒धम् ॥ ५ ॥ नृ॒त्ताय॑सू॒तम् ॥ नृ॒त्ताय॑सू॒तङ्गी॒ताय॑शैलू॒षन्ध
र्म्मा॑यसभाच॒रन्न॒रिष्ठा॑यैभीम॒लन्न॒र्म्मा॑यरे॒भᳪ हसा॑य॒कारि॑मान॒
न्दाय॑स्त्रीष॒खम्प्र॒मदे॑कु॒मारीपु॒त्रम्मे॒धायै॑रथका॒रन्धैर्य्या॑य॒तक्ष्णा॑

णम् ॥ ६ ॥ [६-१] तपसे कौलालम् ॥ तपसे कौलालम्मा
यायै कर्म्मारꣳ रूपाय मणिकारꣳ शुभे वपꣳ शरव्याया इषुका
रꣳ हेत्यै धनुष्कारङ्कर्म्मणे ज्याकारन्दिष्टाय रज्जुसर्जम्मृत्यवे
मृगयुमन्तकाय श्वनिनम् ॥ ७ ॥ नदीभ्यः पौञ्जिष्ठम् ॥
नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादम्पुरुषव्याघ्राय दुर्म्मदं
गन्धर्व्वाप्सरोभ्यो व्रात्यम्प्रयुग्भ्य उन्मत्तꣳ सर्प्पदेवजने
भ्योऽप्रतिपदमयेभ्यः कितवमीर्यताया अकितवम्पिशाचे

ब्भ्योंबिदलकारीँय्यातुधानेब्भ्यःकण्टकीकारीम् ॥८॥ सन्धय
येजारम्॥ सन्धयेजारङ्गेहायोपपतिमार्त्यैपरिवित्तन्निर्ऋत्यैप
रिविविदानमराद्ध्याऽएदिधिषुःपतिन्निष्कृत्यैपेशस्कारीँ
सञ्ज्ञानायस्मरकारीम्प्रकामोद्यायोपसदँवर्णायानुरुधम्ब
लायोपदाम्॥९॥ उत्सादेब्भ्यःकुब्जम्॥ उत्सादेब्भ्यःकुब्ज
म्प्रमुदेवामनन्द्वाब्भ्यःस्स्रामँस्वप्नायान्धमधर्म्मायबधिरम्प
वित्रायभिषजम्प्रज्ञानायनक्षत्रदर्शमाशिक्षायैप्प्रश्निनमु

पशिक्क्षायांऽअभिप्प्रश्श्निनम्मर्य्यादायैप्प्रश्श्नविवाकम् ॥१०॥
अर्म्मैब्भ्योहस्त्तिपम् ॥ अर्म्मैब्भ्योहस्त्तिपञ्जवायाश्श्वपम्पुष्ट्यै
गोपालंव्वीर्य्यायाविपालन्तेजसेजपालमिरायैकीनाशङ्कीलालाँ
यसुराकारम्भद्रायगृहपँश्रेयसेवित्तधमाद्ध्यक्क्ष्यायानुक्क्ष
त्तारम् ॥ ११ ॥ भायैदार्व्वाहारम् ॥ भायैदार्व्वाहारम्प्प्रभायांऽअ
ग्न्येधम्ब्रध्नस्यंव्विष्टपायाभिषेक्क्तारंव्वर्षिष्ठायनाकायपरिवेष्टा
रन्देवलोकायपेशितारम्मनुष्ष्यलोकायप्प्रकरितारꣳसर्व्वेब्भ्यो

लोकेब्भ्यंऽउपसेक्क्तारमवंऽऋत्त्यैब्बुधायौपमान्थितारम्मेधाय

ब्वासःपल्प्पूलीम्प्रंकामायरजयित्रीम् ॥ १२ ॥ ऋतयेस्स्तेनहृ

दयम् ॥ ऋतयेस्स्तेनहृदयंव्वैरहत्त्यायपिशुनंव्विविक्त्त्यैक्क्ष

त्तारमौपंद्रष्ट्र्यायानुक्क्षत्तारम्बलायानुचरम्भूम्म्नेपरिष्क्क

न्दम्प्रियायप्प्रियवादिनमरिष्ट्र्याऽअश्वसादंᳬस्वर्ग्गायलोकाय

भागदुघंव्वर्षिष्ठायनाकायपरिवेष्टारम् ॥ १३ ॥ मन्न्यवेयस्त्ता

---

१ वास पल्प्पूलीम् । अत्र "समानपदे" (शु. य प्रा ३ अ ३० सू ) इत्यनेन पकारे प्राप्ते "वाजपतिर्वासऽएदिधिपुरन्त पर्शन्येनान्तः पार्श्वमिति च" (शु. य प्रा ३ अ ३८ सू ) इति सूत्रेण वासशब्दघटितविसर्जनीयस्य षकारनिषेध. ।

पम् ॥ मन्यवेऽयस्तापङ्क्रोधायनिसरँयोगाययोक्तारꣳशोका
याभिसर्त्तारङ्क्षेमायविमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनंव
पुषेमानस्कृतꣳशीलायाञ्जनीकारीन्निर्ऋत्यैकोशकारीँयमा
यासूम् ॥ १४ ॥ यमायंयमसूम् ॥ यमायंयमसूमथर्व
भ्योऽवतोकाꣳसंवत्सरायपर्यायिणीम्परिवत्सरायाविजाता
मिदावत्सरायातीत्वरीमिद्वत्सरायातिष्कद्वरीँवत्सरायावि
जर्जराꣳसंवत्सरायपलिक्नीमृभुभ्योऽजिनसन्धꣳसाध्येभ्य

श्वर्म्मम्म्नम् ॥ १५ ॥ सरोंभ्योधैवरम् ॥ सरोंभ्योधैवरमु
पस्त्थावंराभ्योदाशंव्वैशन्ताभ्योंबैन्दन्नड्वलाभ्युःशौष्क्कं
लम्पारायंमार्ग्गारमंवारायंकेवर्त्तंन्तीर्त्थेभ्यंऽआन्दंव्विषंमे
भ्योमैनालंᳯस्वनेभ्युःपर्ण्णकुङ्हाभ्युःकिरातहसानुंभ्यो
जम्भंकुम्पर्व्वतेभ्युःकिम्पूरुषम् ॥ १६ ॥ बीभुत्त्सायैपौ
ल्क्कुसम् ॥ बीभुत्त्सायैपौल्क्कुसंव्वर्णायैहिरण्यकारन्तुला

१ चर्म्मम्नम्। अत्र "ऋपरेभ्यो०" (शु य प्रा ३अ ८५सू) इत्यनेन समानपदे प्राप्तस्य णत्वस्य "छन्द्राग्नी०" (शु य प्रा.३अ ९३सू) इत्यनेन निषेधान्न णत्वम्।

यैव्वाणिजम्पंश्चादोषायंग्ग्लाविनंव्विश्वैभ्योभूतेभ्यं÷सिद्ध्म
लम्भूत्त्यैजागरणमभूत्त्यैस्वपनमार्त्त्यैजनवादिनंव्व्यृद्ध्याअपग
ल्भꣳसꣳशरायंप्प्रच्छिदम् ॥ १७ ॥ अक्क्षराजायंकित
वम् ॥ अक्क्षराजायंकितवङ्कृतायांदिनवदर्शन्त्रेतायैकल्प्पिनं
न्द्वापरांयाधिकल्प्पिनंमास्क्कन्दायंसभास्त्थाणुम्मृत्त्यवेगो
व्यच्छमन्तंकायगोघातङ्क्षुधेयोगांव्विकृन्तन्तम्भिक्क्षमाणउ
पतिष्ठंतिदुष्कृतायचरंकाचार्य्यम्पाप्प्मनेसैलगम् ॥ १८ ॥ प्रति

श्रुत्कायाऽअर्त्तनम् ॥ प्रतिश्रुत्कायाऽअर्त्तनङ्घोषायभषम
न्तायबहुवादिनमनन्तायमूकꣳशब्दायाडम्बराघातम्महसेवी
णावादङ्क्रोशायतूणवद्ध्ममवरस्परायशङ्खद्ध्मंवनायवनप
मन्यतोरण्यायदावपम् ॥१९॥ नर्म्मायपुँश्चलूम् ॥ नर्म्मायपुँश्च
लूꣳहसायकारिँय्यादसेशाबल्याङ्ग्रामण्यङ्गणकमभिक्क्रोश

१ आडम्बराघातम् । अत्र "त आघादनाडम्बरात्" (शु. य प्रा ३ अ. ४८ सू ) इत्यनेनानाडम्बरात्परस्य विधानादाघातशब्दघटितस्य तकारस्य मूर्धन्यत्व (ट) न भवति । २ अवरस्पराय । अत्र "प्रकृत्या करयो. पफयोश्च" ( शु य प्रा. ३ अ ११ सू ) इति "अवर" इत्यस्य विसर्गस्य प्रकृतिभावे प्राप्ते "ऋतावरौ च पतिपरयो" (शु य प्रा अ. ३ सू ५०) ऋत अवरश्च शब्दौ सकारेण व्यवधीयेते यथासंख्यं पतिपरयो । इत्यनेनात्रावरशब्दस्य विसर्गस्य परे पदपरे सत्वे जाते "ऊष्मान्तस्थास्यश्च स्पर्श." ( शु. य. प्रा. ४ अ. १०२ सू ) इत्यनेन पकारस्य द्वित्वे रूपम् ।

कृन्ताम्महंसेव्वीणावादम्पाणिग्घ्नन्तूणवद्ध्मन्तान्नृत्तायान
न्दायंतल्वम्॥२०॥अग्नयेपीवानम्॥ अग्नयेपीवानम्पृथिव्यै
पीठसर्प्पिणंव्वायवेचाण्डालमन्तरिक्षायवᳫंशनर्त्तिनन्दिवेखं
लतिᳫंसूर्य्यायहर्य्यक्षन्नक्षत्रेभ्यः किर्म्मिरञ्चन्द्रमसेकिला
समह्नेशुक्लम्पिङ्गाक्षᳫंरात्र्यैकृष्णम्पिङ्गाक्षम्॥२१॥ अथै
तान्॥ अथैतानष्टौविरूपानालभतेतिदीर्घञ्चातिह्रस्वञ्चाति

---

१ अतिस्स्थूलम्। अत्र "भाविश्य स. प समानपदे" (शु य.प्रा ३ अ ५६ क) इत्यनेन समानपदे स्थूलस्य सस्य षकारे प्राप्ते "अनुसन्तनोतु बृहस्पतिसुतस्य सुसमिद्धाय सुसन्दृशमभिसत्वाऽभिसंविशन्तु सुसस्यातिस्थूलं०" (शु. य. प्रा. अ. ३ सू ८२) इत्यनेन प्रकृतिभावे न षत्वम्। तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु. य. प्रा ४ अ. १०२ सू) इति यस्य द्वित्वे चर्त्वे तकारः।

स्त्थूलन्नातिकृशन्नातिशुक्लन्नातिकृष्णन्नातिकुल्वन्नातिलोम
शन्न ॥ अशूद्द्राऽअब्ब्राह्मणास्त्ते प्प्राजापत्त्याः ॥ मागधः पुँश्च
लीकितवःक्क्लीबोशूद्द्राऽअब्ब्राह्मणास्त्ते प्प्राजापत्त्याः ॥ २२ ॥
[ १६-२ ] इतिश्रीवाजसनेयसंहितायां त्रिंशत्तमोऽध्यायः
॥ ३० ॥ श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ सहस्त्र-
शीर्षा षोडश,ब्ब्यःसंम्भृतः षट्, द्वौ द्वाविꣳशतिः [ अ. ३१
सं. २२ अनु. २ ] ॥ हरिःॐ ॥ सहस्त्रशीर्षापुरुषः । सह

स्राक्षश्सुहस्रंपात् ॥ सभूमिꣳसर्व्वतंस्पृत्त्वात्त्यंतिष्ठद्दशाङ्गु
लम् ॥ १ ॥ पुरुषऽएव ॥ पुरुषएवेदꣳसर्व्वँय्यद्भूतँय्यच्चंभा
व्यम् ॥ उतामृतत्त्वस्येशानोयदन्नेनातिरोहति ॥ २ ॥ एता
वानस्य । महिमातोज्ज्यायाँश्चपूरुषः ॥ पादोस्यविश्वाभूता
नित्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्द्ध्वः ॥ त्रिपादूर्द्ध्वऽ
उदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोविष्ष्वङ्व्यक्क्राम
त्साशनानशनेऽअभि ॥ ४ ॥ ततोविराट् ॥ ततोविराडजा

यतद्विराजोऽअधिपूरुषः ॥ सजातोऽअत्त्यरिच्च्यतपश्चाद्भूमि

मथोपुरः॥५॥ तस्म्माद्यज्ज्ञात्॥ तस्म्माद्यज्ज्ञात्सर्व्वहुतःसम्भृतं

तम्पृषदाज्ज्यम् ॥ पशूँस्ताँश्चक्क्रेवायव्यानारण्ण्याग्ग्राम्म्या

श्चये ॥६॥ तस्म्माद्यज्ज्ञात् ॥ तस्म्माद्यज्ज्ञात्सर्व्वहुतऽऋचः

सामानिजज्ज्ञिरे ॥ छन्दाꣳसिजज्ज्ञिरेतस्म्माद्यजुस्तस्म्माद

जायत ॥ ७ ॥ तस्म्मादश्वाः ॥ तस्म्मादश्वाऽअजायन्त

येकेचोभयादतः ॥ गावोहजज्ज्ञिरेतस्म्मात्तस्म्माज्जाताऽअ

जावयः ॥ ८ ॥ तँय्यज्ञम् ॥ तँय्यज्ञम्बर्हिषिप्प्रौक्षन्पुरुष
ञ्जातमग्ग्रतः ॥ तेनदेवाऽअयजन्तसाद्ध्याऽऋषयश्श्चये ॥ ९ ॥
यत्पुरुषम् ॥ यत्पुरुषंव्यदधुःकतिधाव्यकल्पयन् ॥ मुख
ङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्च्येते ॥ १० ॥ ब्राह्म
णोस्य ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्न्यःकृतः ॥ ऊरू
तदस्ययद्वैश्श्यःपद्भ्याᳪंशूद्रोऽअजायत ॥ ११ ॥ चन्द्रमा ॥१२॥
मनसः ॥ चन्द्रमामनसोजातश्चक्षोःसूर्य्योऽअजायत ॥

श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ १२ ॥ नाभ्याऽ
आसीत् ॥ नाभ्याऽआसीदन्तरिक्षꣳशीर्ष्णोद्यौःसमवर्त्त
त ॥ पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथालोकाँ२॥ऽअकल्पयन्
॥ १३ ॥ यत्पुरुषेण । हविषादेवायज्ञमतन्वत ॥ वसन्तो
स्यासीदाज्यङ्ग्रीष्मऽइध्मःशरद्धविः ॥ १४ ॥ सप्तास्या
सन् ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधःकृताः ॥ देवा
यद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् ॥१५॥ यज्ञेनयज्ञ

म् ॥ युज्ञेनंयुज्ञमंयजन्तदेवास्तानिधर्म्माणिप्प्रथमान्न्या
सन् ॥ तेहुनाकंम्महिमानंःसचन्तयत्रपूर्व्वेसाध्याःसन्तिदेवाः
॥ १६ ॥ [ १६-१ ] अद्भ्यःसम्भृतः । पृथिव्यैरसाच्चवि
श्वकंर्म्मणःसमंवर्त्ततागे्रै ॥ तस्यत्त्वष्टाविदधंद्रूपमैतितन्म
र्त्यंस्यदेवत्त्वमाजानमग्रे ॥ १७ ॥ वेदाहम् ॥ वेदाहमेतम्पु
रुषम्महान्तंमादित्त्यवंर्णन्तमंसःपरस्तात् ॥ तमेवविदित्त्वा



१ तमस.परस्तात् । अत्र "तमसोऽपरस्तात्" ( शु. य. प्रा. ३ अ. २६ सू. ) इत्यनेन विधीयमानं सत्व न भवति तत्रापरस्तादित्युक्तत्वात् ।

तिंमृत्त्युमेंतिनान्न्यःपन्थांव्विद्यतेयंनाय ॥ १८ ॥ प्रजापंति
श्चरंति ॥ प्रजापंतिश्चरतिगर्ब्भेंऽअन्तरजांयमानोबहुधाव्विजां
यते ॥ तस्स्ययोनिम्परिंपश्श्यन्तिधीरास्त्तस्म्मिन्हतस्त्थुर्ब्भुवं
नानिव्विश्श्वां ॥१९॥ योदेवेब्भ्यंः ॥ योदेवेब्भ्यंऽआतपंतियो
देवानांम्पुरोहिंतः ॥ पूर्व्वोंयोदेवेब्भ्योंजातोनमोंरुचायब्राह्मंये
॥ २० ॥ रुचम्ब्राह्मम् ॥ रुचम्ब्राह्ममज्जनयंन्तोदेवाऽअग्ग्रेत
दंब्रुवन् ॥ यस्त्त्वैवम्ब्राह्मणोव्विद्यात्तस्स्यदेवाऽअंसन्वशें ॥ २१ ॥

श्रीश्च॑ ॥ श्रीश्च॑ते लक्ष्मीश्च॒ पत्न्या॑वहोरा॒त्रे पा॒र्श्वे नक्ष॑त्राणि रू॒प
म॒श्विनौ॒ व्यात्त॑म् ॥ इ॒ष्णन्नि॑षाणा॒मुम्म॑ऽइषाण सर्व्वलो॒कम्म॑ऽ
इषाण ॥ २२ ॥ [ ६-२ ] ॥ इतिश्रीवाजसनेयसंहितायामे-
कत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ श्रीवेदपुरुषाय नमः ॥ अनु-
वाकसूत्रम् ॥ तदेव सप्त, वेनस्तन्नव, द्वौ षोडश [ अ. ३२ मं.
१६ अनु. २ ] ॥ हरिः ॐ ॥ तदे॒व ॥ तदे॒वाग्निस्तदा॑दि॒त्यस्त
द्वा॒युस्तदु॑ चन्द्रमाः॑ ॥ तदे॒व शु॒क्रन्तद्ब्रह्म॒ ता आपः॒ स प्र॒जा

पतिं ॥१॥ सर्वेनिमेषाः ॥ सर्वेनिमेषाजज्ञिरेविद्युतंपुरुषा
दधि ॥ नैनमूर्ध्वन्नतिर्यञ्चन्नमध्येपरिजग्रभत् ॥ २ ॥ नतस्य ।
प्रतिमाऽअस्तियस्यनाममहद्यशः ॥ हिरण्यगर्भऽइत्येष
मामाहिंसीदित्येषायस्मान्नजातऽइत्येषः ॥ ३ ॥ एषोह ।
देवःप्रदिशोनुसर्वाःपूर्वोहजातःसऽउगर्भेऽअन्तः ॥ सऽएव
जातःसजनिष्यमाणःप्रत्यङ्जनास्तिष्ठतिसर्वतोमुखः ॥४॥

१ हिरण्यगर्भःसं० चत्वारि० ४ अ २५ मन्त्र १०।११।१२।१३। ॥ १ मामाहिंसीत् १ अ १२ म १०२ ॥ १ यस्मान्न १ १ इन्द्रश्च. १ अ ८ म. ३६ मं ३७ ॥ इति प्रतीकानि ॥

यस्म्माज्जातम् ॥ यस्म्माज्जातन्नपुराकिञ्चनैवयऽआबभूवभुवं
नानिविश्श्वां ॥ प्रजापंतिंप्प्रजयासंᳪरराणस्त्रीणिज्ज्योतीᳪं
षिसचतेसषोडशी ॥ ५ ॥ येनद्यौः ॥ येनद्यौरुग्ग्रापृथिवी
चंदृढायेनस्वंस्तभितँय्येननाकंः ॥ योऽअन्तरिंक्क्षेरजंसो
विमानंकस्म्मैदेवायंहविषांविधेम ॥ ६ ॥ यङ्क्रन्दंसी ॥
यङ्क्रन्दंसीऽअवंसातस्तभानेऽअब्भ्यैक्क्षेतांम्मनंसारेजंमाने ॥
यत्राधिसूरऽउदितोविभातिकस्म्मैदेवायंहविषांविधेम ॥

आपोहयद्बृहतीर्यश्चिदापः ॥७॥ [७-१] वेनस्तत् ॥ वेन

स्तत्पश्यन्निहितङ्गुहासद्यत्रविश्वम्भवत्त्येकनीडम् ॥ तस्मिन्

निदꣳसञ्चविचैतिसर्व्वꣳसऽओतः प्प्रोतश्चविभूः प्प्रजासु ॥८॥

प्रतत् ॥ प्रतद्वोचेदमृतन्नुविद्वान्गन्धर्व्वोधामविभृतङ्गुहासत् ॥

त्रीणिपदानिनिहितागुहास्ययस्तानिवेदसपितुःपितासत् ॥९॥

सनः ॥ सनोबन्धुर्ज्जनितासविधाताधामानिवेदभुवनानि

विश्श्वा ॥ यत्रदेवाऽअमृतमानशानास्तृतीयेधामन्नध्यैरयन्त ॥ १० ॥ परीत्त्यभूतानि । परीत्त्यलोकान्परीत्त्यसर्व्वाःप्प्रदिशोदिशश्च ॥ उपस्त्थायप्प्रथमजामृतस्यात्मनात्त्मानमभिसंविवेश ॥ ११ ॥ परिद्यावापृथिवी । सद्यऽइत्त्वापरिलोकान्परिदिशःपरिस्वः ॥ ऋतस्यतन्तुंव्विततंव्विचृत्त्यतदपश्यत्तदभवत्तदासीत् ॥ १२ ॥ सदसस्पतिम् ॥ सदसस्पतिमद्भुतम्प्प्रियमिन्द्रस्यकाम्म्यम् ॥ सनिम्मेधामयासिषंस्वाहा

॥ १३ ॥ याम्मेधाम् ॥ याम्मेधान्देवगणाः पितरश्चोपासते ॥
तयामामद्यमेधयाग्नेमेधाविनङ्कुरुस्वाहा ॥ १४ ॥ मेधाम्मे ॥
मेधाम्मेव्वरुणोददातुमेधामग्निः प्रजापतिः ॥ मेधामिन्द्रश्च
व्वायुश्चमेधान्धाताददातुमेस्वाहा ॥ १५ ॥ इदम्मे ॥ इदम्मे
ब्रह्मचक्षत्रञ्चोभेश्रियमश्नुताम् ॥ मयिदेवादधतुश्रियमुत्त
मान्तस्यैतेस्वाहा ॥ १६ ॥ [९-२] ॥ इतिश्रीवाजसनेय-
संहितायां द्वात्रिंशोऽध्यायः ॥ ३२॥ श्रीवेदपुरुषाय नमः ॥

अनुवाकसूत्रम् ॥ अस्याजरासः सप्तदश, पश्चित् द्वादश, विभ्रा
ट् चतुर्दश, प्रवावृजऽएकादश, प्रवायुं पञ्चदश, प्रवीरया पञ्च
दश,ऽआनस्त्रयोदश, सप्त सप्तनवतिः [ अ. ३३ मं. ९७
अनु. ७ ] ॥ हरिः ॐ ॥ अस्याजरासः ॥ अस्याजरासोदमाम
रित्राऽअर्चद्धूमासोऽअग्नयः पावकाः ॥ श्वितीचयः श्वात्रा
सोभुरण्यवोवनर्षदोवायवोनसोमाः ॥ १ ॥ हरयोधूमकै

१ वनसद् इति पदम् । अत्र "वनसदोऽवेरो रेफेण" ( शु. य. प्रा. ३ अ. ४८ सू. ) इत्यनेन सदशब्दे परे वनशब्दो रेफेण व्यवधीयते ।

तवꣳ ॥ हर॑यो धूमके॑तवो॒ वात॑जूता॒ऽउप॒ द्यवि॑ ॥ यत॑न्ते॒ वृथ॑ग॒ग्नय॑ः ॥२॥ यजा॑नꣳ ॥ यजा॑नो मि॒त्रावरु॑णा॒ यजा॑ दे॒वाँ२॥ऽ ऋ॒तम्बृ॒हत् ॥ अग्ने॒ यक्षि॒ स्वन्दम॑म् ॥ ३ ॥ यु॒क्ष्वाहि । देव॒हूत॑माँ॒२॥ऽअश्वाँ॑२॥ऽअग्ने॑ र॒थीरि॑व ॥ नि होता॑ पू॒र्व्यः स॑दꣳ ॥४॥ द्वे विरू॑पे । चर॑तꣳ॒ स्वर्थे॑ऽअ॒न्यान्या॑ व॒त्समुप॑ धापयेते ॥ हरि॑र॒न्यस्या॒म्भव॑ति स्व॒धावा॒ञ्छुक्रो॑ऽअ॒न्यस्या॑न्ददृशे सु॒वर्चाꣳ

१ यजानो । अत्र यजशब्दस्य ह्रस्वाकारस्य न इति नकारे परे "धारयाव स्वेजाव" ( शु य प्रा ३ अ. १०८ सू ) इत्यनेन दीर्घाकार ।
२ स्वधावाञ्छुक्र । अत्र "शकारे च" (शु य प्रा ४ अ ९६ सू ) इत्यनेन शकारे परे तवर्गश्चवर्गं प्राप्नोति । अत शुक्रस्य शकारे परे स्वधावान् इत्यस्य नकारस्य जकार । तत "परश्चास्पर्शपरश्छम्" (शु य. प्रा ४ अ ९७ सू ) इत्यनेन शकारस्य छकारे कृते "स्वधावाञ्छुक्र" इति ।

॥ ५ ॥ शतम् ॥ १७०० ॥ अयमिह । प्रथमोधायिधातृ
भिर्होतायजिष्ठोऽअध्वरेष्वीड्यः ॥ यमप्नवानोभृगवोविरुरु
चुर्वनेषुचित्रंविभ्वंविशेविशे ॥ ६ ॥ त्रीणिशता । त्रीसहस्रा
ण्यग्निंत्रिँशच्चदेवानवचासपर्य्यन् ॥ औक्षन्घृतैरस्तृणन्ब
र्हिरस्माऽआदिद्धोतारन्न्यसादयन्त ॥ ७ ॥ मूर्द्धानन्दिवः ॥
मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽआजातमग्निम् ॥
कविँसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ ८ ॥

अग्निर्वृत्राणि । जङ्घनद्द्रविणस्युर्विपन्न्यया ॥ समिद्धḥशु

क्रऽआहुतḥ ॥९॥ विश्वेभिḥसोम्म्यम्मधु ॥ विश्वेभिḥसोम्म्यम्म

द्ध्वग्नऽइन्द्रेणवायुना ॥ पिबामित्रस्युधामभिḥ ॥१०॥ आयत् ॥

आयादिषेनृपातिन्तेजऽआनट्शुचिरेतोनिषिक्तन्द्यौरभीके ॥

अग्निश्शर्द्धमनवद्यँयुवानᳪस्वाध्यञ्जनयत्त्सूदयंच्च ॥११॥

अग्नेशर्द्ध । महतेसौभगायतवद्युम्म्नान्युत्तमानिसन्तु ॥

१ पिवामित्रस्य । अत्र "शृणुतद्रिवपिध्रजिभवतपिबेतस्यमतिप्ररक्षा मकारे" (शु. य प्रा ३ अ ११७ क) इत्यनेन मकारे वस्य दीर्घे पिवामित्रस्य ।

सञ्जास्पत्स्यᳫं सुयमुमाकृणुष्वशत्रूयतामुभितिष्ठामहाᳫंसि
॥ १२ ॥ त्वाᳫंहि । मुन्द्रतममर्क्कशोकैर्व्वृमहेमहिंनःश्रो
ष्यंग्ने ॥ इन्द्रन्नत्त्वाशवंसादेवतांव्वायुम्पृणन्तिराधंसान्नृतंमाः
॥ १३ ॥ त्वेऽअंग्ने । स्वाहुतप्प्रियासंः सन्तुसूरयंः ॥ युन्ता
रोयेमुघवांनोजनांनामूर्व्वान्दयंन्तुगोनांम् ॥ १४ ॥ श्रुधिश्श्रु
त्कर्ण्ण ॥ श्रुधिश्श्रुत्कर्ण्णव्वह्निभिर्द्देवैरंग्नेसुयावंभिः ॥ आसीं
दन्तुबर्हिषिंमित्रोऽअंर्य्युमाप्प्रांतुर्य्यावांणोऽअध्वुरम् ॥ १५ ॥

व्विश्वेषामदितिः ॥ व्विश्वेषामदितिर्य्यज्ञियानांव्विश्वेषामति
थिर्म्मानुषाणाम् ॥ अग्निर्द्देवानामवऽआवृणानःसुमृडीको
भवतुजातवेदाः ॥ १६ ॥ महोऽअग्नेः । समिधानस्यश
र्म्मण्यनागामित्रेव्वरुणेस्वस्तये ॥ श्रेष्ठेस्यामसवितुःसवीम
नितद्देवानामवोऽअद्यावृणीमहे ॥ १७ ॥ [ १७-१ ] आप
श्चित् ॥ आपश्चित्पिप्प्युस्तर्य्योनगावोनक्क्षन्नृतञ्जरितारस्तऽ

१ अद्या वृणीमहे । अत्र "अथा त हकारचकारभवतवृणीमहे देवेषु" (शु य. प्रा ३ अ ११५ सू ) इत्यनेन अद्य इत्यस्य वृणीमहे परे दीर्घे अद्यावृणीमहे अद्य शब्दस्य दकारस्य स्वरात्स० इत्यनेन द्वित्वम् ।

इन्द्र ॥ याहि वायुर्नियुतो नोऽअच्छा त्वꣳहि धीभिर्दयसे वि
वाजान् ॥ १८ ॥ गावऽउप ॥ गावऽउपावतावतम्मही यज्ञ
स्य रप्सुदा ॥ उभा कर्णा हिरण्यया ॥ १९ ॥ यदद्य । सूरऽ
उदितेऽनागा मित्रोऽअर्यमा ॥ सुवाति सविता भगः ॥ २० ॥
आसुते सिञ्चत श्रियꣳ रोदस्योरभिश्रियम् ॥ रसा दधीत वृष
भम् ॥ तम्प्रत्नथायं वेनः ॥ २१ ॥ आतिष्ठन्तम्परि ॥ आति

१ तम्प्रत्नथा १ अ. ७ म. १२ ॥ १ अयं वेन १, अ. ७ म १६ ॥ इति प्रतीके ॥

ष्ट्वन्तम्परिविश्वेऽअभूषञ्छ्रियोव्वसानश्चरतिस्वरोचिः ॥ मुहत्त

द्वृष्णोऽअसुरस्यनामाव्विश्वरूपोऽअमृतानितस्थौ ॥ २२ ॥

प्रवः ॥ प्रवोमुहेमन्दमानायान्धसोर्च्चा[1]व्विश्वानराय[2]व्विश्वाभुवे[3] ॥

इन्द्रस्ययस्यसुमखःसहोमाहिश्रवोनृम्णञ्चरोदसीसपुर्य्यतः

॥ २३ ॥ बृहन्नित् ॥ बृहन्निदिध्मऽएषाम्भूरिशस्त्तम्पृथुः

स्वरुः ॥ येषामिन्द्रोयुवासखा ॥ २४ ॥ इन्द्रेहि ॥ इन्द्रेहि

---

१ अर्चाव्विश्वानराय । अत्र "अश्वरश्मिमतिसुमति०" (शु. य प्रा ३ अ ९८ सू ) इत्यनेन विश्वानराय इत्यस्य वकारे परे अर्चशब्दस्य ह्रस्वाकारस्य दीर्घाकार । २ विश्वानराय । अत्र "नरहामित्रेषु च" (शु य प्रा. ३ अ १०३ सू ) इत्यनेन नरशब्दे परे विश्वशब्दाकारस्य दीर्घाकारो विधीयते। ३ विश्वाभुवे । अत्र "विश्व सहभुवपुपवसुपु" । (शु. य प्रा ३ अ. १०२ सू ) इत्यनेन भुवे परे विश्वशब्दाकारस्य दीर्घाकार ।

मत्स्यन्धसोविश्वोभिःसोमपर्वभिः ॥ महाँ२॥ऽअभिष्टिरोज
सा ॥ २५ ॥ इन्द्रोवृत्रम् ॥ इन्द्रोवृत्रमवृणोच्छर्द्धनीतिःप्र
मायिनाममिनाद्वर्पणीतिः ॥ अहन्व्यंसमुशधग्वनेष्वा
विर्द्धेनाऽअकृणोद्राम्म्याणाम् ॥ २६ ॥ कुतस्त्वम् ॥ कुतस्त्व
मिन्द्रमाहिनःसन्नेकोयासिसत्पतेकिन्तऽइत्था ॥ सम्पृच्छसे
समराणःशुभानैर्वाचेस्तन्नोहरिवोयत्तेऽअस्मे ॥ महाँ२॥ऽइ



१ महाँ२॥ऽइन्द्रोय. १ अ. ७ म ४० ॥ १ कदाचन. म ८ म २ ॥ १ कदाचनस्त. अ. ८ म. २ ॥ इति प्रतीकानि ॥

न्द्रोयऽओजंसाकुदाचुनस्तुरीरासिकुदाचुनप्र्प्र्युंच्छसि ॥२७॥
आततू ॥ आतत्तंऽइन्द्रायवंःपनन्ताभियऽऊर्वङ्गोमंन्तुन्ति
तृत्सानू ॥ सुकृत्स्वँऽयेपुरुपुत्राम्मुहीᳫंसुहस्रंधाराम्बृहुतीन्दु[1]
दुक्षन् ॥२८॥ इमान्तें ॥ इमान्तोधियुम्प्रभंरेमुहोमुहीमुस्य
स्त्तोत्रेधिषणायत्तंऽआनुजे ॥ तमुत्सुवेचंप्रसुवेचंसासुहिमि
न्द्रंन्देवासःशवंसामदुन्ननुं ॥२९॥ [१२-२] विभ्राड्बृहत् ॥

१ "दुदुक्षन्" । अत्र दुधुक्षन् इति पदम् । "दुधुक्षन्धो दकारम्" (शु. य. प्रा ३ अ. ५५ सू.) इत्यनेन दुधुक्षन् शब्दघटितस्य धकारस्य दकारः ।

विभ्राड्बृहत्पिबतुसोम्म्यम्मद्ध्वायुर्द्दधद्यज्ञपतावविह्रुतम् ॥
वातजूतोयोऽअभिरक्षतित्मनाप्प्रजाः पुपोषपुरुधाविराज
ति ॥३०॥ उदुत्त्यम् ॥ उदुत्त्यञ्जातवेदसन्देवंव्वहन्तिकेतवः ॥
दृशेव्विश्श्वायसूर्य्यम् ॥३१॥ येनापावक ॥ येनापावकचक्षसा
भुरण्यन्तञ्जनाँ२॥ऽअनु ॥ त्वंव्वरुणपश्श्यसि ॥३२॥ दैव्या
वद्ध्वर्य्यू ॥ दैव्यावद्ध्वर्य्यूऽआगतꣳरथेनसूर्य्यत्त्वचा ॥ मद्ध्वा
यज्ञꣳसमञ्जाथे ॥ तम्प्रत्क्नथायंव्वेनश्चित्रन्देवानाम् ॥३३॥

-१ तम्प्रत्क्नथा १ अ ७ म. १२ ॥ १ अयव्वेनऽ० ० अ. ७ म. १६ ॥ १ चित्रन्देवानाम्. १ अ. १३ म. ४६ ॥ इति प्रतीकानि ॥

आनं÷ ॥ आनुऽइडांभिर्व्विदथेंसुशस्त्तिव्विश्वानंरंःसविताद्देवऽ
एंतु ॥ अपियथांयुवानोमं[1]त्संथानोव्विश्वञ्जगंदभिपित्वेमंनी
षा ॥ ३४ ॥ यदुद्य । कच्चंवृत्रहन्नुदगांऽअभिसूंर्य्य ॥ सर्व्वं
न्तदिन्द्रतेवशें ॥३५॥ तुरणिर्व्विश्वदंर्शतंः ॥ तुरणिर्व्विश्वदंर्श
तोज्ज्योतिष्कृदंसिसूर्य्य ॥ व्विश्वमाभांसिरोचनम् ॥३६॥ तत्सूं
र्य्यंस्य । देवत्त्वन्तन्मंहित्त्वम्मुद्ध्याकर्त्तोर्व्विततंसञ्जंभार ॥

1 मत्सथ न इति पदम् । अत्र मत्सथ इत्यस्य थकारस्य ह्रस्वाकारस्य न इति नकारे परे "धारयाम०" (शु. य प्रा. ३ अ. १०८ सू.) इत्यनेन दीर्घाकारे मत्सथान ।

सुदे॒दयु॑क्त॒हरितः॑ स॒धस्था॒दाद्रात्री॒ वास॑स्तनुते सि॒मस्मै
॥ ३७॥ तन्मि॒त्रस्य॑ ॥ तन्मि॒त्रस्य॒ वरु॑णस्याभि॒चक्षे॒ सूर्यो॑ रू॒
पं॑ कृणुते॒ द्योरु॒पस्थे॑ ॥ अ॒न॒न्तम॒न्यद्रु॒शद॑स्य॒ पाजः॑ कृ॒ष्णम॒न्य
द्धरित॒ꣳ सम्भ॑रन्ति ॥ ३८ ॥ बण्म॒हान् ॥ बण्म॒हाँ२॥ऽअ॑सि
सू॒र्य्य॒ बडा॑दित्य म॒हाँ२॥ऽअ॑सि ॥ म॒हस्ते॑ स॒तो म॑हि॒मा प॑नस्य
ते॒ऽद्धा दे॑व म॒हाँ२॥ऽअ॑सि ॥ ३९ ॥ बट् सू॑र्य्य ॥ बट् सू॑र्य्य॒ श्रव॑सा



१ अत्र वदमहान् । "पञ्चमे पञ्चमम्" (शु. य. प्रा ४ अ १२१ सू.) इत्यनेन पञ्चमे स्पर्शे परे अपञ्चम स्पर्शः पञ्चमो भवति । इति टस्य णकारे द्वित्वे च रूपम् ।

महाँ२॥ऽअसिसत्रादेवमहाँ२॥ऽअसि ॥ मुह्नादेवानामसुर्य्यः
पुरोहितोव्विभुज्योतिरदाब्भ्यम् ॥४०॥ श्रायन्तऽइवसूर्यम् ॥
श्रायन्तऽइवसूर्य्यंव्विश्वेदिन्द्रस्यभक्षत ॥ व्वसूनिजातेजनमा
नऽओजसाप्रतिभागन्नदीधिम ॥४१॥ अद्यादेवा[1] ॥ अद्यादे
वाऽउदितासूर्य्यस्यनिरᳫहंसपिपृ[2]तानिरवद्यात् ॥ तन्नोमित्रो
व्वरुणोमामहन्तामदितिᳫसिन्धुः पृथिवीऽउतद्यौः ॥ ४२ ॥

---

१ अद्यदेवा. । अत्र "अद्य त हकारचकारभवत वृणीमहे देवेषु" (शु य प्रा ३ अ ११५ सू ) इत्यनेन देवा इति परे दीर्घे अद्यादेवा । २ पिपृत निरवद्यात् इति पदम् । अत्र तकाराकारस्य निघटितनकारे परे "धारयाम ०" ( शु य प्रा ३ अ. १०८ सू ) इत्यनेन दीर्घे पिपृतानिरवद्यात् ।

आकृष्णेन ॥ आकृष्णेनुरजसावर्त्तमानोनिवेशयन्नमृतम्म
र्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्श्य
न् ॥ ४३ ॥ [ १४-३ ] प्रवावृजे[1] । सुप्प्रयाबर्हिरेषामाविं
श्पतीवबीरिटऽइयाते ॥ विशामक्तोरुषसं÷पूर्वहूतौवायु॰
पूषास्वस्तयेनियुत्त्वान् ॥ ४४ ॥ इन्द्रवायूबृहस्प्पतिम् ॥
इन्द्रवायूबृहस्प्पतिम्मित्राग्निम्पूषणम्भगम् ॥ आदित्त्या

1 प्रववृजे इति पदम् । अत्र "ववृधववृजो." ( शु. य. प्रा. ३ अ. ११४ सू ) इत्यनेन वृजे परे वेत्यस्य ह्रस्वाकारस्य दीर्घाकारे प्रवावृजे ।

न्मारुतङ्गणम् ॥ ४५ ॥ व्वरुणन्त्प्राविता । भुवन्मित्रोव्वि
श्वाभिरूतिभिः ॥ करतान्नःसुराधसः ॥ ४६ ॥ अधि
नः ॥ अधिनऽइन्द्रैषांव्विष्णोसजात्त्यानाम् ॥ [1]इतामरुतोऽ
अश्विना ॥ [2]तम्प्रत्क्कथायंव्वेनोयेदेवासऽआनऽइडाभिर्व्विश्वेभिः
सोम्म्यम्मद्धोमासश्चर्षणीधृतः ॥४७॥ अग्नऽइन्द्र ॥ अग्नऽ
इन्द्रव्वरुणमित्रदेवाःशर्द्धःप्प्रयन्तमारुतोतव्विष्णो ॥ उभा

---

१ इतमरुत । अत्र "शृणुतत्विविषिप्रजिभवतपिवेतसातिष्ठरक्षा मकारे" (शु य प्रा अ २ सू ११७) इत्यनेन मकारे परे दीर्घे इतामरुत ।
२ तप्प्रत्क्कथा अ ७ मं १२ ॥ १ अयव्वेन अ ७ म १६॥ १ येदेवास अ ७ म १९॥ १ आनऽइडाभि अ ३३ म ३४॥ १ व्विश्वेभिः
सोम्म्यम् अ ३३ म १० ॥ १ ओमासश्चर्षणीधृत . अ ७ म ३३ ॥ इति प्रतीकानि ॥

नासत्त्यारुद्रोऽअधग्नाःपूषाभगꣳसरस्वतीजुषन्त ॥ ४८ ॥
इन्द्राग्नीमित्रावरुणा ॥ इन्द्राग्नीमित्रावरुणादितिꣳस्वः
पृथिवीन्द्याम्मरुतꣳपर्वताँ२॥ऽअपः ॥ हुवेविष्णुम्पूषणम्ब्रह्म
णस्पतिम्भगन्नुशꣳसꣳसवितारमूतये ॥४९॥ अस्मेरुद्राः ॥
अस्मेरुद्रामेहनापर्वतासोवृत्रहत्येभरहूतौसजोषाꣳ ॥ यꣳ
शꣳसंतेस्तुवतेधायिपज्ज्रऽइन्द्रज्येष्ठाऽअस्माँ२॥ऽअवन्तुदे
वाः ॥५०॥ अर्वाञ्चोऽअद्य ॥ अर्वाञ्चोऽअद्याभवतायजत्राऽ

१ अद्य भवत । अत्र "अद्य त हकारचकारभवतवृणीमहे देवेषु" (शु. य. प्रा. अ ३ सू. ११५) इत्यनेन भवतपदे दीर्घं अद्याभव इति ।

आवोहार्हिभयमानोव्ययेयम् ॥ त्राद्ध्वंन्नोदेवानिजुरोवृकस्य
त्राद्ध्वंकुर्त्तादवपदोयजत्राः ॥५१॥ विश्वेऽअद्य । मरुतोविश्व
ऽऊतीविश्वेभवन्त्वग्नयःसमिद्धाः ॥ विश्वेनोदेवाऽअवसा
गमन्तुविश्वमस्तुद्रविणंवाजोऽअस्मे ॥ ५२ ॥ विश्वेदेवाः ।
शृणुतेमꣳहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ ॥ येऽअग्निजि
ह्वाऽउतवायजत्राऽआसद्यास्मिन्बर्हिषिमादयद्ध्वम् ॥ ५३ ॥

---

२ उपद्यविष्ठ । "द्यवेश्च" (शु य प्रा अ ३ सू ५९) इत्यनेन द्यविशब्दात्परस्य स्थवटितसकारस्य षत्वे कृते "ऊष्मान्तस्थाभ्यश्च स्पर्शे" (शु य प्रा अ ४ सू १०२) इत्यनेन ठकारस्य द्वित्वम् ।

देवेभ्योहि । प्प्रथमँ॑ह्युज्ञियेभ्योमृतत्त्वꣳसुवसिभागमुत्त
मम् ॥ आदिद्दामानꣳसवितर्व्यूर्णुषेनूचीनाजीविताम्मानुषे
भ्यः ॥ ५४ ॥ [११-४] प्रवायुम् ॥ प्रवायुमच्छाबृहती
मनीषाबृहद्द्रयिंविश्श्ववारꣳरथप्प्राम् ॥ द्युतद्द्यामानियुतःपत्त्यं
मानःकविःकविमियक्षसिप्प्रयज्ज्यो ॥५५॥ इन्द्रवायूऽइमे ।
सुताऽउपप्प्रयोभिरागतम् ॥ इन्दवोवामुशन्तिहि ॥ ५६ ॥
मित्रꣳहुवे । पूतदक्षंवरुणञ्चरिशादसम् ॥ धियंघृताचीꣳसा

धंन्ता ॥५७॥ दस्त्रांसुवाकंवदं । सुतानासंत्त्याव्वृक्त्तंबर्हिषदं ॥
आयांतदं‌रुद्रवर्त्तनी ॥ तंम्प्रत्क्कथायंव्वेनः ॥५८॥ व्विदद्यदी ॥
व्विदद्यदीसरमारुग्गणमद्रेम्र्महिपाथः पूर्व्यंदंसद्र्ध्यक्ककं ॥
अग्ग्रंन्नयत्सुपद्यक्क्षंराणामच्छारवंम्प्रथमाजानतीगात् ॥५९॥
नहिस्प्पशम् ॥ नहिस्प्पशमविदन्नन्यमस्म्माद्वैश्वानरात्पुरऽ
एतारमग्नेः ॥ एमेनमवृधन्नमृताऽअमंत्त्यंव्वैश्वानरङ्क्षेत्रजि

१ तम्प्रत्नथा अ ७ म॰ १२ ॥ १ मुयश्चेन अ ७ म १६ ॥ इति प्रतीके ॥

न्यायदेवाः ॥ ६० ॥ उग्राविघनिना ॥ उग्राविघनिनामृधऽ
इन्द्राग्नीहवामहे ॥ तानोमृडातऽईदृशे ॥ ६१ ॥ उपास्मै ।
गायतानरःपवमानायेन्दवे ॥ अभिदेवाँ२॥ऽइयक्षते ॥६२॥
येत्त्वा ॥ हिहस्त्येमघवन्नवर्द्धन्येशाम्बरेहरिवोयेगविष्टौ ॥ येत्त्वा
नूनमनुमदन्तिविप्राःपिबेन्द्रसोमसगणोमरुद्भिः ॥ ६३ ॥
जनिष्ठाऽउग्रः । सहसेतुरायमरायमन्द्रऽओजिष्ठोबहुलाभि

१ गायत नर. इति पदम् । तकारोत्तरवर्त्तिनो ह्रस्वाकारस्य नकारे परे "धारयाम०" (शु य. प्रा ३ अ. १०८ सू ) इत्यनेन दीर्घे गायतानरः इति ।

मानः ॥ अवर्द्धन्निन्द्रम्मुरुतश्चिदत्रमाताय्यद्वीरन्दुधनुद्धनिष्ठा ॥ ६४ ॥ आतु ॥ आतुनऽइन्द्रवृत्रहन्नस्म्माकमुर्द्धमागहि ॥ मुहान्महीभिरूतिभिः ॥ ६५ ॥ त्वमिन्द्र ॥ त्वमिन्द्रप्प्र तूर्तिष्व्वभि विश्वाऽअसिस्पृधः ॥ अशस्तिहाजनिताव्विश्व तूरसित्त्वन्तूर्य्यतरुष्व्यतः ॥ ६६ ॥ अनुते ॥ अनुतेशुष्म्मन्तुरयन्तमीयतुःक्षोणीशिशुन्नमातरा ॥ व्विश्वास्तेस्पृधःश्न

1 आतु न इन्द्र इति पदम्। तुकारोत्तरवर्तिनो ह्रस्वोकारस्य "वारयाम"' (शु य प्रा ३ अ १०८सू ) इत्यनेन नकारे परे दीर्घे आतून इन्द्र इति ।

थयन्तमुन्न्यवैवृत्रँ॑ऽस्यदिन्द्रतूर्व्वसि ॥ ६७॥ सुज्ज्ञोदेवानाम् ॥
सुज्ज्ञोदेवानाम्भवत्यैतिसुम्न्नमादित्यासोभवतामृडयन्तः ॥
आवोर्व्वाचीसुमतिर्व्ववृत्यादंहोश्चिद्यावरिवोवित्तरासत् ॥ ६८॥
अदब्धेभिःसवितः । पायुभिष्ट्वँ॑शिवेभिरद्यपरिपाहिनोग
यम् ॥ हिरण्ण्यजिह्वःसुवितायनव्व्यसेरक्षामाकिर्न्नोऽअघशंसः
सऽईशत ॥ ६९ ॥ [१५-५] प्रवीरया । शुचयोदद्रिरेवाम

[1] पायुभि त्वम्। इति पदम्। अत्र "मातृभिरर्चिभिः पायुभिर्वरूत्री," (शु. य प्रा ३ अ ७९ सू.) इत्यनेन एकाक्षरे पदे परे पायुभिः इत्यस्य विसर्गस्य षत्वे "षात्तथौ मूर्धन्यम्" (शु य. प्रा ३ अ. ८० सू) तस्य टकारे "ऊष्मान्तस्थाभ्यश्च स्पर्शं" (शु य. प्रा ४ अ. १०२ सू.) इति...

च्छ्वऽस्युभिर्म्मधुमन्तंसुतासः ॥ वहंवायोनियुतोयाह्यच्छापि
बासुतस्यान्धसोमदाय ॥ ७० ॥ गावऽउप ॥ गावऽउपावता
वतम्महीयुज्ञस्यरप्सुदा ॥ उभाकर्णाहिरण्यया ॥ ७१ ॥
काव्ययोराजानेषु ॥ काव्ययोराजानेषुक्रत्वादक्षस्यदुरोणे ॥
रिशादसासधस्थऽआ ॥ ७२ ॥ दैव्यावध्वर्यू ॥ दैव्यावध्व
र्यूऽआगतंरथेनसूर्यत्वचा ॥ मध्वायज्ञंसमञ्जाथे ॥ तं

१ तम्रत्कर्या १ अ. ७ म १२ ॥ अयमेन. १ अ ७ म १६ ॥ इति प्रतीके ॥

स्मृत्क्कथायंव्वेनः ॥ ७३ ॥ तिरश्चीनोव्विततः ॥ तिरश्चीनो
व्विततोरश्मिरेषामधःस्विदासी३दुपरिस्विदासी३त् ॥ रेतो
धाऽआसन्महिमानंऽआसन्त्स्वधाऽअवस्तात्प्रयतिःपुरस्ता
त् ॥ ७४ ॥ आरोदसी ॥ आरोदसीऽअपृणदास्वर्म्महज्जा
तँयदेनमपसोऽअधारयन् ॥ सोऽअध्वरायपरिणीयतेकविर
त्योनवाजसातयेचनोहितः ॥७५॥ उक्त्थेभिर्वृत्रहन्तमा ॥
उक्त्थेभिर्वृत्रहन्तमायामन्दानाचिदागिरा ॥ आङ्गूषैराविवा

सतः ॥ ७६ ॥ उपनः । सूनवोगिरः÷शृण्वन्त्वमृतस्यये ॥
सुमृडीकाभवन्तुनः ॥ ७७ ॥ ब्रह्माणिमे । मतयःशंसुता
सःशुष्मइयर्त्तिप्रभृतोमेऽअद्रिः÷ ॥ आशासतेप्रतिहर्य्य
न्त्युक्थेमाहरीवहतस्तानोऽअच्छ ॥ ७८ ॥ अनुत्तमाते ।
मघवन्नकिर्नुनत्वावाँ२॥ऽअस्तिदेवताविदानः ॥ नजायमा
नोनशतेनजातोयानिकरिष्याकृणुहिप्रवृद्ध ॥७९॥ तदित् ॥
तदिदासभुवनेषुज्ज्येष्ठँ२यतोजज्ञऽउग्रस्त्वेषनृम्णः ॥ सद्यो

जञ्ज्ञानोनिरिणातिशत्रूननुयंविश्श्वेमदन्त्यूमाᳬ ॥८०॥ इमाऽ
उक्त्वा । पुरूवसोगिरोवर्द्धन्तुयाममं ॥ पावकवर्णाᳬशुचयो
विपश्चितोभिस्तोमैरनूषत ॥ ८१ ॥ यस्यायम् ॥ यस्यायंवि
श्श्वऽआर्य्योदासःशेवधिपाऽअरिः ॥ तिरश्चिदर्य्येरुशमेपवी
रवितुब्भ्येत्सोऽअज्ज्यतेरयिः ॥८२॥ अयᳬसहस्रम् ॥ अयᳬ
सहस्रमृषिभिःᳬसहस्कृतᳬसमुद्रऽइवपप्प्रथे ॥ सत्त्यःसोऽअस्य
महिमागृणेशवोयज्ज्ञेषुविप्प्रराज्ज्ये ॥ ८३ ॥ अदब्धेभिःᳬसवि

१ पुरूवस. । अत्र "अश्वरश्मिमतिसुमति" ( शु य प्रा ३ अ ९८ सू ) इत्यनेन वस. इत्यस्य वकारे परे पुरुशब्दस्य ह्रस्वोकारस्य दीर्घोकारः ।

तः । पायुभिष्ट्वᳬशिवेभिरद्यपरिपाहिनोगयम् ॥ हिरण्ययजि
ह्वःसुवितायनव्व्यंसेरक्षामाकिर्न्नोऽअघशᳬसऽईशत ॥ ८४ ॥
[ १५-६ ] आनः ॥ आनोयज्ञन्दिविस्पृशंवायोयाहिसुम
न्मभिः ॥ अन्तःपवित्रेऽउपरिश्रीणानोयᳬशुक्रोऽअयामि
ते ॥ ८५ ॥ इन्द्रवायूसुसन्दृशा । सुहवेहहवामहे ॥ यथानः
सर्व्वऽइज्जनोनमीवःसङ्गमेसुमनाऽअसत् ॥ ८६ ॥ ऋधगित्था ।
समर्त्यःशशमेदेवतातये ॥ योनूनम्मित्रावरुणावभिष्टयऽ

आचुक्क्रेहुव्व्यदांतये ॥ ८७॥ आयांतम् ॥ आयांतुमुपंभूषत
म्मद्धुं÷पिबतमाश्विना ॥ दुग्गध्धम्पयोवृंषणाजेन्व्यावसूमानोंम्
र्द्धिंष्ट्टमागंतम् ॥८८॥ प्रैतुं ॥ प्रैतुब्ब्रह्मंणुस्प्पतिंःप्प्रदे्व्येतुसून्
तां ॥ अच्छांवीरन्नर्य्यम्पुङ्क्तिंराधसन्देवायुज्ज्ञन्नयन्तुनः ॥८९॥
चुन्द्रमांऽअप्प्सु ॥ चुन्द्रमांऽअुप्प्स्वुन्तरासुंपुण्णोंधांवतेदिुवि ॥
रुयिम्पिुशङ्गम्ब्बहुुलम्पुंरुस्पृहुढ्हरींरेतिुकनिंक्क्रदत् ॥९०॥ देुव
न्दैवंव्वः ॥ देुवन्दैवुंव्वोवंसेदेुवन्दैवमुभिष्ट्टंये ॥ देुवन्दैवढ्हुवेम्

व्वाजंसातयेगृणन्तोदेव्व्याधिया ॥ ९१ ॥ दिविपृष्ट३ ॥ दिवि

पृष्ठोऽअरोचताग्निर्व्वैश्वानरोबृहन् ॥ क्ष्मयांव्वृधानऽओजंसा

चनोहितोज्ज्योतिषाबाधतेतमः ॥ ९२ ॥ इन्द्राग्नीऽअपा

त् ॥ इन्द्राग्नीऽअपादियम्पूर्व्वागात्पद्वतीभ्यः ॥ हित्त्वीशि

रोजिह्वयाव्वावदच्चरत्त्रिᳲशत्पदान्यक्रमीत् ॥ ९३ ॥ देवासो

हि[1] । ष्म्मामनवेसमन्यवोव्विश्वेसाकᳲसरातयः ॥ तेनोऽ

---

१ हिष्ममनवे इति पदम् । अत्र "शृणुतत्त्विपिभ्रजिभवतपिबेतस्रातिष्ठरक्षा मकारे" ( शु य प्रा ३ अ ११७ सू ) इत्यनेन मकारे स इत्यस्या-
कारस्य दीर्घाकारे विधीयमाने हिष्मामनवे । अत्र मस्य द्वित्व "ऊष्मान्तस्थाम्यश्च स्पर्श" ( शु य प्रा ३ अ. १०२ सू ) इत्यनेन ज्ञेयम् ।

अद्यतेऽअंपरन्तुचेतुनोभवन्तुवरिवोविदः ॥ ९४ ॥ अपांध
मत् ॥ अपांधमद्भिशस्तीरशस्तिहाथेन्द्रोद्युम्न्याभवत् ॥
देवास्तऽइन्द्रसख्यायेमिरेबृहद्भानोमरुद्गण ॥ ९५ ॥
प्रवः ॥ प्रवऽइन्द्रायबृहतेमरुतोब्रह्मार्चत ॥ वृत्रꣳहनतिवृत्र
हाशतक्रतुर्वज्रेणशतपर्वणा ॥ ९६ ॥ अस्येत् ॥ अस्येदि
न्द्रोवावृधेवृष्ण्यꣳशवोमदेसुतस्यविष्णवि ॥ अद्यातमस्यम

१ अद्यत तस्य इति पदम् । "अद्य त इकारचकारभवतवृणीमहे देवेषु" (शु. य प्रा २ अ १६५ सू ) इत्यनेन ह्रस्वतकारे परे अद्याकारस्य दीर्घे अद्यातमस्य इति ।

हि॒मानं॑मा॒यवो॑नु[1]ष्टु॑वन्ति॒पूर्व॑था ॥ इ॒[2]मा॒ऽउ॑त्त्वा॒य॒स्या॒यम॒य॒ꣳ सु॒ह॒स्त्रं॑मू॒र्द्ध्वऽ॒ऊ॒षु॒णं॑÷ ॥ ९७ ॥ [१३-८] इतिश्रीवाजसनेय-संहितायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ श्रीवेदपुरुषाय नमः ॥

अनुवाकसूत्रम् ॥ यज्जाग्रतो दश, पञ्चनद्यो दश, सोमोधेनुन्दश, ऽआकृष्णेन दश, पूषन्तव दश, नतदष्टौ, षडष्टपञ्चा-

---

१ अनुष्टुवन्ति । अत्र "अनो स्तुवन्त्याम्" (शु य प्रा ३ अ ७२ सू ) इत्यनेन अनोरुपसर्गात्परस्य स्तुवन्तिपदे परे तद्घटितसकारस्य षकार । तत "ऊष्मान्तस्थाभ्यश्च स्पर्शः" (शु य प्रा ४ अ १०२ सू ) इत्यनेन हकारस्य द्वित्वम् । २ इमाऽउत्वा अ ३३ म ८१ ॥ १ यस्यायम् म० ८२ ॥ १ अयꣳसहस्त्रम् म ८३ ॥ १ ऊर्द्ध्वऽऊषुणं अ ११ म ४२ ॥ इति प्रतीकानि ॥

शत् [अ. ३४ मं. ५८ अनु. ६] ॥ हरिःॐ ॥ यज्जाग्ग्रं
तं ॥ यज्जाग्ग्रंतोदूरमुदैतिदैवन्तदुंसुप्तस्यतथैवैति ॥ दूरङ्गम
ञ्ज्योतिषाञ्ज्योतिरेकन्तन्मेमनः शिवसंङ्कल्प्पमस्तु ॥ १ ॥
येनकर्म्माणि ॥ येनकर्म्माण्यपसोमनीषिणोयज्ञेकृण्वन्ति
विदथेषुधीराः ॥ यदपूर्व्वंय्यक्षमन्तःप्रजानान्तन्मेमनः
शिवसंङ्कल्प्पमस्तु ॥ २ ॥ यत्प्रज्ञानम् ॥ यत्प्रज्ञानमुत
चेतोधृतिश्चयज्ज्योतिरन्तरमृतम्प्रजासु ॥ यस्मान्नऽऋतेकि

ञ्चनकर्म्मीक्क्रियतेतन्मेमनं÷शिवसंङ्कल्पमस्तु ॥ ३ ॥ येने
दम् ॥ येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेनसर्व्वम् ॥
येनंयज्ञस्तायतेसप्तहोतातन्मेमनं÷शिवसंङ्कल्पमस्तु॥४॥
यस्मिन्नृचं÷ ॥ यस्मिन्नृचःसामयजूꣳषियस्मिन्प्रति
ष्ठितारथनाभाविवाराः ॥ यस्मिꣳश्चित्तꣳसर्व्वमोतम्प्रजाना
न्तन्मेमनं÷शिवसंङ्कल्पमस्तु ॥ ५ ॥ सुषारथिरश्वानिव ॥
सुषारथिरश्वानिवयन्मनुष्यान्नेनीयतेभीशुभिर्व्वाजिनऽइव ॥

हृत्प्रतिष्ठँय्यदजिरञ्जविष्ठन्तन्मेमनः शिवसङ्कल्पमस्तु ॥६॥
पितुन्नु । स्तोषम्महोधर्म्माणन्तविषीम् ॥ यस्यत्त्रितोव्व्यो
जसावृत्रंव्विपर्व्वमर्द्दयत् ॥ ७ ॥ अन्विदनुमते ॥ अन्विदनुमते
त्वम्मन्न्यासैशन्नस्कृधि ॥ क्रत्वेदक्षायनोहिनुप्प्रणऽआ
यूँषितारिषः ॥ ८ ॥ शतम् ॥ १८०० ॥ अनुनः ॥ अनु
नोद्यानुमतिर्य्यज्ञन्देवेषुमन्न्यताम् ॥ अग्निश्चहव्व्यवाहनोभ
वन्तन्दाशुषेमयः ॥ ९ ॥ सिनीवालिपृथुष्टुके ॥ सिनीवालिपृथु

ष्टुकेयादेवानामसिस्वसां ॥ जुषस्वंहुव्यमाहुंतम्प्रजान्देविदि

दिड्ढिनः ॥ १० ॥ [ १-१ ] पञ्चनद्यः ॥ पञ्चनद्यःसरस्वती

मपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित्

॥ ११ ॥ त्वमग्ने । प्रथमोऽआङ्गिराऽऋषिर्देवोदेवानामभवः

शिवःसखा ॥ तवव्रतेकवयोविद्मनापसोजायन्तमरुतोभ्रा

जदृष्टयः ॥ १२ ॥ त्वन्नः ॥ त्वन्नोऽअग्नेतवदेवपायुभिर्म

घोनोरक्षतन्वश्चवन्द्य ॥ त्रातातोकस्यतनयेगवामस्यनिमेषं

रक्ष्यमाणस्त्वंव्रते ॥ १३ ॥ उत्तानायामवं । भराचिकित्वा
न्त्सद्यःप्रवीतावृषणञ्जजान ॥ अरुषस्तूपोरुशदस्यपाजऽइडा
यास्पुत्रोवयुनेजनिष्ट ॥ १४ ॥ इडायास्त्वा । पदेवयन्ना
भांपृथिव्याऽअधि ॥ जातवेदोनिधीमह्यग्नेहव्यायवोढवे
॥ १५ ॥ प्रमन्महे । शवसानायशूषमाङ्गूषङ्गिर्वणसेऽअङ्गिर
स्वत् ॥ सुवृक्तिभिस्तुवतऽऋग्मियायार्चामार्कन्नरोविश्रुता
य ॥ १६ ॥ प्रवः ॥ प्रवोमहेमहिनमोभरध्वमाङ्गूष्यꣳशव

सानायसामं ॥ येनां[1]नꣳपूर्वेपितरंःपदज्ञाऽअर्चन्तोऽअङ्गिर
सोगाऽअविन्दन् ॥१७॥ इच्छन्तित्त्वा ॥ सोम्म्यासꣳसखायꣳ
सुन्वन्तिसोमन्दधतिप्रयाꣳसि ॥ तितिक्षन्तेऽअभिशस्ति
ञ्जनानामिन्द्रत्त्वदाकश्चनहिप्प्रकेतः ॥ १८ ॥ नतें । दूरेपर
माचिद्रजाꣳस्यातुप्प्रयाहिहरिवोहरिब्भ्याम् ॥ स्थिरायवृ
ष्णेसवनाकृतेमायुक्ताग्ग्रावाणꣳसमिधानेऽअग्नौ ॥ १९ ॥

---

१ येन न इति पदम् । अत्र येनेत्यस्य नकाराकारस्य न पदे परे "धारयामयोजावसचस्तनुदमोपुजयतोरुष्यरक्षयजयच्छमस्सथपिपृतगायतातुयेन नकारे" ( शु य प्रा. ३ अ. १०८ सू. ) इत्यनेन दीर्घाकारे जाते येनान इति पदम् ।

अषांढँऽयुत्सु । पृतंनासुपप्प्रिंᳪंस्वृषामुप्प्सांवृजनंस्यगोपाम् ॥
भरेषुजाᳪंसुंक्षितिᳬंसुश्श्रवंसञ्जयंन्तुन्त्वामनुंमदेमसोम ।२०।
[१०-२] सोमोंधेनुम् ॥ सोमोंधेनुᳬंसोमोऽअर्वन्तमाशुᳬं
सोमोंवीरङ्कर्म्मण्ण्यन्ददाति ॥ सादुन्न्यंविदुत्थ्यᳬंसभेयंम्पितृ
श्श्रवंणँऽयोददांशदस्म्मै ॥ २१ ॥ त्वमिमाः ॥ त्वमिमाऽ
ओषंधीःसोमविश्श्वास्त्त्वमपोऽअंजनयुस्त्वङ्गाः ॥ त्वमातंत

१ स्व साम् इति पदम् । अत्र "स्वर्धूं सा०सहयो (शु य प्रा ३ र्ष ४१ सू ) इत्यनेन यथासंख्य स्वस्य विसर्जनीयस्य साम् पदे परे रेफत्व सकारस्य च मूर्धन्यषत्वञ्च जातम् ।

न्थोर्व्वन्तरिक्षन्त्वञ्ज्योतिषाव्वितमोव्ववर्त्थ ॥२२॥ देवेनंनः ॥
देवेनंनोमनसादेवसोमरायोभागꣳसहसावन्नभियुद्ध्य ॥ मात्त्वा
तंन्दीशिषेव्वीर्य्यस्योभयेभ्यꣳप्प्रचिकित्सागविष्टौ ॥ २३ ॥
अष्टौव्वि ॥ अष्टौव्व्यख्यत्ककुभꣳपृथिव्यास्त्रीधन्वयोजनास
प्तसिन्धून् । हिरण्याक्षꣳसवितादेवऽआगाद्दधद्रत्नादाशु
षेव्वार्य्याणि ॥ २४ ॥ हिरण्यपाणिꣳसविता । विचर्षणिरुभे
द्यावापृथिवीऽअन्तरीयते ॥ अपामीवाम्बाधतेव्वेतिसूर्य्यमभि

कृष्णेनरजसाद्यामृणोति ॥ २५ ॥ हिरण्यहस्त्तोऽअसुरः ।
सुनीथः सुमृडीकः स्ववाँयात्त्वर्वाङ् ॥ अपसेधन्त्रक्षसोयातु
धानानस्त्थाद्देवः प्प्रतिदोषङ्गृणानः ॥२६॥ येते ॥ येतेपन्थाः
सवितः पूर्व्यासोरेणवः सुकृताऽअन्तरिक्षे ॥ तेभिर्न्नोऽअद्यप
थिभिः सुगेभीरक्षाचनोऽअधिचब्रूहिदेव ॥२७॥ उभापिबत
म् ॥ उभापिबतमश्श्विनोभानः शर्म्मयच्छतम् ॥ अविद्रिया
भिरूतिभिः ॥ २८ ॥ अप्प्नस्वतीमश्श्विना ॥ अप्प्नस्वतीम

श्विनाव्वाचंमुस्म्मेकृतन्नोदस्त्राव्वृषणामनीषाम् ॥ अद्यूत्त्येवंसे
निह्वयेवांवृधेचंनोभवतंव्वाजंसातौ ॥ २९ ॥ द्युभिरक्क्तुभिः ॥
द्युभिरक्क्तुभिःपरिपातमस्म्मानरिष्टेभिराश्विनासौभंगेभिः ॥
तन्नोमित्रोव्वरुणोमामहन्तामदितिःसिन्धुः पृथिवीऽउतद्यौः
॥ ३० ॥ [ १०-३ ] आकृष्णेन ॥ आकृष्णेनरजंसाव्वर्त्त
मानोनिवेशयंन्नमृतम्मर्त्त्यंञ्च ॥ हिरण्ण्ययेनसवितारथेनादे
वोयांतिभुवनानिपश्श्यंन् ॥ ३१ ॥ आरात्त्रि ॥ आरात्त्रिपा

र्त्थिवु६ँ रजं÷पितुरंप्प्रायिधामंभिः ॥ दिवश्सदांर्ठंसिबृहतीव्वि
तिष्ठसुऽआत्त्वेषंव्वंर्त्ततेतमं÷ ॥ ३२ ॥ उषस्त्तत् ॥ उषस्त्तच्चि
त्रमाभंरास्म्मब्भ्यंव्वाजिनीवति ॥ येनंतोकञ्चुतनंयञ्च्धामंहे
॥ ३३ ॥ प्रातरग्निम् ॥ प्रातरग्निम्प्रातरिन्द्र६ँ हवामहेप्प्रात
र्म्मित्रावरुणाप्प्रातरश्विनां ॥ प्रातब्भंगंम्पूषणम्ब्रह्मणस्प्पति
म्प्रातश्सोमंमुतरुद्र६ँ हुवेम ॥ ३४ ॥ प्रातर्ज्जितम्भगंम् ॥ प्रात
र्ज्जितम्भगंमुग्ग्र६ँ हुवेमव्वुयम्पुत्रमदितेर्व्योव्विधर्त्ता ॥ आद्ध्रश्चि

द्यम्मन्यमानस्तुरश्चिद्राजाचिद्यम्भगम्भक्षीत्याह ॥३५॥
भगप्प्रणेतः ॥ भगप्प्रणेतर्भगसत्त्यराधोभगेमान्धियमुद
वाददन्नः ॥ भगप्प्र[1]णोजनयगोभिरश्वैर्भगप्प्रनृभिर्नृवन्तः
स्याम ॥ ३६ ॥ उतेदानीम् ॥ उतेदानीम्भगवन्तःस्यामोत
प्प्रपित्त्वऽउतमध्येऽअह्नाम् ॥ उतोदितामघवन्त्सूर्य्यस्यव्वय
न्देवानांसुमतौस्याम ॥ ३७ ॥ भगऽएव । भगवाँ२॥ऽअ

---

१ प्र॥ जनयगोभि. । अत्र समानपदत्वाभावेन "कृपरेभ्यो०" इत्यनेन णत्वाप्राप्तौ "निपण्णाय०" इत्यनेनासमानपदेऽपि विधीयमानस्य ण॥१स्य प्रन. इत्यस्य आयुषिपर एव विधानात् 'जनयगोभि. पदे" परे णत्वम् ।

स्त्तुदेवास्त्तेनंव्वयम्भगंवन्तःस्याम ॥ तन्त्वांभगुसर्व्वुऽइज्जोह
वीतिसन्नोभगपुरऽएताभंवेह ॥ ३८ ॥ समंद्धरायं ॥ सम
द्धरायोषसोनमन्तदधिक्क्रावेवशुचंयेपदायं ॥ अर्व्वाचीनंव्वसु
विदुम्भगंन्नोरथंमिवाश्वांव्वाजिनुऽआवंहन्तु ॥ ३९ ॥ अश्वांव
तीर्ग्गोमंतीः ॥ अश्वांवतीर्ग्गोमंतीर्न्नऽउषासोव्वीरवंतीःसदंमु
च्छन्तुभद्राः ॥ घृतन्दुहांनाव्विश्वतःप्रपीतायूयंपांतस्वस्त्ति



१ नऽउषास.। अत्र नकारात्परस्य उप इत्यस्य उँस्याकारस्य "उपमहोभिर्नक्तेमीकारै" (शु. य. प्रा ३ अ १११ सू.) इत्यनेन दीर्घाकार.।

भिर्हसदानर्ह ॥ ४० ॥ [ १०-४ ] पूषन्तवं । व्रतेव्वयन्नरिष्ष्येमकदाचन ॥ स्स्तोतारंस्तऽइहस्स्मसि ॥ ४१ ॥ पथस्प्पथर्ह परिपतिम् ॥ पथस्प्पथर्हपरिपतिंव्वचस्याकामेनकृतोऽअब्भ्यानड्वर्कम् ॥ सनोरासच्छुरुधश्श्चन्द्राग्ग्राधियन्धियर्हसीषधातिप्प्रपूषा ॥४२॥ त्रीणिपदा[2]व्विचक्क्रमेव्विष्णुर्ग्गोपाऽअदाब्भ्यर्ह । अतोधर्म्माणिधारयन् ॥ ४३ ॥ तद्विप्प्रासर्ह ॥ तद्विप्प्रासो

---

१ पूषन्तव । अत्र "ऋपरेभ्य" इत्यनेन समानपदे विधीयमान णत्वं "प्रकृत्या पदान्तीय" ( शु य प्रा ३ अ ९० सू ) इत्यनेन निषिध्यते ।
२ "त्रीणि पदा" अत्र पदानिघटितस्य निकारस्य "निशब्दो बहुलम्" ( शु य प्रा. ३ अ १८ सू ) इत्यनेन लोपे "त्रीणि पदा" इति पदम् ।

व्विपन्न्यवोजागृवाꣳसःसमिन्धते ॥ व्विष्णोर्यत्त्परमम्पदम्
॥ ४४ ॥ घृतवंतीभुवनानाम् ॥ घृतवंतीभुवनानामभिश्रि
योर्व्वीपृत्थ्वीमधुदुघेसुपेशसा ॥ द्यावापृथिवीव्वरुणस्यधर्म्मणा
व्विष्कंभितेऽअजरेभूरिरेतसा ॥ ४५ ॥ येनं÷ । सपत्क्काऽअ
पतेभवन्तिवन्द्राग्ग्निब्भ्यामवबाधामहेतान् ॥ व्वसवोरुद्द्राऽ
आदित्त्याऽउपरिस्पृशम्मोग्ग्रञ्चेत्तारमधिराजमक्क्रन् ॥ ४६ ॥
आनासत्त्या । त्रिभिरेकादशैरिहदेवेभिर्य्यातम्मधुपेयमश्वि

ना ॥ प्रायुस्त्तारिँहृन्नीरपाॅंसिम्रॅक्ष्तद्धॅसेधंतन्द्वेषोभवंतद्धॅ
सचाभुवा ॥ ४७ ॥ एषवं÷ ॥ एषवुस्त्तोमोमरुतऽइयङ्गी
र्म्मान्दुार्य्यस्यंमान्यस्यंकारोः ॥ एषायांसीष्टतन्वेवयांविद्या
मेषंवृजनंज्ञीरदांनुम् ॥ ४८ ॥ सहस्त्तोमाॅंसहछन्दसॅं ॥
सहस्त्तोमाॅंसहछन्दसऽआवृतं÷सहप्प्रमाऽऋषंयॅंसप्तदै
व्यांॅं ॥ पूर्वेषाम्पन्थांमनुदृश्श्यधीराऽअन्वालेभिरेरत्थ्योन
रश्मीन् ॥ ४९ ॥ आयुष्ष्यंवर्च्चस्यम् ॥ आयुष्ष्यंवर्च्चस्यॅंराय

स्पोषमौद्भिदम् ॥ इदꣳहिरण्यंव्वर्च्चस्वज्जैत्रायाविशतादुमाम्
॥५०॥ [१०-५] नतत् ॥ नतद्रक्षाꣳसिनपिशाचास्तरन्तिदे
वानामोजः प्रथमजꣳह्येतत् ॥ योबिभर्त्तिदाक्षायणꣳहिर
ण्यꣳसदेवेषुकृणुतेदीर्घमायुꣳसमनुष्येषुकृणुतेदीर्घमायुः
॥५१॥ यदाबद्ध्नन् ॥ यदाबद्ध्नन्दाक्षायणाहिरण्यꣳशता
नीकायसुमनस्यमानाः ॥ तन्मऽआबद्ध्नामिशतशारदायायु
ष्मान्जरदष्टिर्यथासम् ॥५२॥ उतनः ॥ उतनोहिर्बुद्ध्न्यः

शृणोत्त्वुजऽएकंपात्त्पृथिवीसंमुद्रः ॥ विश्श्वेदेवाऽऋंतावृधोहु
वानास्त्तुतामन्त्राःकविशस्त्ताऽअंवन्तु ॥५३॥ इमागिरंः ॥ इ
मागिरंऽआदित्त्येब्भ्योघृतस्नूःसनाद्राजंब्भ्योजुह्वाजुहोमि ॥
शृणोतुमित्त्रोऽअंर्य्यमाभगोनस्त्तुविजातोव्वरुणोदक्षोऽअः
शंः ॥ ५४ ॥ सप्तऽऋषंयः ॥ सप्तऽऋषंयःप्प्रतिहिताःशरीरे
सप्तरंक्षन्तिसदमप्प्रंमादम् ॥ सप्तापःस्वपंतोलोकमीयुस्त्त
त्रंजागृतोऽअस्वंप्नजौसत्त्रसदौचदेवौ ॥ ५५ ॥ उत्तिष्ठ ।

ब्र॒ह्म॑ण॒स्प॒ते॒दे॒व॒यन्त॒स्त्वे॒म॒हे ॥ उप॒प्रय॑न्तु॒म॒रु॒तः॑सु॒दान॑व॒ऽ
इन्द्र॑प्रा॒शूर्भ॑वा॒सचा॑ ॥५६॥ प्रनूनम् ॥ प्रनूनम्ब्रह्म॑ण॒स्पति॒र्म॒
न्त्रं॑वद॒त्युक्थ्य॑म् ॥ यस्मि॑न्नि॒न्द्रो॒व॑रु॑णो॒मि॒त्रोऽअ॑र्य॒मादे॒
वाऽओका॑ᳪसिचक्क्रि॒रे ॥५७॥ ब्रह्मणस्पते ॥ ब्रह्म॑ण॒स्प॒ते॒त्व॒
म॒स्ययन्तासूक्क्तस्यं॑बो॒धि॒तन॑यञ्चजिन्व ॥ विश्व॒न्तद्भ॒द्रँय॒द॒व॑

१ ब्रह्मणस्पते । अत्र विसर्जनीयस्य "प्रकृत्या कखयो. पफयोश्च" (शु. य. प्रा. ३ अ. ३५ सू ) इत्यनेन पतिशब्दे परे सकारो विधीयते । तत "ऊष्मान्तस्थाभ्यश्च स्पर्श" (शु य प्रा. ४ अ. १०२ सू ) इत्यनेन पकारस्य द्वित्त्वम् । २ भव सचा इति पदम् । वकाराकारस्य सचा परे "सचावरूथ्यवाजस्पायुपु च" (शु. य. प्रा. ३ अ. ११० सू ) इत्यनेन एतेषु परेषु भवेत्येतत्पदं दीर्घं भवति । अतो दीर्घाकारे भवासचा इति पदम् । (शु य प्रा. ३ अ. ११ सू ) इत्यनेन प्रकृतिभावे प्राप्तेऽपि "पतितालव्यस्वरोदये"

न्तिदेवाबृहद्वदेमविदथेसुवीराः ॥ यऽइमाविश्वाविश्वकर्मा यो नः पिताऽन्नपतेऽन्नस्यनोदेहि ॥ ५८ ॥ [ ८-६ ] ॥ इति श्री-
वाजसनेयसंहितायां चतुस्त्रिंशोऽध्यायः ॥३४॥ श्रीवेदपुरुषाय
नमः ॥ अनुवाकसूत्रम् ॥ अपेतो दश, पाघन्द्वादश, द्वौ द्वाविंशतिः [ अ. ३५ मं. २२ अनु. २ ] ॥ हरिः ॐ ॥ अपेत ॥ अपेतो
यन्तुपणयोसुम्म्नादेवपीयवः ॥ अस्यलोकःसुतावतः ॥ द्युभि
रहोभिरक्तुभिर्व्यक्तँय्यमोददात्ववसानमस्म्मै ॥ १ ॥ सावि

१ यऽइमाविश्वा अ १७ म १७ ॥ १ विश्वकर्माविमना अ १७ म २६ ॥ १ योनः पिता. अ १७ म २७ ॥ १ अन्नपतेऽन्नस्य अ ११ म ८३ ॥ इति प्रतीकानि ॥

तातेँ ॥ सविताते शरीरेभ्यः पृथिव्याँल्लोकमिच्छतु ॥ तस्मै
युज्यन्तामुस्रियाः ॥ २ ॥ वायुः पुनातु । सविता पुनात्त्व
ग्नेर्भ्राजसा सूर्यस्य वर्चसा ॥ विमुच्यन्तामुस्रियाः ॥ ३ ॥
अश्वत्थे वः ॥ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ॥
गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ४ ॥ सविताते ॥
सविताते शरीराणि मातुरुपस्थ आवपतु ॥ तस्मै पृथिवि शं
भव ॥ ५ ॥ प्रजापतौ त्वा । देवतायामुपोदके लोके नि दं

धाम्म्यसौ ॥ अपनः शोशुचदघम् ॥ ६ ॥ परम्मृत्यो ॥
परम्मृत्यो ऽअनुपरेहि पन्थां यस्ते ऽअन्य ऽइतरो देवयानात् ॥
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरान्
॥ ७ ॥ शंवातः ॥ शंवातः शꣳ हि ते घृणिः शन्ते भवन्त्विष्ट
काः ॥ शन्ते भवन्त्वग्नयः पार्थिवासो मा त्वाभिशूशुचन्
॥ ८ ॥ कल्पन्तान्ते ॥ कल्पन्तान्ते दिशस्तुभ्यमापः शि
वतमास्तुभ्यम्भवन्तु सिन्धवः ॥ अन्तरिक्षꣳ शिवन्तुभ्य

क्कॢप्यन्तान्तोदिशुꣳसर्व्वाः ॥९॥ अश्मन्वतीरीयतेसꣳरभध्वमु
त्तिष्ठतप्प्रतरतासखायः ॥ अत्राजहीमोशिवायेऽअसञ्छिवाँव्वु
यमुत्तरेमाभिवाजान् ॥ १० ॥ [१०-१] अपाघम् ॥ अपाघमप
किल्बिषमपकृत्यामपोरपः ॥ अपामार्गत्त्वमस्मदपदुःष्व
प्न्यꣳसुव ॥११॥ सुमित्रियानः ॥ सुमित्रियानऽआपऽओष
धयꣳसन्तुदुर्म्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्चवयन्द्वि

१ अत्राजहीम । अत्र जहीम. इति पदे परे अत्रशब्दस्य ह्रस्वाकारस्य "पूर्णो जहीमस्तेष्वत्र" (शु य प्रा. ३ अ १२१ सू.) इत्यनेन दीर्घो भवति ।
२ दुःष्वप्न्यꣳ सुव । अत्र "आविश्य स. प समानपदे" (शु य प्रा. ३ अ ५६ सू.) इत्यनेन विसर्जनीयस्य व्यवधानात्वत्वाप्राप्तौ "दुः ष्वप्न्यम्" (शु य. प्रा.३ अ ७३ सू.) इत्यनेन दो.परात्स्वमघटितसस्य षत्वं निपात्यते ।

ष्म्मः ॥१२॥ अनड्वाहमन्वारभामहे ॥ [1]अनड्वाहमन्वारभाम
हेसौरभेयꣳस्वस्तये ॥ सनऽइन्द्रऽइवदेवेभ्योव्वह्निः सन्तार
णोभव ॥ १३ ॥ उद्वयम् ॥ उद्वयन्तमसस्प्परिस्वः पश्श्यं
न्तऽउत्तरम् ॥ देवन्देवत्रासूर्य्यमगन्म्मज्ज्योतिरुत्तमम् ॥ १४ ॥
इमञ्जीवेभ्यः । परिधिन्दधामिमैषान्नुगादपरोऽअर्त्थमेतम् ॥
शतञ्जीवन्तुशरदः पुरूचीरन्तर्म्मृत्युन्दधताम्पर्व्वतेन ॥ १५ ॥

---

१ अनस् वाहम् इति पदम् । अत्र "अनसो वाहौ सकारो उकारम्" ( शु. य प्रा २ अ ४५ सू ) अत्र अनश्शब्दस्य सकारस्य वाहौ परे डकारो विधीयते तेन अनड्वाहम् ।

अग्नऽआयूंᳪषि । पवस्ऽआसुवोर्ज्जमिषंञ्चनः ॥ आरेबाध
स्वदुच्छुनांम् ॥ १६ ॥ आयुंष्मानग्ने । हविषांवृधानोघृत
प्रतीकोघृतयोनिरेधि ॥ घृतम्पीत्वामधुचारुगव्यम्पितेवंपुत्र
मभिरंक्षतादिमान्त्स्वाहा ॥१७॥ परीमे । गामंनेषतपर्य्य
ग्निमंहृषत ॥ देवेष्वंक्रतश्रवंःकऽइमाँ२॥ऽआदंधर्षति
॥ १८ ॥ क्रव्यादमग्निम् ॥ क्रव्यादमग्निम्प्रहिणोमि[1]दूरँय्यं
मराज्यंङ्गच्छतुरिप्रवाहः ॥ इहैवायमितरोजातवेदादेवेभ्यो

[1] प्रहिणोमि ॥ अत्र समानपदत्वाभावेन "ऋपरेभ्यः" इत्यनेन णत्वाप्राप्तौ "प्र नेतिनुदातिहिनोमीनाम्" (शु. य प्रा ३ अ. ८९ सू.) इत्यनेन णत्वम् ।

हुव्यंव्वंहतुप्प्रजानन् ॥ १९ ॥ व्वहंव्वपाम् ॥ व्वहंव्वपाज्ञातवेदः
पितृभ्भ्योयत्रैनान्वेत्थनिहिंतान्पराके ॥ मेदंसःकुल्ल्याऽउप
तान्त्स्रवन्तुसत्त्याऽएंषामाशिषःसन्नमन्ताᳬस्वाहां ॥ २० ॥
स्योनापृथिवि । नोभवानृक्क्षरानिवेशनी ॥ यच्छानःशर्म्म
सप्प्रथाः ॥ अपंनःशोशुचदघम् ॥ २१ ॥ अस्म्मात्त्वम् ॥
अस्म्मात्त्वमधिंजातोसित्त्वदयञ्जायतांपुनः ॥ असौस्वर्ग्गा
यंलोकायस्वाहां ॥ २२ ॥ [१२-२] इति श्रीवाजसनेयसंहि-

तायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥ श्रीवेदपुरुषाय नमः ॥

अनुवाकसूत्रम् ॥ ऋचंव्वाचꣳषोडश, द्यौःशान्तिरष्टौ, द्वौ चतुर्व्विꣳशतिः [अ. ३६ मं. २४ अनु. २] ॥ हरिः ॐ ॥

ऋचंव्वाचम् ॥ ऋचंव्वाचम्प्रपंद्येमनोयजुःप्प्रपंद्येसामंप्प्राणम्प्रपंद्येचक्षुःश्श्रोत्रम्प्रपंद्ये ॥ व्वागोजः॑सहौजोमयिप्प्राणापानौ ॥ १ ॥ यन्मे । च्छिद्रञ्चक्षुषोहृदंयस्यमनंसोव्वातितृण्णम्बृहस्प्पतिर्म्मेतद्दंधातु ॥ शन्नोभवतुभुवंनस्ययस्प्पतिः ॥ २ ॥

भूर्भुवः॒ ॥ भूर्भुवः॒स्वः॒तत्स॑वि॒तुर्वरे॑ण्यं॒भर्गो॑दे॒वस्य॑धीम
हि ॥ धियो॒योनः॑प्रचो॒दया॑त् ॥ ३ ॥ कया॑नः ॥ कया॑नश्चि॒त्रऽ
आभु॑वदू॒तीस॒दावृ॑धः॒सखा॑ ॥ कया॒शचि॑ष्ठयावृ॒ता ॥ ४ ॥ क
स्त्वा॑ । स॒त्योम॒दा॑ना॒म्मꣳहि॑ष्ठोमत्स॒दन्ध॑सः ॥ दृ॒ढाचि॑दा॒रु
जे॒वसु॑ ॥५॥ अ॒भीषु॒णः॑ ॥ अ॒भीषु॒णः॒सखी॑नामवि॒ताज॑रितॄ॒णा
म् ॥ श॒तम्भ॑वास्यू॒तिभिः॑ ॥६॥ कया॒त्त्वम् ॥ कया॒त्त्वन्न॑ऽऊ॒त्या

१ अभीषुण. । अत्र अभिसुन इति पदम् । अत्र "अभेश्च" ( शु. य प्रा ३ अ. ६२ सू ) इत्यनेन अभेरुपसर्गात्परस्य सुशब्दस्य षत्वे रूपम् ।

भिष्प्रमन्दसेवृषन् ॥ कयास्त्तोतृब्भ्यऽआभंर ॥ ७ ॥ इन्द्रो
व्विश्वस्य राजति ॥ शन्नोऽअस्तुद्द्विपदेशञ्चतुष्प्पदे ॥ ८ ॥
शन्नः ॥ शन्नोमित्रःशंव्वरुणःशन्नोभवत्त्वर्य्यमा ॥ शन्नऽइ
न्द्रोबृहस्प्पतिःशन्नोव्विष्णुरुरुक्क्रमः ॥ ९ ॥ शन्नोव्वातः ।
पवताꣳशन्नस्त्तपतुसूर्य्यः ॥ शन्नःकनिक्क्रदद्देवःपर्ज्जन्न्योऽ
अभिवर्षतु ॥ १० ॥ अहानिशम् ॥ अहानिशम्भवन्तुनःश
ꣳरात्रीःप्प्रतिधीयताम् ॥ शन्नऽइन्द्राग्ग्नीभवतामवोभिःश

म्ऽइन्द्रावरुणारातहव्या ॥ शन्नऽइन्द्रापूषणावाजंसातौशमि
न्द्रासोमासुवितायशँय्योः ॥ ११ ॥ शन्नः ॥ शन्नोदेवीरभि
ष्टयऽआपोभवन्तुपीतये ॥ शँय्योरभिस्रवन्तुनः ॥ १२ ॥
स्योनापृथिवि । नोभवानृक्षरानिवेशनी ॥ यच्छान[1]ःशर्म्मस
प्प्रथाः ॥ १३ ॥ आपोहि । ष्ठामयोभुवस्तानऽऊर्ज्जेदधात
न ॥ महेरणायचक्षसे ॥ १४ ॥ योवः । शिवतमोरसस्तस्य

१ अत्र यच्छ न इति पदम्। यच्छ इत्यस्य ह्रस्वाकारस्य न इत्यस्य नकारे परे "धारयामयोजावसचस्वनुदमोपुजयतोरुष्यरक्षयजयच्छमत्स्वथपिपृत-गायतातुर्येन नकारे ( शु य प्रा ३ अ १०८ सू ) इत्यनेन दीर्घाकारे कृते यच्छान ।

भाजयतेहनः ॥ उशतीरिवमातरः ॥ १५ ॥ तस्म्माऽअरम्
तस्म्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयं
थाचनः ॥ १६ ॥ [१६-१] द्यौःशान्तिः ॥ द्यौःशान्तिरन्त
रिक्षꣳशान्तिःपृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः ॥
वनस्प्पतयःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशान्तिःसर्वꣳशा
न्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि ॥ १७ ॥ दृतेदृꣳह
मा । मित्रस्यमाचक्क्षुषासर्वाणिभूतानिसमीक्षन्ताम् ॥ मित्र

स्याहञ्चक्षुंषासर्वाणिभूतानिसमीक्षे ॥ मित्रस्यचक्षुंषासमी
क्षामहे ॥ १८ ॥ दृतेदृꣳहमा । ज्योक्तेसन्दृशिजीव्यास
ञ्ज्योक्तेसन्दृशिजीव्यासम् ॥ १९ ॥ नमस्ते ॥ नमस्तेहर
सेशोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तु
हेतयःपावकोऽअस्मभ्यꣳशिवोभव ॥ २० ॥ नमस्ते ।
ऽअस्तुविद्युतेनमस्तेस्तनयित्नवे ॥ नमस्तेभगवन्नस्तुयतः
स्वःसमीहसे ॥ २१ ॥ यतोयतःसमीहसेततोनोऽअभयङ्कुरु ॥

शन्नः॑ कुरु प्र॒जाभ्यो॒ऽभ॑यन्नः प॒शुभ्यः॑ ॥२२॥ सु॒मि॒त्रि॒या न॒ऽआप॒ऽओष॑धयः सन्तु दु॒र्मि॒त्रि॒यास्तस्मै॑ सन्तु॒ योऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मः ॥२३॥ तच्चक्षुः॑ ॥ तच्चक्षु॑र्दे॒वहि॑तम्पु॒रस्ता॑च्छु॒क्रमु॒च्चर॑त् ॥ पश्ये॑म श॒रदः॑ श॒तं जीवे॑म श॒रदः॑ श॒तꣳ शृणु॑याम श॒रदः॑ श॒तम्प्र ब्र॑वाम श॒रदः॑ श॒तमदी॑नाः स्याम श॒रदः॑ श॒तम्भूय॑श्च श॒रदः॑ श॒तात् ॥ २४ ॥ [८-२]

इति श्रीवाजसनेयसंहितायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥

श्रीवेदपुरुषाय नमः ॥ अनुवाकसूत्रम् ॥ देवस्यत्त्वा दश, यमाय त्त्वैकादश, द्वा,वेकविꣳशतिः [ अ. ३७ म. २१ अनु. २ ] ॥

हरिःॐ॥ देवस्यत्त्वा । सवितुः प्प्रसवेऽश्विनोर्बाहुब्भ्याम्पूष्णो हस्ताब्भ्याम् ॥ आददेनारिरसि ॥ १ ॥ युञ्जतेमनः ॥ युञ्जतेमनऽउतयुञ्जतेधियोव्विप्प्राव्विप्प्रस्यबृहतोव्विपश्चितः ॥ विहोत्राँदधेव्वयुनाविदेकऽइन्न्महीदेवस्यसवितुः परिष्टुतिः ॥ २ ॥ देवीद्यावापृथिवी । मखस्यवामद्यशिरोराद्ध्यासन्देवयजनेपृथि

ध्याः ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे ॥ ३ ॥ देव्योर्व्व
ध्वर्य्यं ॥ देव्योर्व्वध्वर्य्योभूतस्थंप्प्रथमजामुखस्यंवोद्यशिरोराध्या
सन्देवयजनेपृथिव्याः ॥ मुखायंत्त्वामुखस्यंत्त्वाशीर्ष्णे ॥४॥
शतम् ॥ १९०० ॥ इयत्त्यग्ग्रे ॥ इयत्त्यग्ग्रेऽआसीन्मुखस्यं
तेद्यशिरोराध्यासन्देवयजनेपृथिव्याः ॥ मुखायंत्त्वामुखस्यं
त्त्वाशीर्ष्णे ॥ ५ ॥ इन्द्रस्यौजं÷ ॥ इन्द्रस्यौजस्त्थमुखस्यंवो
द्यशिरोराध्यासन्देवयजनेपृथिव्याः ॥ मुखायंत्त्वामुखस्यंत्त्वा

शीर्ष्णे ॥ मखायंत्त्वामखस्यंत्त्वाशीर्ष्णे ॥ मखायंत्त्वामखस्यं
त्त्वाशीर्ष्णे ॥ ६ ॥ प्रैतु ॥ प्रैतुब्रह्मणस्पतिःप्रदेव्येतुसूनृता ॥
अच्छावीरन्नर्य्यम्पङ्क्तिराधसन्देवायज्ञन्नयन्तुनः ॥ मखायं
त्त्वामखस्यंत्त्वाशीर्ष्णे ॥ मखायंत्त्वामखस्यंत्त्वाशीर्ष्णे ॥ मखा
यंत्त्वामखस्यंत्त्वाशीर्ष्णे ॥ ७ ॥ मखस्यशिरः ॥ मखस्यशिरो
सि ॥ मखायंत्त्वामखस्यंत्त्वाशीर्ष्णे ॥ मखस्यशिरोसि ॥ मखा
यंत्त्वामखस्यंत्त्वाशीर्ष्णे ॥ मखस्यशिरोसि ॥ मखायंत्त्वा

मखस्यंत्त्वाशीष्र्णें ॥ मखायंत्त्वामखस्यंत्त्वाशीष्र्णें ॥ मखा
यंत्त्वामखस्यंत्त्वाशीष्र्णें ॥ मखायंत्त्वामखस्यंत्त्वाशीष्र्णें
॥ ८ ॥ अश्वंस्यत्त्वा ॥ अश्वंस्यत्त्वावृष्ण्णंः शक्क्नाधूंपयामि
देवयजंनेपृथिव्याः ॥ मखायंत्त्वामखस्यंत्त्वाशीष्र्णें ॥ अश्वं
स्यत्त्वावृष्ण्णंः शक्क्नाधूंपयामिदेवयजंनेपृथिव्याः ॥ मखायं
त्त्वामखस्यंत्त्वाशीष्र्णें ॥ अश्वंस्यत्त्वावृष्ण्णंः शक्क्नाधूंपयामि
देवयजंनेपृथिव्याः ॥ मखायंत्त्वामखस्यंत्त्वाशीष्र्णें ॥ मखायं

त्वामुखस्यंत्त्वाशीष्ष्णों ॥ मखायंत्त्वामुखस्यंत्त्वाशीष्ष्णों ॥
मखायंत्त्वामुखस्यंत्त्वाशीष्ष्णों ॥ ९ ॥ ऋजवेंत्त्वा । साधवें
त्त्वासुक्षित्यैत्त्वा ॥ मखायंत्त्वामुखस्यंत्त्वाशीष्ष्णों ॥ मखायं
त्त्वामुखस्यंत्त्वाशीष्ष्णों ॥ मखायंत्त्वामुखस्यंत्त्वाशीष्ष्णों
॥ १० ॥ [ १०-१ ] सुमायंत्त्वा । मखायंत्त्वासूर्यस्यत्त्वा
तपसे ॥ देवस्त्वांसविताम्मध्वांनक्तुपृथिव्याः सꣳस्पृशस्पाहि

१ सꣳस्पृशस्पाहि । अत्र "अध्वनो रजसो सिप स्पृशंस्पातौ" (शु य प्रा ३ अ २८ सू ) इत्यस्मिन् पातावितिधातुग्रहणात् पाहि इति प्राध त्रो- र्लोट्रि मध्यमपुरुषस्यैकवचनस्य रूपे परे स्पृश विसर्गस्य से ।

हि ॥ अर्च्चिरसिशोचिरसितपोसि ॥ ११ ॥ अनाधृष्टापुरस्ता
त् ॥ अनाधृष्टापुरस्तादग्नेराधिपत्युऽआयुर्म्मेदाः पुत्रवतीद
क्षिणतऽइन्द्रस्याधिपत्येप्रजाम्मेदाः ॥ सुषदापश्चाद्देवस्य
सवितुराधिपत्येचक्षुर्म्मेदाऽआश्रुतिरुत्तरतोधातुराधिपत्ये
रायस्पोषम्मेदाः ॥ विधृतिरुपरिष्टाद्बृहस्पतेराधिपत्युऽओ
जोमेदाविश्वाभ्योमानाष्ट्राभ्यस्पाहिमनोरश्वासि ॥ १२ ॥
स्वाहामरुद्भिः ॥ स्वाहामरुद्भिःपरिश्रीयस्वदिवःसंस्पृशं

स्प्याहि ॥ मधुमधुमधुं ॥ १३ ॥ गब्भौदेवानाम् ॥ गब्भौ
देवानाम्पितामतीनाम्पतिः प्रजानाम् ॥ सन्देवोदेवेनसवि
त्रागंतसᳬसूर्य्यैणरोचते ॥ १४ ॥ समग्निः ॥ समग्निरग्नि
नागंतसन्दैवेनसवित्रासᳬसूर्य्यैणारोचिष्ट ॥ स्वाहासमग्नि
स्तपसागतसन्दैव्येनसवित्रासᳬसूर्य्यैणारूरुचत ॥ १५ ॥
धर्त्तादिवः ॥ धर्त्तादिवोविभातितपसस्पृथिव्यान्धर्त्तादिवो

१ तपस पृथिव्याम् इति पदम्। तपस. इत्यस्य विसर्गस्य "तपसस्पृथिव्याम्" (शु य. प्रा ३ अ २७ सू ) इत्यनेन सत्वे सिद्ध्यति।

देवानाममर्स्त्यस्तपोजाः ॥ वाचंमस्मेनियच्छदेवायुवम्
॥ १६ ॥ अपश्यङ्गोपाम् ॥ अपश्यङ्गोपामनिपद्यमानमा
चपरांचपथिभिश्चरन्तम् ॥ ससध्रीचीःसविषूचीर्वसानऽआव
रीवर्त्तिभुवनेष्वन्तः ॥ १७ ॥ विश्वासाम्भुवाम् ॥ विश्वा
साम्भुवाम्पतेविश्वस्यमनसस्पतेविश्वस्यवचसस्पतेसर्वस्यव
चसस्पते ॥ देवश्रुत्त्वन्देवघर्म्मदेवोदेवान्पाह्यत्रप्रावीरनुवां
न्देववीतये ॥ मधुमाध्वीभ्याम्मधुमाधूचीभ्याम् ॥ १८ ॥

हृदे त्वा ॥ हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ॥ ऊर्ध्वोऽ
अध्वरं दिवि देवेषु धेहि ॥ १९ ॥ पिता नः ॥ पिता नोऽसि पि
ता नो बोधि नमस्तेऽअस्तु मा मा हिꣳसीः ॥ त्वष्टृमन्तस्त्वा
सपेम पुत्रान्पशून्मयि धेहि प्रजामस्मासु धेह्यरिष्टाहꣳ सहप
त्या भूयासम् ॥ २० ॥ अहः केतुना । जुषताꣳ सुज्योति
र्ज्योतिषा स्वाहा ॥ रात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा
स्वाहा ॥ २१ ॥ [ ११-२ ] इति श्रीवाजसनेयसंहितायां

सप्तत्रिंशोऽध्यायः ॥ ३७॥ श्रीवेदपुरुषाय नमः ॥ अनुवा-
कसूत्रम् ॥ देवस्यत्वाष्टौ, यमायत्वा क्षत्रस्यत्वा दशकौ,
त्रयोऽष्टाविꣳशतिः [ अ. ३८ मं. २८ अनु. ३ ] ॥ हरिः ॐ ॥
देवस्यंत्वा ॥ देवस्यंत्वासवितुः प्प्रंसवेऽश्श्विनोर्ब्बाहुब्भ्यांम्पूष्णो
हस्ताब्भ्याम् ॥ आददेदित्त्यैरास्नाऽसि ॥ १ ॥ इडऽ
एहि ॥ इडऽएह्यदितऽएहिसरंस्वत्त्येहि ॥ असावेह्यसावेह्य
सावेहि ॥ २ ॥ अदित्त्यैरास्ना । सीन्द्राण्याऽउष्णीषः ॥

पूषासिघर्म्मायदीष्व ॥ ३ ॥ अश्विभ्याम्पिन्वस्व ॥ अश्वि
भ्याम्पिन्वस्वसरस्वत्यैपिन्वस्वेन्द्रायपिन्वस्व ॥ स्वाहेन्द्रव
त्स्वाहेन्द्रवत्स्वाहेन्द्रवत् ॥ ४ ॥ यस्ते ॥ यस्तेस्तनःशश
योयोमयोभूर्य्योरत्नधावसुविद्यःसुदत्रः ॥ येनविश्वापुष्य
सिवार्य्याणिसरस्वतितमिहधातवेकः ॥ उर्वन्तरिक्षमन्वेमि
॥ ५ ॥ गायत्रञ्छन्दः ॥ गायत्रञ्छन्दोसित्रैष्टुभञ्छन्दोसि
द्यावापृथिवीभ्यान्त्वापरिगृह्णाम्यन्तरिक्षेणोपयच्छामि ।

इन्द्राश्विनामधुनःसारघस्यंघर्म्मम्पांतवसंवोयजंतवाट् ॥ स्वा
हासूर्यस्यरश्मयेवृष्टिवनंये ॥ ६ ॥ समुद्रायंत्त्वा ॥ समु
द्रायंत्त्वावातांयस्वाहासरिरायंत्त्वावातांयस्वाहा ॥ अनाधृ
ष्यायंत्त्वावातांयस्वाहाप्प्रतिधृष्यायंत्त्वावातांयस्वाहा ॥ अ
वस्यवेत्त्वावातांयस्वाहाशिमिदायंत्त्वावातांयस्वाहा ॥ ७ ॥
इन्द्रांयत्त्वा ॥ इन्द्रांयत्त्वावसुंमतेरुद्रवंतेस्वाहेन्द्रांयत्त्वादि
त्यवंतेस्वाहेन्द्रांयत्त्वाभिमातिघ्नेस्वाहा ॥ सवित्रेत्वंऽऋभुम

तेविभुमतेवाजंवतेस्वाहाबृहस्पतंयेत्वाविश्वदेंव्यावतेस्वाहा
॥ ८ ॥ [ ८-१ ] सुमायंत्त्वा ॥ सुमायुत्त्वाङ्गिरस्वतेपितृम
तेस्वाहा ॥ स्वाहांघर्म्मायस्वाहांघर्म्मःपित्रे ॥ ९ ॥ विश्वाऽ
आशाः ॥ विश्वाऽआशांदक्षिणसद्भिश्वान्देवानयाडिह ॥
स्वाहांकृतस्यघर्म्मस्यमधोःपिबतमश्विना ॥ १० ॥ दिविधाः ॥
दिविधांऽइमँय्यज्ञमिमँय्यज्ञन्दिविधाः ॥ स्वाहाग्नयेय
ज्ञियांयशँय्यजुंर्भ्यः ॥ ११ ॥ अश्विनाघर्म्मम् ॥ अश्विनाघ

स्सम्पातह्वाद्धौनुमहर्हिवाभिर्ह्हुतिभिः ॥ तन्त्रायिणेनमोद्या
वापृथिवीभ्याम् ॥ १२ ॥ अपातामश्विना ॥ घर्म्मम्मनुद्या
वापृथिवीऽअमꣳसाताम् ॥ इहैवरातयः सन्तु ॥ १३ ॥ इषे
पिन्वस्व ॥ इषेपिन्वस्वोर्ज्जेपिन्वस्वब्रह्मणेपिन्वस्वक्षत्रायपिन्व
स्वद्यावापृथिवीभ्याम्पिन्वस्व ॥ धर्म्मासिसुधर्म्मामेन्न्यस्स्मेनृ
म्णानिधारयब्रह्मधारयक्षत्रन्धारयव्विशन्धारय ॥ १४ ॥
स्वाहापूष्णे । शरसेस्वाहाग्रावभ्यस्स्वाहाप्प्रतिरवेभ्यः ॥

स्वाहापितृभ्यंऽऊर्द्ध्वबर्हिर्भ्योघर्म्मपावभ्यःस्वाहाद्यावापृथि
वीभ्याꣳस्वाहाविश्वेभ्योदेवेभ्यः ॥ १५ ॥ स्वाहारुद्राय ।
रुद्रहूतयेस्वाहासञ्ज्योतिषाज्ज्योतिः ॥ अहःकेतुनाजुषता
ꣳसुज्ज्योतिर्ज्ज्योतिषास्वाहा ॥ रात्रिःकेतुनाजुषताꣳसुज्ज्यो
तिर्ज्ज्योतिषास्वाहा ॥ मधुहुतमिन्द्रतमेऽअग्नावश्यामतेदेव
घर्म्मनमस्तेऽअस्तुमामाहिꣳसीः ॥ १६ ॥ अभीमम् ॥
अभीमम्महिमादिवंविप्रोबभूवसप्रथाः ॥ उतश्रवसापृथि

वीॐसद्द॑सीद॒स्वम॒हाँ२॥ऽअ॑सि॒रोच॑स्वदेव॒वीत॑मः । विधूम
मं॑ग्नेऽअरु॒षम्मि॑येद्ध्यसृ॒जप्प्र॑शस्त॒दर्शतम् ॥ १७ ॥ यातै
घर्म्मद्दि॒व्याशुग्ग्यागाय॒त्र्याॐहंविर्द्धानै॑ । सात॒ऽआप्प्या॑यता
न्निष्ट्या॑यता॒न्तस्यैते॒स्वाहा॑ ॥ यातैघर्म्मा॒न्तरि॑क्षे॒शुग्ग्यात्रिष्टु
ब्भ्याग्नीद्ध्रे ॥ सात॒ऽआप्प्या॑यता॒न्निष्ट्या॑यता॒न्तस्यैते॒स्वाहा॑ ॥
यातैघर्म्मपृ॒थि॒व्याॐशुग्ग्याजग॑त्याॐसद॒स्या ॥ सात॒ऽआ
प्प्या॑यता॒न्निष्ट्या॑यता॒न्तस्यैते॒स्वाहा॑ ॥ १८ ॥ [ १०-२ ]

क्षत्रस्यंत्त्वा । परस्प्पायब्ब्रह्मणस्त्तन्न्वम्पाहि ॥ व्विशंस्त्त्वाधर्म्म
णाव्वयमनुक्क्रामामसुवितायनव्व्यसे ॥ १९॥ चतुःस्स्रक्तिर्न्ना
भिः ॥ चतुःस्स्रक्तिर्न्नाभिर्ऋतस्यसप्प्रथाःसनोव्विश्वायुःसप्प्र
थाःसनःसर्व्वायुःसप्प्रथाः ॥ अपद्वेषोऽअपह्वरोन्न्यव्व्रतस्यस
श्चिम ॥ २० ॥ घर्म्मैतत् ॥ घर्म्मैतत्तेपुरीषन्तेनव्वर्द्धस्वचाच
प्प्यायस्व ॥ व्वर्द्धिषीमहिचव्वयमाचप्प्यासिषीमहि ॥ २१ ॥
अचिक्क्रदद्वृषा ॥ अचिक्क्रदद्वृषाहरिर्म्महान्मित्त्रोनदर्शतः ॥

सꣳसूर्य्येणाद्दिद्युतद्दुधिर्न्निधिः ॥ २२ ॥ सुमित्रियानः ॥
सुमित्रियानऽआपऽओषधयःसन्तुदुर्म्मित्रियास्तस्मैसन्तु
योस्मान्द्वेष्टियञ्चवयन्द्विष्मः ॥ २३ ॥ उद्वयम् ॥ उद्वयन्त
मसस्परिस्वःपश्यन्तऽउत्तरम् ॥ देवन्देवत्रासूर्य्यमगन्म
ज्योतिरुत्तमम् ॥ २४ ॥ एधोसि ॥ एधोस्येधिषीमहिसमि
दसितेजोसितेजोमयिधेहि ॥ २५ ॥ यावतीद्यावापृथिवी ।
यावच्चसप्तसिन्धवोवितस्थिरे ॥ तावन्तमिन्द्रतेग्ग्रहमूर्ज्जागृ

ण्णाम्म्यक्षितम्मयिंगृण्णाम्म्यक्षितम् ॥ २६ ॥ मयित्त्यत् ॥
मयित्त्यदिन्द्रियम्बृहन्मयिदक्षोमयिक्क्रतुः ॥ घर्म्मस्त्रिशु
ग्ग्विराजतिव्विराजाज्ज्योतिषासहब्ब्रह्मणातेजसासह॥२७॥ पय
सोरेतः ॥ पयसोरेतऽआभृतन्तस्यदोहमशीमह्युत्तरामुत्तराᳬं
समाम् ॥ त्विषः संवृक्क्रत्वेदक्षस्यतेसुषुम्म्णस्यतेसुषुम्म्णा
ग्ग्निहुतः ॥ इन्द्रपीतस्यप्प्रजापतिभक्षितस्यमधुमतऽउपहूतऽ
उपहूतस्यभक्षयामि ॥२८॥ [१०-३] ॥ इतिश्रीवाजसनेय-

संहितायामष्टत्रिंशोऽध्यायः ॥ ३८ ॥ श्रीवेदपुरुषाय नमः ॥

अनुवाकसूत्रम् ॥ स्वाहाप्राणेभ्यःषड्, ग्रश्च सप्त, द्वौ त्रयोदश ॥ [अ. ३९ मं. १३ अनु. २] हरिःॐ ॥ स्वाहाँप्प्राणेभ्यं÷ ॥ स्वाहाँप्प्राणेभ्यःसाधिपतिकेभ्यः ॥ पृथिव्यैस्वाहाग्नयेस्वाहान्तरिक्षायस्वाहाँवायवेस्वाहाँ ॥ दिवेस्वाहासूर्य्याय
स्वाहाँ ॥१॥ दिग्भ्यःस्वाहाँ । चन्द्रायस्वाहानक्षत्रेभ्यःस्वाहाद्भ्यःस्वाहावरुणायस्वाहाँ ॥ नाभ्यैस्वाहाँपूतायस्वाहाँ ॥२॥

वाचेस्वाहा। प्राणायस्वाहाप्राणायस्वाहा ॥ चक्षुषेस्वाहाच
क्षुषेस्वाहाश्श्रोत्रायस्वाहाश्श्रोत्रायस्वाहा ॥ ३ ॥ मनसःका
मम् ॥ मनसःकाममाकूतिंवाचःसत्यमशीय ॥ पशूनाꣳरूप
मन्नस्यरसोयशःश्रीःश्रयताम्मयिस्वाहा॥४॥ प्रजापतिःसम्भ्रि
यमाणः। सम्राड्सम्भृतोवैश्वदेवःसꣳसन्नोघर्म्मःप्रवृक्तस्ते
जऽउद्यतऽआश्विनःपयस्यानीयमानेपौष्णोविष्यन्दमाने
मारुतःक्लथन् ॥ मैत्रःशरसिसन्ताय्यमानेवायव्योह्रियमा

णऽआग्नेयोह्रियमाणोव्वातोधूतः ॥ ५ ॥ सविताप्प्रथमे । हन्नग्नि
र्द्वितीयेव्वायुस्तृतीयऽआदित्यश्चतुर्त्थेचन्द्रमाःपञ्चमऽऋतुः
षष्ठेमरुतःसप्तमेबृहस्पतिरष्टमे ॥ मित्रोनवमेव्वरुणोदशमऽ
इन्द्रऽएकादशेव्विश्वेदेवाद्वादशे ॥ ६ ॥ [६-१] उग्रश्च ।
भीमश्चध्वान्तश्चधुनिश्च ॥ सासह्वाँश्चाभियुग्वाचव्विक्षिपः
स्वाहा ॥ ७ ॥ अग्निꣳहृदयेन ॥ अग्निꣳहृदयेनाशनिꣳ
हृदयाग्ग्रेणपशुपतिङ्कृत्स्नहृदयेनभवँय्यक्ना ॥ शर्वम्मतस्न्ना

ब्भ्यामीशानम्मन्युनामहादेवमन्त[1]ꣳ पर्शव्येनोग्ग्रन्देवंव्वनिष्ठु
नांव्वसिष्ठहनुꣳ शिङ्गीनिकोश्श्याब्भ्याम् ॥ ८ ॥ उग्ग्रँल्लोहितेन ।
मित्रꣳ सौव्व्रत्त्येनरुद्द्रन्दौव्व्रत्त्येनेन्द्रम्प्प्रक्क्रीडेनमरुतोबलेनसा
द्ध्यान्प्रमुदा ॥ भवस्यकण्ठ्यꣳ रुद्द्रस्यान्त[1]ꣳ पार्श्व्यम्महादेवस्यय
कृच्छर्व्वस्यव्वनिष्ठुः पशुपतेःꣳ पुरीतत् ॥ ९ ॥ लोमब्भ्यꣳ स्वाहा ॥
लोमब्भ्यꣳ स्वाहालोमब्भ्यꣳ स्वाहात्त्वचेस्वाहात्त्वचेस्वाहालोहि

---

१ अन्तः पर्शव्येन। अत्र "समानपदे च" (शु य प्रा ३ अ ३० सू.) इत्यनेन सकारे प्राप्ते "वाजपतिर्वासऽएदिधिपुरन्त पर्शव्येनान्त पार्श्व्यमिति च" (शु य प्रा ३ अ ३८ सू) इत्यनेन निषिध्यते। अन्त पार्श्व्यम् इत्यत्र "परतु रेफहकाराभ्या" (शु य प्रा ४अ १०१सू ) इत्यनेन शकारस्य द्वित्वम्।

तायस्वाहालोहिंतायस्वाहामेदौभ्यःस्वाहामेदौभ्यःस्वाहा॥
माꣳसेभ्यःस्वाहामाꣳसेभ्यःस्वाहास्नावंभ्यःस्वाहास्नावं
भ्यःस्वाहास्त्थभ्यःस्वाहास्त्थभ्यःस्वाहामज्जभ्यःस्वाहा
मज्जभ्यःस्वाहा ॥ रेतंसेस्वाहापायवेस्वाहा ॥ १० ॥ आया
सायस्वाहा । प्प्रा[1]यासायस्वाहाꣳसँय्यासायस्वाहाव्वियासायस्वा
हौद्यासायस्वाहा ॥ शुचेस्वाहाशोचंतेस्वाहाशोचंमानायस्वा
हाशोकायस्वाहा ॥ ११ ॥ तपंसेस्वाहा ॥ तपंसेस्वाहातप्प्यं



१ प्रायासाय । प्र यास इति पदम् । अत्र प्रवणश्रृङ्गयासेपु ( शु. य. प्रा ३ अ १०५ सू ) इत्यनेन प्रशब्दात्यासशब्दे परे प्रशब्दाकारस्य दीर्घ. ।

तेस्वाहातप्प्यमानायस्वाहातप्प्तायस्वाहाघर्म्मायस्वाहा ॥
निष्क्कृत्यैस्वाहाप्प्रायश्चित्त्यैस्वाहाभेषजायस्वाहा ॥ १२ ॥
यमायस्वाहा ॥ यमायस्वाहान्तकायस्वाहामृत्त्यवेस्वाहा ॥
ब्रह्मणेस्वाहाब्रह्महत्त्यायैस्वाहाविश्वेब्भ्योदेवेब्भ्यःस्वाहाद्यावा
पृथिवीब्भ्याᳬंस्वाहा ॥ १३ ॥ [ ७-२ ] इतिश्रीवाजसनेय-
संहितायामेकोनचत्वारिंशत्तमोऽध्यायः ॥ ३९ ॥ श्रीवेद-
पुरुषाय नमः॥ अनुवाकसूत्रम् ॥ ईशावास्यमष्टा, वन्धन्तमो

नव, द्वौ सप्तदश ॥ [अ. ४० मं. १७ अनु. २] हरिः ॐ ॥
ईशावास्यम् ॥ ईशावास्यमिदᳬसर्वँय्यत्किञ्चजगत्याञ्जगत् ॥
तेनत्यक्तेनभुञ्जीथामागृधःकस्यस्विद्धनम् ॥ १ ॥ कुर्वन्नेव ॥
कुर्वन्नेवेहकर्म्माणिजिजीविषेच्छतᳬसमाः ॥ एवन्त्वयिना
न्यथेतोस्तिनकर्म्मलिप्यतेनरे ॥२॥ असुर्य्यानाम ॥ असुर्य्या
नामतेलोकाऽअन्धेनतमसावृताः ॥ ताँस्तेप्रेत्यापिगच्छन्ति
येकेचात्महनोजनाः ॥३॥ अनेजदेकम् ॥ अनेजदेकम्मनसो

जवीयोनैनंद्देवाऽआप्नुवन्पूर्व्वमर्शत् ॥ तद्धावतोन्यानत्त्येतितिष्ठत्तस्मिन्नपोमातरिश्वादधाति ॥ ४ ॥ तदेजति ॥ तदेजतितन्नैजतितद्दूरेतद्वन्तिके ॥ तदन्तरस्यसर्व्वस्यतदुसर्व्वस्यास्यबाह्यतः ॥ ५ ॥ यस्तु ॥ यस्तुसर्व्वाणिभूतान्यात्मन्नेवानुपश्यति ॥ सर्व्वभूतेषुचात्मानन्ततोनविचिकित्सति ॥ ६ ॥ यस्मिन्त्सर्व्वाणि । भूतान्यात्मैवाभूद्विजानतः ॥ तत्रकोमोहःकःशोकऽएकत्त्वमनुपश्यतः ॥ ७ ॥ सपर्य्य ॥ सपर्य्य

गाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्धमपापविद्धम् ॥ कवि
र्म्मनीषीपरिभूःस्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वती
भ्यःसमाभ्यः ॥ ८ ॥ [ ८-१ ] अन्धन्तमः ॥ अन्धन्त
मःप्रविशन्तियेसम्भूतिमुपासते ॥ ततोभूयऽइवतेतमोयऽ
उसम्भूत्याꣳरताः ॥ ९ ॥ अन्यदेव ॥ अन्यदेवाहुःसम्भ
वादन्यदाहुरसम्भवात् ॥ इतिशुश्रुमधीराणांयेनस्तद्विचच
क्षिरे ॥ १० ॥ सम्भूतिञ्च । विनाशञ्चयस्तद्वेदोभयꣳसह ॥

विनाशेनंमृत्युन्तीर्त्वासम्भूंत्यामृतंमश्नुते ॥ ११ ॥ अन्ध
न्तमं÷ ॥ अन्धन्तमुःप्रविंशन्तियेविंद्यामुपासंते ॥ ततोभू
यंऽइवतेतमोयऽउंविद्यायांᳬरताः ॥ १२ ॥ अन्यदेव ॥
अन्यदेवाहुर्विद्यायांऽअन्यदाहुरविंद्यायाः ॥ इतिंशुश्रुमधी
राणांयेनुस्तद्विंचचाक्षिरे ॥ १३ ॥ विद्याञ्च ॥ विद्याञ्चा
विंद्याञ्चयस्तद्वेदोभयंᳬसुह ॥ अविंद्ययामृत्युन्तीर्त्वावि
द्ययामृतंमश्नुते ॥ १४ ॥ वायुरनिंलम् ॥ वायुरनिंलमृ

तुमथेदम्भस्म्मान्तᳯशरीरम् ॥ ॐ ३ ॥ क्रतोस्म्मर ॥ क्लिबे
स्म्मर ॥ कृतᳯस्मर ॥ १५ ॥ अग्नेनय ॥ सुपथारायेऽअस्म्मा
न्विश्वानिदेवव्वयुनानिव्विद्वान् ॥ युयोद्ध्यस्म्मज्जुहुराणमेनो
भूयिष्ठान्तेनमऽउक्तिंव्विधेम ॥ १६ ॥ हिरण्मयेनपात्रेण ।
सत्त्यस्यापिहितम्मुखम् ॥ योसावादित्त्येपुरुषᳯसोसावहम् ॥
ॐ ३॥ खम्ब्रह्म॥१७॥ [९-२] [आदितो मन्त्रसंख्या १९७५]
इतिश्रीवाजसनेयसंहितायां चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥

श्रीवेदपुरुषार्पणमस्तु ॥ दशाध्याये समाख्याता अनुवाकास्तु संख्यया ॥ शतं दशानुवाकाश्च नवान्ये च मनीषिभिः ॥ १ ॥ सप्तषष्टिश्चितौ ज्ञेया सौत्रे द्वाविंशतिस्तथा ॥ अश्व एकोनपञ्चाशत्पञ्चत्रिंशत्खिले स्मृताः ॥२॥ शुक्रियेषु तु विज्ञेया एकादश मनीषिभिः॥एकीकृत्य समाख्यातं त्रिशतं ऽयधिकं मतम् ॥३॥

इति श्रीवाजसनेयसंहितायामनुवाकसूत्राध्यायः समाप्तः ॥

इयं श्रीशुक्लयजुर्वेदसंहिता जामनगरनिवासिनाऽऽचार्यावटङ्केन त्रिकमजीतनुजनुषाऽमृतलालशास्त्रिणा या० शिक्षा० का० प्रणीतयजुःप्रातिशाख्यानुसारेण च शके १८७२ चैत्रमासे शुक्लपक्षे प्रतिपदि रविवासरे वत्सरारम्भे संशोधिता "अमृतवर्षिण्या टिप्पण्या" च समलङ्कृता समाप्ता ॥

इति श्रीवाजसनेयसंहितोत्तराविंशतिः समाप्ता ।

# ॥ अथाष्टविकृतिप्रारंभः ॥

॥ अथाष्टौ विकृतीनां स्वरूपकथनम् ॥ कास्ताः ॥ जटा-
मालादण्डरेखारथध्वजाशिखाघनाः ॥ क्रममाश्रित्य निर्वृत्ता
विकारा अष्टविश्रुताः ॥ १ ॥ विश्रुताः ॥ जटा माला शिखा
रेखा ध्वजो दण्डो रथो घनः ॥ अष्टौ विकृतयः प्रोक्ताः क्रम-
पूर्वा महर्षिभिः ॥ २ ॥ द्विपदादिक्रमाः पञ्च प्रक्रमाद्व्युत्क्रमा
त्ततः ॥ पुनः क्रमादुद्यादिता जटात्वं प्रापिता बुधैः ॥ ३ ॥
वैदिकैः पठ्यमानत्वात्प्रत्यक्षस्मृतिमूलतः ॥ जटाद्यध्ययनं

कार्यं पङ्क्तिपावनकारणात् ॥ ४ ॥ जटादिविकृतीनां ये
पारायणपरा नराः ॥ महात्मानो द्विजाः श्रेष्ठाः ते ज्ञेयाः
पङ्क्तिपावनाः ॥ ५ ॥ इति वाराहपुराणे ॥ मार्कण्डेये च ॥
क्रमाध्ययनसम्पन्नो मन्त्रब्राह्मणपारगः ॥ जटापारायणपरो
विष्णुलोके महीयते ॥ ६ ॥ जटापाठपरं विप्रं यो गर्हयति
मूढधीः ॥ पुनरावृत्तिसहितं तमः प्राप्नोति नान्यथा ॥ ७ ॥
वृद्धमनुः ॥ वेदवेदार्थतत्त्वज्ञा जटाक्रमविशारदाः ॥ श्रोत्रिया

ब्राह्मणाः श्राद्धे ये नराः पङ्क्तिपावनाः ॥ ८ ॥ पराशरः ॥
संहितावित्स्वर्गगामी पदवेदी महर्गतिः ॥ क्रमी जनतपः
सत्यगामी वैकुण्ठभोग्जटी ॥ ९ ॥ यथा ॥ अथ जटा ॥
त्र्यम्बकँय्यजामहेयजामहेत्र्यम्बकन्त्र्यम्बकँय्यजामहे । त्र्य
म्बकमिति त्रिऽअम्बकम् । यजामहेसुगन्धिᳪसुगन्धिँय्यजा
महेयजामहेसुगन्धिम् । सुगन्धिम्पुष्टिवर्द्धनम्पुष्टिवर्द्धनᳪसुग
न्धिᳪसुगन्धिम्पुष्टिवर्द्धनम् । सुगन्धिमिति सुऽगन्धिम् । पुष्टि

वर्द्धनमिति पुष्टिऽवर्द्धनम् ॥ उर्वारुकमिवबन्धनादद्बन्धना
दुर्वारुकमिवोर्वारुकमिवबन्धनात् । उर्वारुकमिवेत्युर्वारुकम्
ऽइव । बन्धनान्मृत्योर्मृत्योर्बन्धनाद्बन्धनान्मृत्योः ।
मृत्योर्मुक्षीयमुक्षीयमृत्योर्मृत्योर्मुक्षीय । मुक्षीयमा
मामामुक्षीयमुक्षीयमा । मामृतादमृतान्मामामृतात् ।
अमृतादित्यमृतात् ॥ पतिवेदनमितऽइतःपतिवेदनम्पतिवे
दनमितः । पतिवेदनमितिपतिऽवेदनम् । इतोमुक्षीयमु

क्षीयेतऽइतोमुक्षीय । मुक्षीयमामामुक्षीयमुक्षीयमा ।
मामुतोमुतोमामामुतः । अमुतऽइत्यमुतः ॥१॥ (जटा ॥)
पुनस्त्वात्वापुनः पुनस्त्वा । पुनरितिपुनः । त्वादित्याऽ
आदित्यास्त्वात्वादित्याः । आदित्यारुद्रारुद्राऽआदि
त्याऽआदित्यारुद्राः ॥ रुद्रावसवोवसवोरुद्रारुद्रावसवः ।
वसवःसꣳसंवसवोवसवःसम् । समिन्धतामिन्धताꣳसꣳ
समिन्धताम् । इन्धताम्पुनःपुनरिन्धतामिन्धताम्पुनः ।

पुनर्ब्रह्माणोब्रह्माणम्पुनःपुनर्ब्रह्माणः । ब्रह्माणोव्वसुनीथव्व
सुनीथब्रह्माणोब्रह्माणोव्वसुनीथ । व्वसुनीथयज्ज्ञैर्यज्ज्ञैर्व्वसुनी
थव्वसुनीथयज्ज्ञैः । व्वसुनीथेतिवसुऽनीथ । यज्ज्ञैरितियज्ज्ञैः ॥
घृतेनत्वन्त्वङ्घृतेनघृतेनत्वम् । त्वन्तन्वन्तन्वन्त्वन्त्वन्तन्वम् ।
तन्वंव्वर्द्धयस्वव्वर्द्धयस्वतन्वन्तन्वंव्वर्द्धयस्व । व्वर्द्धयस्वसत्याः
सत्याव्वर्द्धयस्वव्वर्द्धयस्वसत्याः । सत्याःसन्तुसन्तुसत्याः
सत्याःसन्तु । सन्तुयजमानस्ययजमानस्यसन्तुसन्तुयजमा

नस्य । यजमानस्यकामाःकामायजमानस्ययजमानस्यका
माः । कामाऽइतिकामाः ॥ २ ॥ सनोनःससनः । नःपि
तेवपितेवनोनःपितेव । पितेवसूनवेसूनवेपितेवपितेवसूनवे ।
पितेवेतिपिताऽइव । सूनवेग्नेग्नेसूनवेसूनवेग्ने । अग्नेसूपायनः
सूपायनोग्नेग्नेसूपायनः । सूपायनोभवभवसूपायनःसूपाय
नोभव । सूपायनऽइतिसुऽउपायनः । भवेतिभव ॥ सचस्वा
नोनःसचस्वसचस्वानः । नःस्वस्तयेस्वस्तयेनोनःस्वस्तये ।

स्वस्तयऽइतिस्वस्तये ॥ ३ ॥ अथ क्रममाला निरूप्यन्ते ॥
ब्रूयात्क्रमविपर्यासानर्धर्चस्यादितोऽन्ततः । अन्तञ्चादि नये-
देवं क्रममालेति गीयते ॥ १ ॥ क्रमविपर्यासान् ॥ क्रमक्रम-
व्युत्क्रमाभ्यामर्धर्चस्यादितः अन्ततो व्युत्क्रमोपक्रममिति
विशेषः ॥ ब्रूयात् ॥ एवं क्रमविपर्यासाभ्यां क्रमं ब्रुवन् पुमान्
आदित आदित आरभ्य क्रमं समानं समाप्तिं नयेत् ॥
अन्तमन्तत आरब्धं क्रमं आदितः समाप्तिं नयेत् ॥ प्रापये-

दित्यर्थः ॥ यथा ॥ ॐ ॥ यज्ञेनंयज्ञम् । आसन्नित्यां
सन् । यज्ञमंयजन्त । आसन्प्रथमानि । अयजन्तदेवाः ।
प्रथमानिधर्म्माणि । देवास्तानि । धर्म्माणितानि । तानि
धर्म्माणि । तानिदेवाः । धर्म्माणिप्प्रथमानि । देवाऽअंय
जन्त । प्रथमान्यांसन् । अयजन्तयज्ञम् । आसन्नित्यांसन् ।
यज्ञँयज्ञेन ॥ तेह । देवाऽइतिदेवाः । हनाकम् । देवाः
सन्ति । नाकम्महिमानः । सन्तिसाद्ध्याः । महिमानः

सचन्त । साद्ध्याःपूर्वे । सचन्तयत्र । पूर्वेयत्र । यत्रपूर्वे ।
यत्रसचन्त । पूर्वेसाद्ध्याः । सचन्तमहिमानः । साद्ध्याः
सन्ति । महिमानोनाकम् । सन्तिदेवाः । नाकर्ठह । देवाऽ
इतिदेवाः । हते ॥ १ ॥ मालामालेवपुष्पाणां पदानां ग्रथिनी
हि सा ॥ आवर्त्तते त्रयस्तस्यां क्रमव्युत्क्रमसंक्रमाः ॥ १ ॥
यथा ॥ अथपुष्पमालाविकृतिः ॥ परीत्त्यंभूतानि । भूतानि
परीत्त्यं । परीत्त्यंभूतानि । परीत्त्येतिपरीऽइत्त्यं । भूतानि

परीत्त्यं । परीत्त्यंभूतानि । भूतानिपरीत्त्यं । परीत्त्यंलोकान् ।
लोकान्त्परीत्त्यं । परीत्त्यंलोकान् । परीत्त्येतिपरिऽइत्त्यं ।
लोकान्त्परीत्त्यं । परीत्त्यंलोकान् । लोकान्त्परीत्त्यं । परीत्त्य
सर्वाः । सर्वाःपरीत्त्यं । परीत्त्यसर्वाः । परीत्त्येतिपरिऽ
इत्त्यं । सर्वाःप्रदिशः । प्रदिशःसर्वाः । सर्वाःप्रदिशः ।
प्रदिशोदिशः । दिशःप्रदिशः । प्रदिशोदिशः । प्रदि
शऽइतिप्रदिशः । दिशश्च । चदिशःदिशश्च । चेतिच ॥

उपस्त्थायंप्प्रथमजाम् । प्रथमजामुपस्त्थाय । उपस्त्थाय
प्प्रथमजाम् । उपस्त्थायेत्त्युपऽस्थाय । प्रथमजामृतस्य ।
ऋतस्यंप्प्रथमजाम् । प्रथमजामृतस्य । प्रथमजामितिप्प्रथमऽ
जाम् । ऋतस्यात्त्मना । आत्त्मनऽऋतस्य । ऋतस्या
त्त्मना । आत्त्मनात्त्मानम् । आत्त्मानमात्त्मना ।
आत्त्मनात्त्मानम् । आत्त्मानमभि । अभ्यात्त्मानम् ।
आत्त्मानमभि । अभिसम् । समभि । अभिसम् । संवि

वेश । व्विवेशसम् । संव्विवेश । व्विवेशेतिव्विवेश ॥ १ ॥
परिद्यावापृथिवी । द्यावापृथिवीपरि । परिद्यावापृथिवी ।
द्यावापृथिवीसद्यः । सद्योद्यावापृथिवी । द्यावापृथिवीसद्यः ।
द्यावापृथिवीऽइतिद्यावापृथिवी । सद्यऽइत्त्वा । इत्त्वासद्यः ।
सद्यऽइत्त्वा । इत्त्वापरि । परीत्त्वा । इत्त्वापरि । परिलो
कान् । लोकान्परि । परिलोकान् । लोकान्परि । परिलो
कान् । लोकान्परि । परिदिशः । दिशःपरि । परिदिशः ।

दिशꣳपरि । परिदिशः । दिशꣳपरि । परिस्वः । स्वꣳपरि ।
परिस्वः । स्वरितिस्वः ॥ ऋतस्यतन्तुम् । तन्तुमृतस्य ।
ऋतस्यतन्तुम् । तन्तुंविततम् । विततन्तन्तुम् । तन्तुंविततम् ।
विततंविचृत्य । विचृत्यविततम् । विततंविचृत्य । वितत
मितिविऽततम् । विचृत्यतत् । तद्विचृत्य । विचृत्यतत् ।
विचृत्येतिविऽचृत्य । तदपश्यत् । अपश्यत्तत् । तदप
श्यत् । अपश्यत्तत् । तदपश्यत् । अपश्यत्तत् । तद

भवत् । अभवत्तत् । तदभवत् । अभवत्तत् । तदभवत् ।
अभवत्तत् । तदासीत् । आसीत्तत् । तदासीत् । आसीदि
त्यासीत् ॥ २ ॥ इति पुष्पमालाविकृतिः ॥

॥ अथ पञ्चसंधीविकृतिमन्त्रः ॥

ॐ वण्महान् । महान्महान् । महान्वट् । वट्वट् । वण्महान् ।
महाँ२ऽअसि । अस्यसि । असिमहान् । महान्महान् । महाँ२
ऽअसि । असिसूर्य । सूर्यसूर्य । सूर्यासि । अस्यसि । असि

सूर्य्य । सूर्य्यबट् । बट्बट् । बट्सूर्य्य । सूर्य्यसूर्य्य । सूर्य्यबट् ।
बडादित्य । आदित्यादित्य । आदित्यबट् । बट्बट् । बडा
दित्य । आदित्यमहान् । महान्महान् । महानादित्य ।
आदित्यादित्य । आदित्यमहान् । महाँ२ऽअसि । अस्यसि ।
असिमहान् । महान्महान् । महाँ२ऽअसि । असीत्यसि ॥
महस्ते । तेते । तेमहः । महोमहः । महस्ते । तेसतः ।
सतःसतः । सतस्ते । तेते । तेसतः । सतोमहिमा । महिमा

म॑हि॒मा । म॒हि॒मासत॑ः । सत॑ःसत॑ः । स॒तोम॑हि॒मा । म॒हि॒मापन॑स्यते । प॒न॒स्य॒तेप॒न॒स्य॒ते॒ । प॒न॒स्य॒तेम॒हि॒मा । म॒हि॒मा म॑हि॒मा । म॒हि॒मापन॑स्यते । प॒न॒स्य॒तेद्धा । अ॒द्धाद्धा । अ॒द्धा पन॑स्यते । प॒न॒स्य॒तेप॒न॒स्य॒ते॒ । प॒न॒स्य॒तेद्धा । अ॒द्धादे॑व । दे॒व॒ देव॒ । दे॒वा॒द्धा । अ॒द्धाद्धा । अ॒द्धादे॑व । दे॒वम॒हान् । म॒हान्म॒हान् । म॒हान्दे॑व । दे॒व॒दे॒व॒ । दे॒वम॒हान् । म॒हाँ २ऽअ॑सि । अ॒स्य॒सि । अ॒सिम॒हान् । म॒हान्म॒हान् । म॒हाँ २ऽअ॑सि ।

असीत्त्यंसि ॥ १ ॥ बट्सूर्य्य । सूर्य्यसूर्य्य । सूर्य्यबट् ।
बट्बट् । बट्सूर्य्य । सूर्य्यश्श्रवंसा । श्रवंसाश्श्रवंसा । श्रवंसा
सूर्य्य । सूर्य्यसूर्य्य । सूर्य्यश्श्रवंसा । श्रवंसामहान् । महान्त्सू
हान् । महान्छ्रवंसा । श्रवंसाश्श्रवंसा । श्रवंसामहान् । महाँ
२ऽअंसि । अस्यसि । असिमहान् । महान्महान् । महाँ२ऽ
अंसि । असिसत्रा । सत्रासत्रा । सत्रासि । अस्यसि । असि
सत्रा । सत्रादेव । देवदेव । देवसत्रा । सत्रासत्रा । सत्रादेव ।

देवमहान् । महान्महान् । महान्देव । देवदेव । देवमहान् ।
महाँ२ऽअसि । अस्यसि । असिमहान् । महान्महान् । महाँ
२ऽअसि । असीत्यसि ॥ मह्नादेवानाम् । देवानान्देवाना
म् । देवानाम्मह्ना । मह्नामह्ना । मह्नादेवानाम् । देवानां
मसुर्य्यः । असुर्य्योसुर्य्यः । असुर्य्योदेवानाम् । देवानान्दे
वानाम् । देवानामसुर्य्यः । असुर्य्यःपुरोहितः । पुरोहितः
पुरोहितः । पुरोहितोसुर्य्यः । असुर्य्योसुर्य्यः । असुर्य्यः

पुरोहितम् । पुरोहितो विभु । विभुर्विभु । विभु पुरोहितम् ।
पुरोहितम्पुरोहितम् । पुरोहितो विभु । पुरोहित इति पुरः
हितम् । विभुर्ज्योतिः । ज्योतिर्ज्योतिः । ज्योतिर्विभु ।
विभुर्विभु । विभुर्ज्योतिः । विभ्वितिविभू । ज्योतिरदा
भ्यम् । अदाभ्यमदाभ्यम् । अदाभ्यञ्ज्योतिः । ज्योति
र्ज्योतिः । ज्योतिरदाभ्यम् । अदाभ्यमित्यदाभ्यम् ॥ २ ॥
अथ शिखा ॥ पदोत्तरां शिखामेव जटायामः प्रचक्षते ॥

आर्याः पदोत्तरसंक्रमा जटां शिखां प्रवदन्ति ॥ यथा ॥
श्रीश्चंचश्रीःश्रीश्चंते। चतेतेचचतेलक्ष्मीः। तेलक्ष्मीर्लक्ष्मीस्ते
तेलक्ष्मीश्च। लक्ष्मीश्चंचलक्ष्मीर्लक्ष्मीश्चपत्न्यौ। चपत्न्यौप
त्न्यौचचपत्न्यांवहोरात्रे। पत्न्यांवहोरात्रेऽअहोरात्रेपत्न्यौ
पत्न्यांवहोरात्रेपार्श्वे। अहोरात्रेपार्श्वेपार्श्वेऽअहोरात्रेऽपार्श्वेन
क्षंत्राणि। अहोरात्रेऽइत्यहोरात्रे। पार्श्वेनक्षंत्राणिनक्ष
त्राणिपार्श्वेपार्श्वेनक्षंत्राणिरूपम्। पार्श्वेऽइतिपार्श्वे। नक्ष

त्राणिरूपꣳरूपन्नक्षत्राणिनक्षत्राणिरूपमश्विनौ । रूपम
श्विनावश्विनौरूपꣳरूपमश्विनौव्यात्तम् । अश्विनौव्यात्तं
व्यात्तमश्विनावश्विनौव्यात्तम् । व्यात्तमितिविऽआत्तम् ॥
इष्णन्निषाणेषाणेष्णन्निष्णन्निषाणामुम् । इषाणामुम्मु
मिषाणेषाणामुम्मे । अमुम्मेमेमुममुम्मेऽइषाण । मऽइषाणे
षाणमेमऽइषाणसर्व्वलोकम् । इषाणसर्व्वलोकꣳसर्व्वलोकमि
षाणेषाणसर्व्वलोकम्मे । सर्व्वलोकम्मेमेसर्व्वलोकꣳसर्व्वलोकम्मं

ऽइषाण । सर्व्वलोकमितिसर्व्वऽलोकम् । मइषाणेषाणमेमऽइ
षाण । इषाणेतीषाण ॥ १ ॥ धातारातीरातिर्धाताधातारा
तिःसविता । रातिःसवितासवितारातीरातिः सवितेदम् । स
वितेदमिदꣳसवितासवितेदञ्जुषन्ताम् । इदञ्जुषन्ताञ्जुषन्ता
मिदमिदञ्जुषन्ताम्प्रजापतिः । जुषन्ताम्प्रजापतिःप्रजापति
ञ्जुषन्ताञ्जुषन्ताम्प्रजापतिर्निधिपाः । प्रजापतिर्निधिपानिधि
पाःप्रजापतिःप्रजापतिर्न्निधिपादेवः । प्रजापतिरितिप्रजाऽ

पातिः । निधिपादेवोदेवोनिधिपादेवोऽअग्निः । निधिपाऽ
इतिनिधिऽपाः । देवोऽअग्निरग्निर्देवोदेवोऽअग्निः । अग्निरि
त्यग्निः ॥ त्वष्टाविष्णुर्विष्णुस्त्वष्टात्वष्टाविष्णुंप्रजयां ।
विष्णुंप्रजयांप्रजयाविष्णुर्विष्णुंप्रजयांसꣳरराणाः ।
प्रजयांसꣳरराणाःसꣳरराणाःप्रजयांप्रजयांसꣳरराणासजं
मानाय । प्रजयेतिप्रऽजयां । सꣳरराणायजमानाययजमा
नायसꣳरराणाःसꣳरराणायजमानायद्रविणम् । सꣳरराणा

ऽइतिसमुऽरराणाः। यजमानायद्द्रविणन्द्रविणॅयजमानायय
जमानायद्द्रविणन्दधात । द्रविणन्दधातदधातद्द्रविणन्द्रविण
न्दधातस्वाहा । दधातस्वाहास्वाहादधातदधातस्वाहा । स्वाहे
तिस्वाहा ॥ २ ॥ अथ रेखा ॥ क्रमाद्द्वित्रिचतुःपञ्चपदक्रममु
दाहरेत् । पृथक् पृथक् विपर्यस्य रेखामाहुः पुनः क्रमात्
॥ १ ॥ क्रमात् ॥ अनुःक्रमात ॥ द्वित्रीचतुःपञ्चपदः क्रमम्
प्रत्येकं प्रत्येकं विपर्यस्य क्रमादुदाहरेत् ॥ एवमुक्त्वा विकृ-

तिन्नाम रेखां प्रचक्षते ॥ महान्त आहुरित्यर्थः ॥ यथा ॥
ॐ बृहस्पते परि । परि बृहस्पते । बृहस्पते परि । परि दीया
रथेन । रथेन दीय परि । परि दीय । दीया रथेन । रथेन रक्षोहा
मित्राँ२ऽअपबाधमानः । अपबाधमानो मित्रान्रक्षोहा रथेन ।
रथेन रक्षोहा । रक्षोहामित्रान् । रक्षोहेति रक्षःऽहा ।
अमित्राँ२ऽअपबाधमानः । अपबाधमानऽइत्यपऽबाधमा
नः ॥ प्रभञ्जन्त्सेनाःप्प्रमृणो युधाजयन् । जयन्युधाप्प्रमृणः

सेनाः᳡प्रभञ्जन् । प्रभञ्जन्निति॑प्रऽभञ्जन् । सेनाः᳡प्रमृणः । प्रमृणो॒युधा । प्रमृणऽइति॑प्रऽमृणः । युधाजय॑न् । जय॑न्न॒स्माक॑मेद्ध्यवि॒तारथा॑नाम् । रथा॑नामवि॒तैद्ध्य॒स्माक॒ञ्ज॒यं॑न् । जय॑न्न॒स्माक॑म् । अ॒स्माक॑मेधि । एद्ध्यवि॒ता । अ॒वि॒ता रथा॑नाम् । रथा॑ना॒मिति॒रथा॑नाम् ॥ १ ॥ इति रेखाविकृतिः ॥

अथ ध्वजः ॥ भूयादादेः क्रमं सम्यगन्तादुच्चारयेदिति । वर्गे वा ऋचि वा यत्र पठनं स ध्वजः स्मृतः ॥ वर्गे वा ऋचि

वास्यादिः ॥ आदित आरभ्य सम्यक् क्रमं ब्रूयात् ॥ अन्ता-
द्यं क्रममारभ्य सम्यगुत्तारयेत् ॥ एकमेकं पूर्वं पूर्वं पदं
अन्तोपान्त्यादिक्रमपूर्वे अनुक्रमेणावार्षयेदित्यर्थः ॥ इति
ये सादितं स्यात् ॥ स ध्वज इत्यर्थः ॥ यथा ॥ ॐ बृहं
स्पतेपरिं । रथांनामितिरथांनाम् । परिंदीय । अवितारथां
नाम् । दीयपरिं । एदृध्यविता । रथेनरक्षोहा । अस्माकं
मेधि । रक्षोहामित्रांन् । जयंन्नस्माकंम् । रक्षोहेतिरक्षः

ऽहा। सुधाजयंन्। अमित्रॉं२ऽअपबाधंमानः। प्रमृणोसुधा।
प्रभुञ्जन्त्सेनांः। सेनांम्प्रमृणः। प्रभुञ्जन्नितिंप्रऽभुञ्जन्।
सेनांम्प्रमृणः। प्रभुञ्जन्त्सेनांम्प्रमृणोसुधा। अपबाधंमान्
ऽइत्यंपऽबाधंमानः। प्रमृणऽइतिंप्रऽमृणः। अमित्रॉं२ऽ
अपबाधंमानः। सुधाजयंन्। रक्षोहेतीरक्षःऽहा।
जयंन्नस्माकंम्। रक्षोहामित्रान्। अस्माकंमेधि।
रथेनरक्षोहा। एद्ध्यविता। दीयारथेन। अवितारथां

नाम् । परिदीय । रथानामितिरथानाम् । बृहस्पते परि ॥ १ ॥ इति ध्वजाविकृतिः ॥ अथ दंडः ॥ क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तरम् ॥ अर्धर्चादेवमुक्त्वोक्तः क्रमदण्डोऽभिधीयते ॥ १ ॥ पुनश्च पुनरपि आदित आरभ्य क्रममुच्चरेत् ॥ एवं पूर्वार्धर्चक्रमसम्बन्धत्वेनोत्तरार्द्धर्चं क्रममुक्त्वा ॥ पूर्वार्धं चादिपदपर्यन्तं विपर्यासेन संहितामुक्त्वा ॥ पुनस्ततआरभ्योत्तरार्धर्चस्थपर्यन्तं किंकसोवाश्च एवेत्यन्तो

नेत्याह ॥ अर्धर्चादिति अर्धर्चपरिसमाप्तिपर्यन्तं एवायं नि-
यमः ॥ तस्योक्ता उच्चारेण दण्डो नाम विकृतिविशेषोऽभिधी-
यते ॥ यथा ॥ ॐताऽउभौ । उभौतौ । ताऽउभौ । उभौचतुरं÷ ।
चतुरंऽउभौतौ । ताऽउभौ । उभौचतुरं÷ । चतुरं÷पदः ।
पदश्चतुरंऽउभौतौ । ताऽउभौ । उभौचतुरं÷ । चतुरं÷पदः ।
पदःसम्प्रसारयाव । सम्प्रसारयावपदश्चतुरंऽउभौतौ । ताऽ
उभौ । उभौचतुरं÷ । चतुरं÷पदः । पदःसम्प्रसारयाव ।

सुम्प्रसार्यावस्वुर्गौ । स्वुर्गौसुम्प्रसार्यावपुदश्चुतुरऽउभौतौ ।
ताऽउुभौ । उुभौचुतुरं÷ । चुतुरं÷पुद॒ः । पुद॒ःसुम्प्रसार्याव ।
सुम्प्रसार्यावस्वुर्गौ । सुम्प्रसार्यावेतिसुम्ऽप्रसार्याव । स्वुर्गौ
लोके । लोकेस्वुर्गौसुम्प्रसार्यावपुदश्चुतुरऽउभौतौ । ताऽउुभौ ।
उुभौचुतुरं÷ । चुतुरं÷पुद॒ः । पुदःसुम्प्रसार्याव । सुम्प्रसार
यावस्वुर्गौ । सुम्प्रसार्यावेतिसुम्ऽप्रसार्याव । स्वुर्गौलोके ।
स्वुर्गौऽइतिस्वुःऽगे । लोकेप्र । प्रलोकेस्वुर्गौसुम्प्रसार्यावपुद

श्चतुरंऽउभौतौ । ताउभौ । उभौचतुरं÷ । चतुरं÷पुदः ।
पुदःसुम्प्रसारयाव । सुम्प्रसारयावस्वुर्ग्गे । सुम्प्रसारयावेतिस
मूऽप्रसारयाव । स्वुर्ग्गेलोके । स्वुर्ग्गऽइतिस्वुःऽगे । लोकेप्प्र ।
प्रोर्ण्णुवाथाम् । ऊर्ण्णुवाथाम्प्रलोकेस्वुर्ग्गेसुम्प्रसारयावपुदश्च
तुरंऽउभौतौ । ताऽउभौ । उभौचतुरं÷ । चतुरं÷पुदः । पुदः
सुम्प्रसारयाव । सुम्प्रसारयावस्वुर्ग्गे । सुम्प्रसारयावेतिसम्ऽ
प्रसारयाव । स्वुर्ग्गेलोके । स्वुर्ग्गऽइतिस्वुःऽगे । लोकेप्प्र ।

प्रोर्ण्णुवाथाम् । ऊर्ण्णुवाथांवृषा । वृषोर्ण्णुवाथाम्प्रलोकेस्वर्ग्गे
सम्प्रसांरयावपदश्चतुरंऽउभौतौ । ताऽउभौ । उभौचतुरं÷ ।
चतुरं÷पद॒ । पदश्सम्प्रसांरयाव । सम्प्रसांरयावस्वर्ग्गे ।
सम्प्रसांरयावेतिसम्ऽप्रसांरयाव । स्वर्ग्गेलोके । स्वर्ग्गऽ
इतिस्वः॓ऽगे । लोकेप्प्र । प्रोर्ण्णुवाथाम् । ऊर्ण्णुवाथांवृषा ।
वृषांव्वाजी । वाजीवृषोर्ण्णुवाथाम्प्रलोकेस्वर्ग्गेसम्प्रसांरयाव
पदश्चतुरंऽउभौतौ । ताऽउभौ । उभौचतुरं÷ । चतुरं÷पद॒ ।

पुदः॒सुम्प्रसा॑रयाव । सुम्प्रसा॑रयावस्वु॒र्ग्गे । सुम्प्रसा॑रयावे॒तिस॒म्ऽ
प्रसा॑रयाव । स्वु॒र्ग्गेलो॒के । स्वु॒र्ग्गऽइति॑स्वुःऽगे । लो॒केप्प्र ।
प्रोर्ण्णुवाथाम् । ऊर्ण्णु॒वा॒थां॒वृषा॑ । वृषा॑व्वा॒जी । व्वा॒जीरे॑तो॒
धाः॒ । रे॒तो॒धाव्वा॒जीवृषो॑र्ण्णुवा॒था॒म्प्रलो॒केस्वु॒र्ग्गेस॒म्प्रसा॑रयावपु॒
दश्च्व॒तुरं॑ऽउ॒भौतौ । ताऽउ॒भौ । उ॒भौचतु॒रं॑÷ । च॒तु॒रं॑÷पु॒दः॒ ।
पुदः॒सुम्प्रसा॑रयाव । सुम्प्रसा॑रयावस्वु॒र्ग्गे । सुम्प्रसा॑रया॒वे॒तिस॒
म्ऽप्रसा॑रयाव । स्वु॒र्ग्गेलो॒के । स्वु॒र्ग्गऽइति॑स्वुःऽगे । लो॒केप्प्र ।

प्रोर्ण्णुवाथाम् । ऊर्ण्णुवाथांवृषा । वृषांवाजी । वाजीरेतोधाः ।
रेतोधारेतः । रेतोरेतोधावाजीवृषोर्ण्णुवाथाम्प्रलोकेस्वर्गेसम्प्र
सारयावपदश्चतुरऽउभौतौ । ताऽउभौ । उभौचतुरः ।
चतुरःपदः । पदःसम्प्रसारयाव । सम्प्रसारयावस्वर्गे ।
सम्प्रसारयावेतिसम्ऽप्रसारयाव । स्वर्गेलोके । स्वर्गऽइति
स्वःऽगे । लोकेप्र । प्रोर्ण्णुवाथाम् । ऊर्ण्णुवाथांवृषा । वृषा
वाजी । वाजीरेतोधाः । रेतोधारेतः । रेतोधाऽइतिरेतःऽ

धाः । रेतोदधातु । दधातुरेतोरेतोधाव्वाजीवृषोर्णुवाथाम्प्र
लोकेस्वर्ग्गेसम्प्रसारयावपदश्चतुरऽउभौतौ । ताऽउभौ । उभौ
चतुरः । चतुर÷पदः । पदःसम्प्रसारयाव । सम्प्रसारयाव
स्वर्ग्गे । सम्प्रसारयावेतिसम्ऽप्रसारयाव । स्वर्ग्गेलोके ।
स्वर्ग्गऽइतिस्वःऽगे । लोकेप्प्र । प्रोर्णुवाथाम् । ऊर्णुवाथां
वृषा । वृषाव्वाजी । व्वाजीरेतोधाः । रेतोधारेत÷ । रेतोधाऽइति
रेतःऽधाः । रेतोदधातु । दधात्त्वितिदधातु ॥ १ ॥ इति दण्डक्रमः ।

अथ क्रमरथः ॥ पादशोर्धर्चशो वापि सहोक्त्वा दण्डवद्रथः ॥ ऋचोर्धर्चयोः पदयोर्दण्डवत्संहितापदक्रमैः ॥ १ ॥ सहोक्त्वा रथो विहितो भवतीत्यर्थः ॥ सहोक्तिरेव रथ इति यावत् ॥ यथा ॥ चतुष्पाद्रथः ॥ ॐ स्वस्तिनः । स्वस्तिनः । स्वस्तिनः । स्वस्तिनः । नुस्वस्ति । नुस्वस्ति । नुस्वस्ति । नुस्वस्ति । स्वस्तिनः । स्वस्तिनः । स्वस्तिनः । स्वस्तिनः । नुऽइन्द्रः । नुपूषा । नुस्ता

क्ष्यौं÷ । नोबृहस्प्पतिं÷ । इन्द्रोंनःस्वुस्त्ति । पूषानं÷
स्वुस्त्ति । ताक्ष्यौंनःस्वुस्त्ति । बृहुस्प्पतिंर्नःस्वुस्त्ति । स्वुस्त्ति
नं÷ । स्वुस्त्तिनं÷ । स्वुस्त्तिनं÷ । स्वुस्त्तिनं÷ । नुऽइन्द्रं÷ ।
नुःपूषा । नुस्त्ताक्ष्यौं÷ । नोबृहुस्प्पतिं÷ । इन्द्रोवृद्ध
श्श्रंवाः । पूषाव्विश्श्ववेंदाः । ताक्ष्योंऽअरिंष्टनेमिः । बृहु
स्प्पतिंर्दधातु । वृद्धश्श्रंवाऽइन्द्रोंनःस्वुस्त्ति । व्विश्श्ववेंदाःपूषा
नं÷स्वुस्त्ति । अरिंष्टनेमिस्त्ताक्ष्यौंनःस्वुस्त्ति । दुधातुबृह्

स्पतिर्नर्दधातु ॥ स्वस्तिनः । स्वस्तिनः । स्वस्तिनः ।
स्वस्तिनः । नऽइन्द्रः । नः पूषा । नस्तार्क्ष्यः । नो बृह
स्पतिः । इन्द्रो वृद्धश्रवाः । पूषा विश्ववेदाः । तार्क्ष्योऽ
अरिष्टनेमिः । बृहस्पतिर्दधातु । वृद्धश्रवाऽइति वृद्धऽश्रवाः ।
विश्ववेदाऽइति विश्वऽवेदाः । अरिष्टनेमिरित्यरिष्टऽनेमिः ।
दधात्विति दधातु ॥ १ ॥ इति चतुष्पाद्रथः ॥ ॥





## ॥ अथ द्विपाद्ग्रथः ॥

ॐ अनिंशितोसि । अनिंशितासि । अस्यनिंशितꣳ । अस्यनिंशिता । अनिंशितोसि । अनिंशितासि । अनिंशितऽइत्त्यनिंशितꣳ । अनिंशितेत्त्यनिंऽशिता । असिसपत्नक्षित् । असिसपत्नक्षित् । सपत्नक्षिदस्यनिंशितꣳ । सपत्नक्षिदस्यनिंशिता । अनिंशितोसि । अनिंशितासि । अनिंशितइत्त्यनिंऽशितꣳ । अनिंशितेत्त्यनिंऽशिता । असि

सपत्नक्षित् । असिसपत्नक्षित् । सपत्नक्षिद्वाजिनम् ।
सपत्नक्षिद्वाजिनीम् । वाजिनꣳ सपत्नक्षिदस्यनिशितꣳ ।
वाजिनीꣳ सपत्नक्षिदस्यनिशिता । अनिशितोसि । अनि
शितासि । अनिशितऽइत्यनिऽशितꣳ । अनिशितेत्यनिऽ
शिता । असिसपत्नक्षित् । असिसपत्नक्षित् । सप
त्नक्षिद्वाजिनम् । सपत्नक्षिद्वाजिनीम् । सपत्नक्षि
दितिसपत्नऽक्षित् । सपत्नक्षिदितिसपत्नऽक्षित् ।

वाजिनंन्त्वा । वाजिनींन्त्वा । त्वा॒वा॒जिन॑ꣳसपत्न॒क्षिदु॑स्य
निंशितꣳ। त्वा॒वा॒जिनीꣳसपत्न॒क्षिदु॑स्यानिंशिता । अनिंशि
तोसि। अनिंशितासि। अनिंशितु॒ऽइत्यनिंऽशितꣳ । अनिंशि॒
तेत्यनिंऽशिता । अ॒सि॒स॒पत्न॒क्षित् । अ॒सि॒स॒पत्न॒क्षित् ।
स॒पत्न॒क्षिद्वाजिनंम् । स॒पत्न॒क्षिद्वाजिनीम् । स॒पत्न॒
क्षिदितिंसपत्न॒ऽक्षित्। स॒पत्न॒क्षिदितिंसपत्न॒ऽक्षित्।
वाजिनंन्त्वा । वा॒जिनींन्त्वा । त्वा॒वा॒जेद्ध्यायै । त्वा॒वा॒जे

द्ध्यायै। व्वाजेद्ध्यायैत्त्वाव्वाजिनᳬसपत्नक्षिदस्यनिशितᳬ।
व्वाजेद्ध्यायैत्त्वाव्वाजिनीᳬसपत्नक्षिदस्यनिशिता। अनि
शितोसि। अनिशितासि। अनिशितऽइत्यनिऽशितᳬ। अनि
शितेत्त्यनिऽशिता। असिसपत्नक्षित्। असिसपत्नक्षित्।
सपत्नक्षिद्वाजिनम्। सपत्नक्षिद्वाजिनीम्। सपत्नक्षि
दितिसपत्नऽक्षित्। सपत्नक्षिदितिसपत्नऽक्षित्। व्वा
जिनन्त्वा। व्वाजिनीन्त्वा। त्वाव्वाजेद्ध्यायै। त्वाव्वाजेद्ध्यायै।

व्वाजेद्धयायैसम् । व्वाजेद्धयायैसम् । संव्वाजेद्धयौयत्त्वाव्वाजि
नंᳪसपत्क्नक्षिदुस्यानिंशितᳫं । संव्वाजेद्धयायैत्त्वाव्वाजिनीᳫं
सपत्क्नक्षिदुस्यानिंशिता । अनिंशितोसि । अनिंशितासि ।
अनिंशितऽइत्त्यनिंऽशितᳫं । अनिंशितेत्त्यनींऽशिता । असि
सपत्क्नक्षित् । असिसपत्क्नक्षित् । सपत्क्नक्षिद्व्वाजि
नम् । सपत्क्नक्षिद्व्वाजिनीम् । सपत्क्नक्षिदितिसपत्क्नऽ
क्षित् । सपत्क्नक्षिदितिसपत्क्नऽक्षित् । व्वाजिनंत्त्वा ।

व्वाजिनीन्त्वा । त्वाव्वाजेद्ध्यायै । त्वाव्वाजेद्ध्यायै । व्वाजे
द्ध्यायैसम् । व्वाजेद्ध्यायैसम् । व्वाजेद्ध्यायाऽइतिव्वाजऽइ
द्ध्यायै । व्वाजेद्ध्यायाऽइतिव्वाजऽइद्ध्यायैसम्मार्ज्मि । सम्मा
र्ज्मि । मार्ज्मिसंव्वाजेद्ध्यायैत्त्वाव्वाजिनꣳसपत्नक्षिदस्य
निशितꣳ । मार्ज्मिसंव्वाजेद्ध्यायैत्त्वाव्वाजिनीꣳसपत्नक्षि
दस्यनिशिता । अनिशितोसि । अनिशितासि । अनिशितऽ
इत्त्यनिशितꣳ । अनिशितेत्त्यनीऽशिता । असिसपत्न

क्षित् । असिसपत्नक्षित् । सपत्नक्षिद्वाजिनम् । सपत्नक्षिद्वाजिनीम् । सपत्नक्षिदितिसपत्नऽक्षित् । सपत्नक्षिदितिसपत्नऽक्षित् । वाजिनन्त्वा । वाजिनीन्त्वा । त्वावाजेद्ध्यायै । त्वावाजेद्ध्यायै । वाजेद्ध्यायै सम् । वाजेद्ध्यायैसम् । वाजेद्ध्यायाऽइतिवाजऽइद्ध्यायै । वाजेद्ध्यायाऽइतिवाजऽइद्ध्यायै । सम्मार्ज्मि । सम्मार्ज्मि । मार्ज्मीतिमार्ज्मि । मार्ज्मीतिमार्ज्मि ॥ २॥ इति

द्विपाद्क्रमरथः ॥ ॥ अथ घनः ॥ शिखा जटा घनः प्रोक्ता
इत्यष्टौ विकृतीः पठेत् ॥ अथ द्वितीयः प्रकारो घनः ॥
अन्तक्रमं पठेत्पूर्वमादिपर्यन्तमानयेत् । आदिक्रमं नयेदन्तं
घनमाहुर्मनीषिणः ॥ यथा ॥ हरिः ॐ॥ गुणानान्त्वात्त्वागुणा
नाङ्गणानान्त्वागणपंतिङ्गणपंतिन्त्वागुणानाङ्गणानान्त्वागुण
पंतिम् ॥ त्वागुणपंतिङ्गणपंतिन्त्वात्त्वागुणपंतिꣳहवामहेहवा
महेगुणपंतिन्त्वात्त्वागुणपंतिꣳहवामहे । गुणपंतिꣳहवामहेह

वामहेगणपतिङ्गणपतिꣳहवामहेप्प्रियाणाम्प्रियाणाꣳहवाम
हेगणपतिङ्गणपतिꣳहवामहेप्प्रियाणाम् । गणपतिमितिगणऽ
पतिम् । हवामहेप्प्रियाणाम्प्रियाणाꣳहवामहेहवामहेप्प्रिया
णाम्प्रियपतिम्प्रियपतिम्प्रियाणाꣳहवामहेहवामहेप्प्रियाणा
म्प्रियपतिम् । प्रियाणाम्प्रियपतिम्प्रियपतिम्प्रियाणाम्प्रिया
णाम्प्रियपतिन्निधीनान्निधीनाम्प्रियपतिम्प्रियाणाम्प्रियाणा
म्प्रियपतिन्निधीनाम् । प्रियपतिन्निधीनान्निधीनाम्प्रियपति

म्प्रियपतिन्निधीनान्निधिपतिन्निधिपतिन्निधीनाम्प्रियपतिम्प्रि
यपतिन्निधीनान्निधिपतिम् । प्रियपतिमितिप्प्रियऽपतिम् । नि
धीनान्निधिपतिन्निधिपतिन्निधीनान्निधीनान्निधीपतिंव्वसोव्वसो
निधीपतिन्निधीनान्निधीनान्निधिपतिंव्वसो । निधीनामितिनी
ऽधीनाम् । निधिपतिंव्वसोव्वसोनिधिपतिन्निधिपतिंव्वसोममम
मव्वसोनिधिपतिन्निधिपतिंव्वसोमम । निधिपतिमितिनिधीऽ
पतिम् । व्वसोमममव्वसोव्वसोमम । व्वसोऽइतिव्वसो । ममे

तिमम ॥ आहमहमाहमंजान्यजान्यहमाहमंजानि । अह
मंजान्यजान्यहमहमंजानिगर्भधङ्गर्भधमंजान्यहमहमं
जानिगर्भधम् । अजानिगर्भधङ्गर्भधमंजान्यजानिगर्भ
धमास्त्वन्त्वमागर्भधमंजान्यजानिगर्भधमास्त्वम् । गर्भ
धमास्त्वन्त्वमागर्भधङ्गर्भधमास्त्वमंजास्यजासित्त्वमागर्भ
धङ्गर्भधमास्त्वमंजासि । गर्भधमितिगर्भऽधम् । आस्त्वम् ।
त्वमंजास्यजासित्त्वन्त्वमंजासिगर्भधङ्गर्भधमंजासित्त्व

न्त्वमंजासिगर्भधम् । अजासिगर्भधङ्गर्भधमंजास्यजासि
गर्भधम् । गर्भधमितिगर्भऽधम् ॥ १ ॥ अम्बेऽअम्बिके
म्बिकेम्बेम्बेऽअम्बिकेम्बालिकेम्बालिकाम्बिकेम्बेम्बेऽअम्बिके
म्बालिके । अम्बिकेम्बालिकेम्बालिकाम्बिकेम्बिकेम्बालिकेन
नाम्बालिकेम्बिकेम्बिकेम्बालिकेन । अम्बालिकेननाम्बालिके
बालिकेनमामानाम्बालिकेबालिकेनमा । नमामाननमानय
तिनयतिमाननमानयति । मानयतिनयतिमामानयतिकं

कोनंयतिमामानयतिकः । नयतिकःकोनंयतिनयतिकश्चन
चनकोनंयतिनयतिकश्चन । कश्चनचनकःकश्चन । चनेतिं
चन ॥ ससंस्त्यश्वकोश्वकःससांस्तिससंस्त्यश्वकःसुभंद्रि
काꣳसुभंद्रिकामश्वकःससांस्तिससंस्त्यश्वकःसुभंद्रिकाम् ।
अश्वकःसुभंद्रिकाꣳसुभंद्रिकामश्वकोश्वकःसुभंद्रिकाङ्काम्पी
लवासिनीङ्काम्पीलवासिनीꣳसुभंद्रिकामश्वकोश्वकःसुभंद्रि
काङ्काम्पीलवासिनीम् । सुभंद्रिकाङ्काम्पीलवासिनीङ्काम्पील

वासिनीᳪसुभंद्रिकाᳪसुभंद्रिकाङ्काम्पीलवासिनीम् । सुभंद्रि
कामितिसुऽभंद्रिकाम् । काम्पीलवासिनीमितिंकाम्पीलऽवा
सिनीम् ॥ २ ॥ बह्वीनाम्पिताषिताबंह्वीनाम्बंह्वीनाम्पिताबहु
र्बहुश्पिताबंह्वीनाम्बंह्वीनाम्पिताबहुः । पिताबहुर्बहुश्पिताषि
ताबहुरंस्यास्यबहुश्पिताषिताबहुरंस्य । बहुरंस्यास्यबहुर्बहुरंस्य
पुत्रश्पुत्रोस्यबहुर्बहुरंस्यपुत्रः । अस्यपुत्रश्पुत्रोस्यास्यपुत्राश्चिश्चा
चिश्चापुत्रोस्यास्यपुत्राश्चिश्चा । पुत्राश्चिश्चाचिश्चापुत्रश्पुत्राश्चि

श्वाकृंणोतिकृणोतिचिश्वापुत्रःपुत्राश्चिश्वाकृंणोति। चिश्वाकृंणोतिकृणोतिचिश्वाचिश्वाकृंणोतिसमंनासमंनाकृणोतिचिश्वाचिश्वाकृंणोतिसमंना । कृणोतिसमंनासमंनाकृणोतिकृणोतिसमंनावगत्त्यांवगत्त्यसमंनाकृणोतिकृणोतिसमंनावगत्त्यं । समंनावगत्त्यांवगत्त्यसमंनासमंनावगत्त्यं । अवगत्त्येत्त्यंवऽगत्त्यं ॥ इषुधिःसङ्काःसङ्काःऽइषुधीरिषुधिःसङ्काःपृतंनाःपृतंनाःसङ्काःऽइषुधीरिषुधिःसङ्काःपृतंनाः। इषुधिरितीषुऽधिः। सङ्काः

पृतनाꣳपृतनाꣳसङ्गाꣳसङ्गाꣳपृतनाश्चपृतनाꣳसङ्गाꣳसङ्गाꣳपृ
तनाश्च । पृतनाश्चचपृतनाꣳपृतनाश्चसर्वाꣳसर्वाश्चपृतनाꣳपृत
नाश्चसर्वाः । चसर्वाꣳसर्वाश्चचसर्वाःपृष्ठेपृष्ठेसर्वाश्चचसर्वाः
पृष्ठेꣳ । सर्वाःपृष्ठेपृष्ठेसर्वाꣳसर्वाःपृष्ठेनिनद्धोनिनद्धꣳपृष्ठेसर्वाꣳ
सर्वाःपृष्ठेनिनद्धः । पृष्ठेनिनद्धोनिनद्धꣳपृष्ठेपृष्ठेनिनद्धोजयति
जयतिनिनद्धꣳपृष्ठेपृष्ठेनिनद्धोजयति । निनद्धोजयतिजयति
निनद्धोनिनद्धोजयतिप्प्रसूतꣳप्प्रसूतोजयतिनिनद्धोनिनद्धोज

क्थिनमुक्थिनमपूपवन्तमपूपवन्तमुक्थिनम्। अपूपवन्तमित्यपूपऽवन्तम्। उक्थिनमित्युक्थिनम् ॥ इन्द्रप्प्रातःप्प्रातरिन्द्रेन्द्रप्प्रातर्ज्जुषस्वजुषस्वप्प्रातरिन्द्रेन्द्रप्प्रातर्ज्जुषस्व । प्रातर्ज्जुषस्व जुषस्वप्प्रातःप्प्रातर्ज्जुषस्वनोनोजुषस्वप्प्रातःप्प्रातर्ज्जुषस्वनः । जुषस्वनोनोजुषस्वजुषस्वनःनऽइतिनः ॥ ४ ॥ इति घनः ॥

इत्यष्टविकृतयः समाप्ताः ॥

# अथ याज्ञवल्क्यशिक्षा-प्रतिज्ञासूत्र-सर्वानुक्रम-सूत्र-पारस्करगृह्यसूत्राणां प्रारम्भः ॥

# ॥ अथ प्रतिज्ञासूत्रम् ॥

॥ श्रीगणेशाय नमः ॥ प्रतिज्ञामन्त्रब्राह्मणयोर्वेदनामधेयं तस्मिञ्शुक्ले याजुषाम्नाये माध्यन्दिनीयके मन्त्रे स्वरप्रक्रिया ह्यनुदात्तो मूर्ध्न्युदात्तः श्रुतिमूले स्वरितः । एवं जात्यादयोऽभिहिताः ॥ ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वारौ तानस्वराणि छन्दोवत्सूत्राणि ॥ १ ॥ अथान्तःस्थानामाद्यस्य पदादिस्थस्यान्यहलसंयुक्तस्य संयुक्तस्यापि रेफोष्मान्त्याभ्यामृकारेण चाविशेषेणादिमध्यावसानेषूच्चारणे जकारोच्चारणं द्विर्भावेऽप्येवमथापरान्तःस्थस्यायुक्तान्यहलसंयुक्तस्योष्मऋकारेकारसहितोच्चारणमेवं तृतीयान्तःस्थस्य क्वचिद्दकारस्य तु संयुक्तासंयुक्तस्याविशेषेण सर्वत्रैवमथान्त्यस्यान्तःस्थानां पदादिमध्यान्तःस्थस्य त्रिविधं गुरुमध्यमलघुवृत्तिभिरुच्चारणमथो मूर्द्धन्योष्मणोऽसंयुक्तस्य टुमृते संयुक्तस्य च खकारोच्चारणमध्ययनादिकर्मस्वर्थवेलायां प्रकृत्या ॥ २ ॥ अथानुस्वारस्यङ्‌इत्यादेशः शषसहरेफेषु तस्य त्रैविध्यमाख्यातम् ॥ ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ परे गुरुः परसवर्णेषत्प्रकृत्या चान्यत्र विसर्गेष्वीषद्विरामः पदाद्यस्य संयुक्ताकारस्येषद्दीर्घता च भवतीषद्दीर्घता च भवतीति ॥ ३ ॥ इति कात्यायनपरिशिष्टप्रतिज्ञासूत्रं समाप्तम् ॥ ॥ ॥

# ॥ अथ सर्वानुक्रमसूत्रम् ॥

श्रीगणेशाय नमः ॥ अथ सर्वानुक्रमसूत्रप्रारम्भः ॥ ॐमण्डलं दक्षिणमक्षिहृदयं चाधिष्ठितं येन शुक्लानि यजूꣳषि भगवान्याज्ञवल्क्यो यतः प्राप तं विवस्वन्तं त्रयीमयमर्चिष्मन्तमभिध्याय माध्यन्दिनीये वाजसनेयके यजुर्वेदाम्नाये सर्के सशुक्रियर्षिदैवतछंदाꣳस्यनुक्रमिष्यामो यजुषामनियताक्षरत्वादेकेषां छन्दो न विद्यते द्रष्टारो ऋषयः स्मर्तारः परमेष्ठ्यादयो देवता मन्त्रान्तर्भूता अग्न्यादिका हविर्भाजः स्तुतिभाजो वानः शाखोखाशम्योपवेषकपालेध्मोलूखलाद्-यश्च प्रतिमाभूताश्छन्दाꣳसि गायत्र्यादीन्येतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवत्यथान्तराश्वगर्त्तं वापद्यते स्थाणुं वार्च्छति प्रमीयते वा पापीयान्भवत्यथ विज्ञायैतानि योऽधीते तस्य वीर्यवदथ योऽर्थवित्तस्य वीर्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते ॥ १ ॥ इषेत्वादि खंब्रह्मान्तं विवस्वानपश्यत्ततः प्रतिकर्मविभागेन ब्राह्मणानुसारेण ऋषयो वेदितव्याः परमेष्ठी प्राजापत्यो दर्शपूर्णमासमन्त्राणामृषिर्देवा वा प्राजा-

पत्या इषेत्त्वाशाखानुष्टुब्विनियोगः कल्पकारोक्त एवमूर्ज्जेत्त्वा व्वायवो व्वायव्यं देवोवऽऐन्द्रं यजमानस्य शाखावसोर्व्वायव्यं द्यौर्मातरिश्वन उखा व्वसोर्व्वायव्यं देवस्त्वापयः कामधुक्षः प्रश्नः सा व्विश्वायुस्त्रीणि गव्यानीन्द्रस्यैन्द्रं व्विष्णोः पयः ॥ २ ॥ योऽअग्नऽइद्माग्नेये कस्त्वा प्राजापत्यं कर्मणे स्रुक्शूर्पं प्रत्युष्टं द्वे राक्षसे उरुब्रह्मरक्षोघ्नᳬ सर्वत्र धूरसि धूर्देवानां व्विष्णुस्त्वानऽउरुह-विष्याऽअपहतᳬ रक्षोयच्छन्ताᳬहविष्या देवस्य त्वा सावित्रᳬसर्वत्राग्नये लिंगोक्ते भूताय त्वा हविः स्वः सूर्यो दᳬहन्तां गृहाः पृथिव्यास्त्वा हव्यं पवित्रे लिङ्गोक्तᳬसवितुर्देवीः प्रोक्षिताऽआपा-न्यग्नये लिङ्गोक्ते दैव्याय पात्राणि ॥ ३ ॥ शर्मास्यादित्याः कृष्णाजिनमवधूतᳬराक्षसमद्रिर्ग्रावोलू-खलेऽअग्नेर्हविर्बृहत्सऽइद्म्मौसले हविष्कृदधिदैवतं व्वागधियज्ञं पत्नी कुक्कुटो व्वाग्वर्षवृद्धᳬ शूर्पं प्रतित्वा हविः परापूतमपहतᳬराक्षसे व्वायुर्वो देवो वस्तण्डुला धृष्टिरुपवेषोपाग्नऽआदेवयजनमाग्नेये ध्रुवमासि षण्णां कपालान्यग्ने ब्रह्माग्नेयं धिषणासि दार्षदंदिवः शम्या धिषवणौपलं धान्यमासि षण्णाᳬहविर्महीनामाज्यम् ॥ ४ ॥ संवपामि हविः समापऽआपं जनयत्यै त्वेदᳬहविरिषेत्त्वाज्यं

घर्म्मोसि षण्णां पुरोडाशस्त्रिताय त्रयाणां त्रितोद्वितऽएकतः क्रमेणाददऽइन्द्रस्य स्फ्यः पृथिवी
वेदिर्व्रजं पुरीषं वर्षतु वेदिर्बधान सावित्रमपाररुमररोऽआसुरे द्रप्सस्ते वेदिर्गायत्रेण त्रीणि वैष्णव-
वानि सूक्ष्मा त्रयाणां वेदिः पुराघशꣳ सोपश्यच्चान्द्रमसीं त्रिष्टुभं प्रोक्षणीः प्रैषो द्विषतः आभि-
चारिकमनिशितः स्रुवो निशितास्रुगदित्यै विष्णोर्षोंक्त्रमूर्ज्जे त्रयाणामाज्यꣳसवितुरार्षं तेजोसिधा-
माज्यम् ॥५॥ इति० संहितायां प्रथमोऽध्यायः ॥१॥ कृष्णोसीध्मो वेदिर्बर्हिर्लिङ्गोक्तेऽअदित्याऽआप
विष्णोः प्रास्तरमूर्णम्रदसं वेदिर्भुवपतये त्रीण्याग्नेयानि गन्धर्वस्त्रयाणां परिधयो वीतिहोत्रं
विश्वावसुराग्नेयीं गायत्रीꣳसमिदाग्नेयꣳसूर्यस्त्वालिङ्गोक्तꣳसवितुर्विधृतीऊर्णम्रदसमात्वाप्रास्तरे घृता-
च्यसि त्रयाणां जुहूपभृद्ध्रुवाः क्रमेण प्रियेण हविर्ध्रुवाऽअसदन्पाहि मां वैष्णवेऽअग्नेवाजजिदाग्नेयं
नमोदेवꣳस्वधापित्र्यꣳसुयमे स्रुचावंघ्रिणा वैष्णवं वसुमतीमाग्नेयमितऽऐंद्रꣳसञ्ज्योतिषाज्यं मयी-
दमाशीः प्रतिग्रहणमुपहूताद्यावापृथिव्यम् ॥ ६ ॥ ब्रह्मत्वं प्रतिष्ठान्तं बृहस्पतिरांगिरसोपश्यदग्नेष्ट्वा
प्राशित्रमेतन्ते वैश्वदेवमेषा तेऽनुष्टुबाग्नेवाजꣳसग्ने वाजजिदाग्नेयमग्नीषोमयोश्चत्वारि लिङ्गोक्तानि

वसुभ्यस्त्रयाणां परिधयः सञ्ज्ञानाथाव्ययन्तु प्रास्तरे मरुताऽकपिर्बृहतीं प्रास्तरीमन्त्यः पादऽआग्नेयो
यम्परिधिं देवलऽआग्नेयीं त्रिष्टुभं विराड्रूपां यजुरन्तामग्नेः प्रियं यजुःसꣳस्त्रवभागाः सोमसूक्ष्मो
वैश्वदेवीं त्रिष्टुभं यजुरन्ताꣳस्वाहा वाड्यजुर्घृताचीस्त्रुचौ यज्ञनमः शूर्प्यां यवमान्कपिरुद्दालवां
धानां तर्वीनिति पञ्चार्षे यो यज्ञोदेवताग्नेदब्धायोगार्हपत्योग्नये दक्षिणाग्निः सरस्वत्यै लिङ्गोक्तं वेदोसिं
वेदो देवामनसस्पतिर्वातदेवत्यांविराजꣳसम्बर्हिर्लिङ्गोक्ता। त्रिष्टुब्विराड्रूपा कस्त्वा प्राजापत्यꣳरक्षसाꣳ
राक्षसम् ॥ ७ ॥ अथ याजमानꣳसंवर्चसा त्वाष्ट्री त्रिष्टुब्दिविविष्णुस्त्रीणि वैष्णवान्यस्माद्भागोस्यै
भूमिरगन्मै दैवꣳसञ्ज्योतिषाऽऽहवनीयः स्वयम्भूः सूर्यस्य सौरेऽअग्ने गृहपते गार्हपत्यः सूर्य्यस्य सौर-
मग्नऽइदमाग्नेये॥ ८॥ पितृयज्ञः प्रजापतेरार्षमग्नये सोमाय द्वे दैवे स्वाहाकारश्रुतेरपहताऽआसुरं ये
रूपाणि कव्यवाहनोऽग्निस्त्रिष्टुब् अत्रामीमदन्त पित्र्ये नमोत्रः षड्लिङ्गोक्तानि परे पित्र्यैऽआधत्त
पित्र्यागायत्र्यूर्ज्जमापिविराट् ॥ ९ ॥ इति० संहितायां द्वितीयोऽध्यायः ॥ २ ॥ अग्न्याधेयं प्रजा-
पतेरार्षं देवानामग्नेर्गन्धर्वाणां वा समिधाग्नेय्यश्चतस्रो गायत्र्यः समिधाविरूपऽआङ्गिरसः सुस-

मिद्धाय वसुश्रुतस्तन्त्वां भरद्वाजो भूर्भुवःस्वस्तिस्रो महाव्याहृतयोऽग्निवायुसूर्यदेवत्याः क्रमेण द्यौरिव
यजमानाशीर्लिङ्गोक्तदेवताऽआयङ्गौः सार्पराज्ञस्तृचो गायत्र्योऽग्निः परावररूपेण देवता ॥ १० ॥
अग्निहोत्रं प्रजापतेरार्षं अग्निर्ज्योतिः सप्तलिङ्गोक्तदेवता गायत्र्य आद्याः पञ्चैकपदाः अग्निर्वर्चो द्वे
तक्षापश्यत्परा जीवलश्चैलकिः ॥ ११ ॥ यजमानाभ्युपस्थानं बृहद्देवानामार्षम् उपप्रयन्तऽइत्यनु-
वाकऽआद्ये द्वे आग्नेय्यौ गायत्र्यावुपवत्या गोतमो राहूगणो मूर्द्धन्वत्या विरूपः उभावां भरद्वाजऽ
ऐन्द्राग्नीं त्रिष्टुभमयन्ते देवश्रवा देववातश्च भारतावाग्नेयीमनुष्टुभमयमिह वामदेवो जगतीमस्य
प्रतामवत्सारोगव्यां वाग्नेयीं वा पयो देवत्यां वा गायत्रीं तनूपाऽआग्नेयानिऽइन्धानाऽआग्नेयीं
महापङ्क्तिर्त्र्यवसाना ॥ १२ ॥ चित्रावसोरात्रिदेवत्यमृषयो पश्यन्सन्त्वमाग्नेयमन्धःस्थरेवतीःसꣳ
हितेति त्रीणि गव्यानि । उपस्त्वाग्नेयं तृचं गायत्रं मधुच्छन्दा वैश्वामित्रोऽग्नेत्वं चतस्रो
द्विपदाऽआग्नेयीर्बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुरेकैकशऽइडेकाम्याकव्ये सोमानं ब्राह्मणस्पत्यं तृचं
गायत्रं ब्रह्मणस्पतिर्मेधातिथिर्वामहित्रीणाꣳसत्यधृतिर्वारुणिरादित्यदैवतं तन्नं गायत्रं पथि स्वस्त्ययनं

कदाचनैन्द्रीं पथ्याबृहतीं मधुच्छन्दास्तत्सवितुर्विश्वामित्रः सावित्रीं गायत्रीं परिते वामदेवऽआग्नेयीमनिरुक्तां गायत्रीम् ॥१३॥ क्षुल्लकोपस्थानमासुरेरार्षं, भूर्भुवः स्वः प्रवत्स्यदुपस्थानमागतोपस्थानं चादित्यस्यार्षं नर्यगार्हपत्यःशꣳस्याहवनीयोथर्वदक्षिणाग्निरागन्माहवनीयोनुष्टुबयमग्निर्न्यंकुसारिणीबृहती गार्हपत्योयमग्निरन्वाहार्यपचनोऽनुष्टुब्गृहामा त्रिष्टुब्विराड्रूपा षेषामानुष्टुबुपहूतामहापंक्तिर्द्व्यवसानास्तिस्रोऽपि वास्तवीः शंयुर्बार्हस्पत्यः ॥ १४ ॥ चातुर्मास्यानि प्रजापतेरार्षं, प्रघासिनो मारुती गायत्री यद्ग्रामेमारुत्यनुष्टुबनिरुक्तामोषूणोगस्त्यऐन्द्रामारुतीं विराजमक्रंननिरुक्ताग्नेय्यनुष्टुब् अवभृथयज्ञदैवतं पूर्णादर्विंद्वे और्णवाभऽऐन्द्यावनुष्टुभावक्षंद्वे गोतमऽऐन्द्यौ पङ्क्ती मनोनुमानसं तृचं बन्धुर्गायत्रं वयꣳसोमीं गायत्रीं बन्धुरेषते द्वे रौद्रे अवरुद्रꣳरौद्यावेकापंक्तिरपराककुप् त्र्यम्बकं द्वे अनुष्टुभौ पूर्वस्या वसिष्ठऽ एतदास्तारपंक्तिर्त्र्यायुषं नारायणऽउष्णिहं यजमानाशीर्षꣳशिवोनाम क्षौरं निवर्त्तयामिलिङ्गोक्तदैवतमाशीःप्रायम् ॥ १५ ॥ इति० संहितायां तृतीयोऽध्यायः ॥ ३ ॥ अग्निष्टोमः प्रजापतेरार्षं, एदंद्वेऽअत्यष्टीत्र्यवसाने आद्यावर्द्धर्चौ देवयजनदेवत्याविमाऽआपऽओषधे

कुशातरुणꣳस्वधितेक्षौरमापोऽअस्मानापन्दीक्षातपसोर्वासोमहीनां नवनीतं व्वृत्रस्याजनं चित्पतिर्द्वे
प्राजापत्ये देवोमा सावित्रमावोदैव्यनुष्टुबाशीःस्वाहायज्ञं चतुर्णां यज्ञऽआकूत्यै चतुर्णामौद्ग्रभणानाम-
ग्निरापोदेवीर्लिंगोक्तदेवताविराट् ॥१६॥ विश्वोदेवस्य स्वस्त्यात्रेयः सावित्रीमनुष्टुभपृक्सामयोः कृष्णा-
जिनेशर्मासि कृष्णाजिनमूर्गस्यांगिरोभिर्द्दृष्टमैखलꣳसोमस्यनीविर्व्विष्णोर्व्वासऽइन्द्रस्य सुसस्याः कृष्ण-
विषाणोच्छ्रयस्वदण्डोव्रतंयज्ञेदेवीर्धीर्येदेवावाक्प्राणोदानौ चक्षुःश्रोत्रमध्यात्ममग्निर्मित्रावरुणावादि-
त्यो विश्वेदेवाऽअधिदैवतꣳश्वात्राऽआपोजगतीयंते लोष्टमपोमूत्रंपृथिव्यालोष्टमग्नेत्वमाग्नेय्यनुष्टु-
प्पुनर्मनऽआग्नेयं त्वमग्ने व्रतसऽआग्नेयींगायत्रीꣳरास्वेयत्सौम्यमेषातेहिरण्मयाज्यदैवतंजूरसिवाग्दै-
वतꣳशुक्रमसिहिरण्यं चिदसि गौःसोमक्रयणी वामूपाध्यारोपकल्पनया ॥ १७ ॥ वस्व्यस्यनुष्टुब्बृ-
हतीसोमक्रयण्यास्तुतिरादित्याऽआज्यमस्मेषण्णां लिङ्गोक्तादेवताः समख्येपत्याशीरास्तारपंक्तिरेषते-
लिङ्गोक्तदैवतमासाकोसि सौम्यमभित्यꣳसावित्र्यष्टिः प्रजाभ्यस्त्वा प्रजास्त्वा शुक्रन्त्वा सौम्यानि
सग्मेसोलिङ्गोक्तेतपसोर्ज्जार्द्धं सोमोमित्रो नऽइन्द्रस्य सौम्ये स्वानादीनिधिष्ण्यानामानिपरिमाग्नेयी

पुरस्ताद्बृहती प्रतिपन्थामनुष्टुप्पथिदेवत्यादित्याः कृष्णाजिनमदित्यै सौम्यमस्तभ्नात्त्रिष्टुभौ वारुण्यौ सूर्यस्यानुष्टुप्कृष्णाजिनमुस्रावूर्ध्वबृहत्यानडुही भंद्रो मे सौम्यं नमोमित्रस्याभितपनः सूर्यः सौरीं जगतीं वरुणस्य पञ्चवारुणानि याते सोमीं त्रिष्टुभं गौतमः ॥ १८ ॥ इति॰ संहितायां चतुर्थोऽध्यायः ॥ ४ ॥ अग्नेस्तनूरसिपञ्च वैष्णवान्यग्नेः शकलं वृषणौद्भेतरुणेकेऽउर्वश्यसित्रयाणां लिंगोक्ता देवता गायत्रेण त्रीण्याग्नेयानि भवतन्नः पंक्तीरग्नावग्निर्विराडेतयोर्निर्मथ्याहवनीयावग्नीदेवतेऽआपतयेवायव्यमनाधृष्टमाज्यमग्नेव्रतपाऽआग्नेयमꣳशूरꣳशुः प्रकृतिश्चतुरवसाना सौम्यन्त्योर्द्धर्चौ लिंगोक्तदेवतोयातेत्रीण्याग्नेयानि तप्तायनीचत्वारि पार्थिवानि विदेदाग्नेयमग्नेऽअङ्गिरो योस्यामनुत्वालिंगोक्तानि सिꣳह्यसित्रयाणां वेदिरिंद्रघोषश्चतुर्णामुत्तरवेदिरिदमहमापाꣳसिꣳह्यसि पञ्चानां वाग्भूतेभ्यः स्रुग्ध्रुवोसिपरिधयस्त्रयाणामग्नेः संभाराग्गुल्युल्वादयः ॥ १९ ॥ युञ्जतेश्यावाश्वः सावित्रीं जगतीम्। इदंविष्णुर्मेधातिथिर्वैष्णवीं गायत्रीमिरावतीवासिष्ठस्त्रिष्टुभं देवश्रुतावक्षधुरौप्राचीस्वंगोष्ठमत्रहविर्द्धानेविष्णोर्नुतिस्रो वैष्णव्यस्त्रिष्टुभऽआद्ये द्वे यजुरंते विष्णोर्नुप्रदीर्घतमाऔतथ्यो विष्णो-

१ भद्रोमेमित्रस्या.

ररराटंपंच वैष्णवान्याददेऽभ्रिरिदमहꣳरक्षोघ्नं बृहन्नौपरवाणीदमहं पंच लिंगोक्तानि स्वराडस्यौ पर्वाणि चत्वारि रक्षोहणौवः सप्त वैष्णवानि यवोसि यवोदिवेत्वौदुंबरी शुंधंतां पित्र्ये उद्दिवं पंचानामौदुंबरी घृतेनद्यावापृथिव्यमिंद्रस्यैंद्रं परित्वा मधुच्छंदाऽअनिरुक्तामैंद्रीमनुष्टुभमिंद्रस्यैंद्राणि त्रीणि चतुर्थं वैश्वदेवम् ॥ २० ॥ विभूरस्यष्टानां धिष्ण्या अग्नयः सम्राडाहवनीयः परिषद्यो बहिष्पवमानदेशो नभोसि चात्वालः मृष्टोसि शामित्रःऋतधामौदुंबरीसमुद्रोसि ब्रह्मासनम् ज्योतिरसि शालाद्वार्योहिरसिप्राजहितो वागसिसदऋतस्य द्वार्येअध्वनाꣳसूर्योमित्रस्यर्त्विजोग्नयो धिष्ण्याः ॥ २१ ॥ ज्योतिरसि वैश्वदेवं त्वꣳसोमक्रतुर्भार्गवः सौमीं गायत्रीमनवसानां जुषाणो अप्तुदेवत्यैकपदाविराड्यजुरंताऽग्नेनयागस्त्यऽआग्नेयीं त्रिष्टुभमयन्नात्रिष्टुब्यजुरंताग्नेयी उरुविष्णोवैष्णव्यनुष्टुब्यजुरंता देवसवितः सावित्रमेतत्त्वꣳसौम्यꣳस्वाहा निर्लिंगोक्तदेवतामग्नेव्रतपाऽआग्नेयमत्यन्यान्वनस्पतिरोषधेकुशतरुणꣳस्वधितेपरशुर्द्यामातस्त्वंवनस्पतिः ॥ २२ ॥ इति० संहितायां पंचमोऽध्यायः ॥ ५ ॥

अग्रेणीः शकलं । देवस्त्वायूपः सुपिप्पलाभ्यश्च । वालंद्यामग्रेणयूपो याते दीर्घतमायूपदेवत्यां

त्रिष्टुभं ब्रह्मवनि ब्रह्मदृ꣡ह यूपदेवत्ये विष्णोः कर्माणि द्वे मेधातिथिर्वैष्णव्यौ गायत्र्यौ परिवीर्यूपो- दिवस्वरुरेषते यूपऽउपावीस्तृणमुपदेवां लिंगोक्तमृतस्यत्वा पशुरग्नीषोमाभ्यां लिंगोक्तमद्भ्योपां पशुरापोदेवीराप꣡संते पशुर्घृतेन स्वरुशासौरेवतीवाग्वर्षोतृण꣢स्वाहादेवे ॥ २३ ॥ माहिर्भूरज्जुर्न- मस्ते यज्ञोदेवीरापोर्द्धमापमर्द्धमाशीर्वाचंते मनस्तेपशुः शंलिंगोक्तमोषधे तृण꣢स्वधितेसीरक्षसां लिंगोक्तं निरस्तमिदमह꣡रक्षोहणीघृतेनद्यावापृथिव्यंवायोवायव्यमग्निराज्यस्याग्नेय꣢स्वाहाकृतेवपा- श्रपण्याविदमापआपीमहापंक्तिस्त्र्यवसानापावमानश्चांत्यःपादःसंते हृदय꣡रेडसिवसाप्रयुतं लिंगोक्तं घृतं वैश्वदेवं दिशः पंचदिश्यान्यैंद्रः प्राणः पश्वंगः प्राणदानं लिंगोक्तं देवत्वाष्ट्री त्रिष्टुप् ॥ २४ ॥ समुद्रंलिंगोक्तानि द्वादशादिवंते स्वरुर्मापोहृदयशूलं धाम्नो धाम्नोवारुणं यदाहुर्वारुणी गायत्र्यनव- साना सुमित्रियानऽआप꣡हविष्मतीर्लिङ्गोक्तदेवतानुष्टुबग्नेर्वश्चत्वाषीपाद्मयमूरापीं गायत्रीं मेधाति- थिर्हृदेत्वा सौम्यनुष्टुप् सोमराजन्त्सौम्ये शृणोतु लिंगोक्तदेवतात्रिष्टुब्देवीरापऽआपीपंक्तिः कार्षि- राज्यमनुष्टुप्समुद्रस्य समापऽआपो यमग्नेमधुच्छंदाऽआग्नेयीं गायत्रीमाददेग्रावानिग्राभ्याआपमि-

न्द्रायत्वा पञ्चसौम्यानि यत्तेसौमी विपरीता बृहती श्यावाश्वःपथ्याबृहती माभेः सौम्यमर्द्धंद्यावा-
पृथिव्यमर्द्धप्रागपाक्सौम्युष्णिक् त्वमंगगोतमऽऐन्द्रीं पथ्याबृहतीम् ॥ २५ ॥ इति० संहितायां
षष्ठोऽध्यायः ॥ ६ ॥ वाचस्पतयेप्राणदेवत्याविराट् मधुमतीर्लिङ्गोक्तं यत्ते सौम्यꣳस्वाहोरुयजुषी-
लिङ्गोक्ते स्वाङ्कृतोस्युपाꣳशुर्देवेभ्यस्त्वादेवं देवाꣳशोलिङ्गोक्तमाभिचारिकं प्राणायग्रहोव्याना-
यउपाꣳशुसवनऽउपयामगृहीतोस्यंतरैन्द्रमन्तस्ते मघवदेवत्यात्रिष्टुबुदानायग्रहः आवायो वसिष्ठो-
वायव्यां त्रिष्टुभमिन्द्रवायू मधुच्छन्दा ऐन्द्रवायवींगायत्रीमयंवाङ्गृत्समदोमैत्रावरुणीꣳरायावयं
त्रसदस्युस्त्रिष्टुभं यावां मेधातिथिराश्विनीं गायत्रीं तंप्रत्नथावत्सारः काश्यपोवैश्वदेवीं जगतीम-
च्छिन्नस्यसौम्यꣳसा प्रथमैन्द्रीत्रिष्टुप्तृपंत्वयाऽग्नीलिङ्गोक्ते ॥ २६ ॥ अयं वेनोवेनस्य त्रिष्टुप् सोम-
स्तुतिरधिदैवतमाधियज्ञं च मनोनत्रिष्टुप्सोमस्तुतिराधियज्ञानुवादिन्यपमृष्टः शंडोपमृष्टोमर्कऽ-
आभिचारिके देवास्त्वा शुक्रामंथिनावनाधृष्टासिदक्षिणोत्तरवेदिश्रोण्यौसुवीरः सुप्रजाः शुक्रामंथिनौ
निरस्तोद्वे आभिचारिके शुक्रस्य मंथिनः शकलं षेदेवासः परुच्छेपोवैश्वदेवीं त्रिष्टुभमाग्रयणोसि-

लिङ्गोक्तदेवतम् ॥ २७ ॥ सोमः पवते वैश्वदेवमिन्द्रायत्वा पञ्च लिङ्गोक्तानि । मूर्द्धानं भरद्वाजो वैश्वानरीं त्रिष्टुभं ध्रुवोसिध्रुवोध्रुवं ध्रुवेण बृहती पूर्वोर्द्धर्चोध्रौवउत्तरऽऐन्द्रोयस्ते देवश्रवाः सौमीं त्रिष्टुभं यजुरंतान्देवानां चात्वालदैवतं प्राणायमे लिंगोक्तदेवतान्येकादश कोसिप्राजापत्योष्णिग्वर्द्धमानामधवेत्वा लिङ्गोक्तदेवतानि त्रयोदश ॥ २८ ॥ इंद्राग्नी विश्वामित्रऽऐन्द्राग्नीं गायत्रींमाघत्रिशोकऽआग्न्यैंद्रीमोमासोमधुच्छंदा वैश्वदेवीं विश्वेदेवासो गृत्समदऽइंद्रमरुत्वश्चतस्रो-विश्वामित्रऽऐन्द्रामारुतीस्त्रिष्टुभोमरुतांत्वायजुर्मरुत्वतीयंमहाँ२ऽइंद्रोभरद्वाजोमाहेंद्रीत्रिष्टुभं षऽ-ओजसा वत्सोगायत्री मुदुत्यंप्रस्कण्वः सौरीं गायत्रीं चित्रं कुत्सऽआंगिरसस्त्रिष्टुभꣳरूपेण वोद्-क्षिणाश्चतुर्णां ब्राह्मणमद्य लिङ्गोक्तदेवतान्यष्टौ ॥ २९ ॥ इति० संहितायां सप्तमोऽध्यायः ॥ ७ ॥ विष्णोर्वैष्णवं कदाचनादित्यदेवत्येबृहत्यौ यज्ञोदेवानां कुत्सस्त्रिष्टुभं विवस्वन्यजुः श्रदस्मै जगत्या-शीर्वाममद्य भरद्वाजोबार्हस्पत्यः सावित्रींत्रिष्टुभꣳसावित्रोसिसावित्रꣳसुशर्मासि वैश्वदेवं बृहस्पति-सुतस्य लिंगोक्तमहंप्रजापतिरूपेणाऽस्मादेवतात्रिष्टुबग्ना२ऽइपत्नीवन्नाग्नेयं प्रजापतिः प्राजापत्यꣳहरि-

रस्यूक्सामेहर्षोर्यस्तेलिङ्गोक्तेदेवक्ुतस्याऽग्नेयानि षट् ॥ ३० ॥ सामिन्द्रात्रिवैश्वदेवीं त्रिष्टुभं धातालिं-
गोक्तबहुदेवत्यासुगावोदेवीयाँऽआवहोवयमाग्नेऽग्नौषज्ञायज्ञमेषतेलिंगोक्तेयजुषीउरुᳬहिशुनःशेपो-
वारुणींत्रिष्टुभं नमोवारुणमग्नेरनीकमाग्नेयी त्रिष्टुप् समुद्रेते सौमी विराड्देवीरापःपंक्तिर्बृहती वा
पूर्वोर्द्धर्चऽआपऽउत्तर.सौर्य्योदेवानामाग्नेयमेजतुत्र्यवसानामहापंक्तिर्यस्यैते वशापुरुदस्मोगर्भोमरुतो-
यस्य गोतमोमारुतीं गायत्रीं महीद्यौर्मेधातिथिर्द्यावापृथिव्यामित्यग्निष्टोमः ॥ ३१ ॥ अथषोड-
श्यातिष्ठगोतमऽऐन्द्रीमनुष्टुभं । युक्ष्वाहि मधुच्छंदाः । इंद्रमिद्गोतमः । यस्मान्नैंद्री त्रिष्टुप्परब्रह्म-
रूपेण षोडशिनस्तुतिरिंद्रश्चैंद्रावारुणीषोडशिदेवत्यावायजुरंताग्नेपवस्व वैखानसऽआग्नेयीं गायत्री-
मुत्तिष्ठन्कुरुस्तुतिरैन्द्रीमहश्चं प्रस्कण्वः सौरीं अतिस्रोपियजुरन्ताः उदुत्यं देवानामार्षमाजिघ्रेडे-
कौसुरुविंदुर्गव्ये महापंक्तिःप्रस्तारपंक्तिः विनःशासोभारद्वाजऽऐन्द्रीमनुष्टुभं वाचस्पतिं वैश्वकर्मणीं
त्रिष्टुभं विश्वकर्मन्नैंद्रीवैश्वकर्मण्यग्नयेत्वा देवार्षाण्यदाभ्यदेवत्यानिग्रेशीनांत्वा सौम्यानि ॥ ३२ ॥
सत्रोत्थानं देवानामार्षमिहरतिः पशुदैवतमुपसृजन्नुष्णिगाग्नेयी सत्रस्य बृहती यजमानानामात्म-

स्तुतिर्युवंतंपरुच्छेपऽऐंद्रीमत्यष्टिंत्र्यवसानामाद्योर्द्धर्चेऽऐंद्रापार्वतः परमेष्ठीनैमित्तिकान्याध्याद्वसिष्ठस्यार्ष लिंगोक्तदेवतानि चतुस्त्रिꣳशद्ययोर्वैष्णववारुणीं त्रिष्टुब्देवान्दिवमाशीर्लिंगोक्तदेवताश्चतुस्त्रिꣳशद् वर्मदेवत्यापंक्तिस्त्रिष्टुब्वायज्ञस्य यज्ञदेवत्या त्रिष्टुबापवस्व सौमीं गायत्रीं नैध्रुविः कश्यपः ॥ ३३ ॥
इति० संहितायां अष्टमोऽध्यायः ॥ ८ ॥ अथ वाजपेयोबृहस्पतेरार्षम् इंद्रस्य च देवसवितःसावित्री त्रिष्टुप् ध्रुवसदमैंद्राणित्रीण्यपाꣳरसदेवत्यानुष्टुब्महालिंगोक्तदेवतानुष्टुप्संपृचौ यजुषीन्द्रस्य रथोवाजस्य पार्थिव्यतिजगत्यंत्यःपादःसावित्रोऽप्स्वन्तरश्वदेवत्यानवसानापुरऽउष्णिग्वातोवातिस्रोश्वस्तुतयऽउष्णिक्त्रिष्टुब्जगत्योवाजिनोश्वाःदेवस्याहं लिंगोक्तानि वाजिनोश्वाऽएषस्य द्वे दधिक्रावावामदेव्योश्वदेवत्ये जगत्यौ शन्नोवसिष्ठोविराजंतेनोनाभानेदिष्ठोजगतीं वाजेवाजे वसिष्ठस्त्रिष्टुभमामाप्राजापत्यांवाजिनोश्वाः ॥३४॥ आपयऽआयुर्यज्ञेनप्राजापत्यानि प्रजापतेः स्वरमृतायजमानोस्मेदिशोनमः पृथिवीयमासंदीयंतासुन्वन्वाजस्य प्राजापत्यं तृचं त्रैष्टुभꣳसोमं तृचंतापसऽआद्या वैश्वदेव्यनिरुक्तानुष्टुब्द्वितीया लिंगोक्तदेवता तृतीयाग्नेयीप्रनोलिंगोक्ता गायत्री सरस्वत्यैसुन्वन्नग्निःसप्तदश

लिंगोक्तदेवतानि ॥ ३५ ॥ अथ राजसूयोवरुणस्यार्षम् एषते पार्थिवमग्निनेत्रेभ्यो देवार्षाण्याध्याया-
दशाद्यानि दैवान्यग्नेसहस्व देवश्रवादेववातश्च भारतावाग्नेयीमनुष्टुभमुपाᳫंशोस्त्रीणि रक्षोघ्नानि
सविताद्वेषजमानः ॥ ३६ ॥ इति॰ संहितायां नवमोऽध्यायः ॥९॥ अपोदेवाऽआपीत्रिष्टुप् वृष्णऽऊर्मि-
र्लिङ्गोक्तानि मधुमतीरनाधृष्टाआपेसोमस्य चर्माग्नये लिंगोक्तान्यनिभृष्टमापᳫंसधमादोवारुणीत्रिष्टुप्
क्षत्रस्य चतुर्णांतार्प्यपांड्वाधीवासोष्णीषाणींद्रस्यधनुर्म्मित्रस्य बाहूत्वयायंधनुर्द्दवाबाणामिषवऽआविः
प्राजापत्यंपराणि लिंगोक्तानि ॥ ३७ ॥ अवेष्टामृत्युनाशनं प्राचीं पंचानां यजमानःप्रत्यस्तमासुरं
मृत्योरोजोसिरुक्मोहिरण्यरूपौ मैत्रावरुणीत्रिष्टुब्यजुरन्तासोमस्यसुन्वन्प्रपर्वतस्यापीत्रिष्टुब्विष्णो-
स्त्रीणिलिंगोक्तानि सुन्वन्प्रजापतेन प्राजापत्यात्रिष्टुब्यजुर्मध्याअयममुष्ययजूरुद्रयद्रौद्रम् ॥ ३८ ॥
इंद्रस्यलिंगोक्तानिमाते संवरणः प्राजापत्यऽऐंद्रींत्रिष्टुभमग्नये लिंगोक्तानि पृथिविमातर्भूमिर्हᳫं-
सोवामदेवः सौरीᳫंसप्रपंचपरब्रह्माभिधायिनीमतिजगतीमियच्छतमानावूर्गसिशाखेन्द्रस्य बाहूस्यो-
नास्यासंदीक्षत्रस्याधीवासᳫंस्योनाᳫंसुन्वन्निषसाद शुनःशेपोवारुणीं गायत्रीमभिभूरस्यक्षायज

मानोवाब्रह्मँस्त्वमामंत्रणानि पंच लिंगोक्तानींद्रस्य स्फ्योग्निः पृथुराग्नेयꣳस्वाहाकृता अक्षाः सवित्रालिंगोक्तदैवतम् ॥ ३९ ॥ अथ चरकसौत्रामण्यश्विनोरार्षम् अश्विभ्यां त्रीणि लिंगोक्तानि वायुः सौमी गायत्री कुविदृच꣡सुकीर्तिः काक्षीवतऽआद्या सौम्यनिरुक्ता त्रिष्टुब्युवमनुष्टुप्पुत्रमिवत्रिष्टुबश्विसरस्वतींद्रदेवत्येअश्विसरस्वतींद्रदेवत्ये ॥ ४० ॥ इति० संहितायां दशमोऽध्यायः ॥१०॥ इतिसर्वानुक्रमणिकायां प्रथमोऽध्यायः ॥ १ ॥ अथाग्निंप्रजापतिरपश्यत् ॥ साध्यावापश्यन्त्सोग्निःपंचचितिकः प्रथमाचितिः ॥ प्रजापतेर्द्वितीयादेवानांतृतीयेंद्राग्न्योर्विश्वकर्मणश्चतुर्थ्यर्षीणां पंचमी परमेष्ठिनोऽथ प्रतिकर्मदर्शिनो युञ्जानोष्टौसावित्राणिसवितापश्यदाद्यातृतीयाचानुष्टुप्चतुर्थीषष्ठ्यौ जगत्यौ द्वितीयागायत्रीपंचमीत्रिष्टुबिमंनोयजुरंतागायत्र्यनवसानाऽआददेभ्रिर्हस्तेनुष्टुब्यजुरंता ॥ १ ॥ प्रतूर्त्तनाभानेदिष्टऽआश्वीमास्तारपंक्तियुंजाथां कुश्रिगार्दभीं गायत्रींयोगेयोगेशुनःशेप आजींप्रतूर्वंस्त्रिष्टुब्विराड्रूपायजुर्गर्भोरुयजुःपृथिव्यास्त्रीण्याग्नेयान्यन्वग्निराग्नेयीं त्रिभष्टुं पुरोधसऽआगत्य मयोभुवऽआश्वीमनुष्टुभमाक्रम्यानुष्टुप् द्यौस्तेबृहत्युत्क्रामविराडुदक्रमीत्रिष्टुबात्वाद्वे गृत्सम-

दआग्नेऋषौपरिसोमकोगायत्रीं परित्वापायुरनुष्टुभंत्वामग्नेगृत्समदोजगतीम् ॥ २ ॥ पृथिव्याऽआ-
ग्नेयं। अपांपुष्करपर्ण्णं स्वराट्पंक्तिःशर्मद्वेऽअनुष्टुभौकृष्णाजिनपुष्करपर्ण्णे पुरीष्योग्निस्त्वामग्नेतृचं-
भारद्वाजऽआग्नेयं गायत्रंऽसीदहोतर्देवश्रवादेववातश्च त्रिष्टुभं निहोतागृत्समदःसंऽसीदस्वप्रस्कण्वो-
बृहतीम् ॥ ३ ॥ अपोदेवीः सिंधुद्वीपऽआपीन्यंकुसारिणीं संतेत्रिष्टुप्पार्थिवोर्द्ध्वोवायव्योर्द्ध्वः
सुजातोनुष्टुब्वाग्नेयीऽउदुतिष्ठविश्वमनाः पथ्याबृहतीमूर्द्ध्वःकण्वऽउपरिष्टाद्बृहतीं सजातस्त्रितस्त्रिष्टुभ-
ंस्थिरोरासभेऋषनुष्टुबुष्णिग्वाशिवोभवाजीपथ्या बृहती प्रेतुलिंगोक्तामहापंक्तिर्द्व्यवसानाग्नेगायत्र्ये-
कपदाग्नेऋषातमग्निमाग्नेये ओषधयस्त्रिष्टुबनुष्टुभावोषधिदेवत्येअव्यस्यन्नाग्नेयोर्द्ध्वर्चेविपाजसोत्कीलः-
कात्यआग्नेयीं त्रिष्टुभम् ॥ ४ ॥ आपोह्यापंऽसिंधुद्वीपस्तृचंगायत्रंमित्रउपरिष्टाद्बृहतीमैत्रीरुद्रा अनुष्टुब्-
रौद्रीसंऽसृष्टां द्वे सिनीवालीदेवत्येउखामादित्यामखस्य मृत्पिंडोवसवस्त्वा लिंगोक्तानि सर्वत्रादित्यै-
रास्नादितिरौषंकृत्वायादित्योष्णिगदितिरावटंदेवानां पंचौखानि मित्रस्यविश्वामित्रोमैत्रीं देवस्त्वा

१ गायत्री.

सावित्री बृहत्युत्थायपूर्वोर्द्धर्चैऔषऽउत्तरोमैत्रः ॥ ५ ॥ आकूति लिंगोक्तान्यौदृभणानि मास्यौख्यौ-
गायत्री त्रिष्टुभावग्निश्च पादाआग्नेयोद्गृन्नः सोमाहुतिराग्नेयीं गायत्रीं परस्याविरूपऽआंगिरसः
परमास्याऽआरुणिरनुष्टुभं यदग्नेद्वेजमदग्निःअहरहर्नाभानेदिष्ठस्त्रिष्टुभौ याःसेनाऽअनुष्टुभः सर्वाऽ-
आग्नेय्योंत्योपरिष्टाद्बृहती ॥ ६ ॥ इति० संहितायां एकादशोऽध्यायः ॥ ११ ॥ दृशानोवत्सप्री
त्रिष्टुभ६रौक्मींन्नक्तोषासा कुत्सऽआग्नेयीं विश्वाश्यावाश्वःसावित्रीं जगतीꣳसुपर्णः कृतिश्चतुर-
वसानागारुत्मती विषघ्नी विष्णोर्लिंगोक्तान्यक्रंदद्वत्सप्रीराग्नेयीं त्रिष्टुभमग्नऽऊर्ध्वबृहत्यग्ने महाबृहती
पुनर्गायत्र्यावात्वाध्रुवोऽनुष्टुभमुदुत्तम६शुनःशेपोवारुणींत्रिष्टुभमग्रेत्रितऽआग्नेयीꣳह६सऽउक्ताजग-
तीह यजुरन्तांतेबृहद्यजुःसीदत्वमाग्नेयीं त्रिष्टुभमंतरग्नेनुष्टुभौ ॥ ७ ॥ दिवस्पर्याग्नेयंत्रैष्टुभंद्वादशर्च्चं
वत्सप्रीर्भालंदनः समिधाग्निं विरूपाक्षऽआंगिरसऽआग्नेयं गायत्रीमुदुत्वातापसोनुष्टुभं प्रेदनुष्टुप्प्र-
जायमग्नेयीं वसिष्ठस्य त्रिष्टुभमापोदेवीराप्यप्स्वग्ने विरूपऽआग्नेयींगायत्रींगर्भोऽअसितिस्त्रोऽनुष्टुभो-
बोधामे दीर्घतमास्त्रिष्टुभ६सबोधिसोमाहुतिराग्नेयीं यजुरंतां गायत्रीं यजुर्वैश्वकर्म्मणं पुनस्त्वा-

त्रिष्टुबाग्नेयी ॥ ८ ॥ अपेतालिंगोक्तबहुदेवत्यासंज्ञानमूषदैवत्यमग्नेः सिकताश्रितः परिश्रितोयद्ःसः
पंचर्चमाग्नेयं त्रैष्टुभं विश्वामित्रश्चतुर्थ्यनुष्टुप्अयंतेनुष्टुप्त्विदैष्टकेलोकंलिंगोक्तानुष्टुप्ताऽअस्यापींद्रि-
यमेधऽऐंद्रऽइंद्रजेतामाधुच्छंदसऐंद्रीꣳसमितंचतस्रोह्यग्निदेवत्याउष्णिगुपरिष्टाद्बृहत्युष्णिक्पंक्तयो-
मातेवो खास्तुतिस्त्रिष्टुप् ॥९॥ असुन्वंतं नैर्ऋतं तृचं त्रैष्टुभं यतेयजमानदेवत्यानमोविभूतिदेवत्येकपदा
निवेशनऽआग्नेयीं त्रिष्टुभं विश्वावसुर्देवगंधर्वः सीराद्वे सीरदेवत्येबुधः सौम्योगायत्री त्रिष्टुभौशुनंच-
तस्रः सीतादेवत्याः कुमारहरितोद्वे त्रिष्टुभौ तृतीयापंक्तिश्चतुर्थ्यनुष्टुब्विमुच्यध्वमानडुहीगायत्री
सजूर्लिंगोक्तदैवतम् ॥ १० ॥ याऽओषधीःसप्तविꣳशतिरनुष्टुभऽओषधिस्तुतिमाथर्वणोभिषङ्मुंचंतु-
बंधुर्द्वादशानारभ्याधीताःमामाहिरण्यगर्भः कार्यात्रिष्टुभमभ्यावर्त्तस्वोष्णिगाग्नेयी अग्नेयद्गायत्रीषं
त्रिष्टुबग्नेतवपावकोग्निराग्नेयꣳषड्चंप्रथमेविष्टारपंक्तिस्तिस्रःसतोबृहत्यऽउपरिष्टाज्ज्योतिः षष्ठ्याप्याय-
स्वगोतमः सौम्योगायत्री त्रिष्टुबुष्णिहः आतेवत्सारस्तुभ्यंताह्वेविरूपस्तिस्रो गायत्र्यऽआग्नेय्यः ॥११॥
इति० संहितायां द्वादशोऽध्यायः ॥ १२ ॥ मयिककुबाग्नेयीब्रह्मादित्यदेवत्यात्रिष्टुप्हिरण्यगर्भः

कार्यींत्रिष्टुभन्द्रप्सोदेवश्रवाऽआदित्योनमोस्तुसार्प्यंतृचमानुष्टुभंकृणुष्वपंचप्रतिसराराक्षोघ्नादेवाना-
मार्षँसर्वास्त्रिष्टुभऽआग्नेयीर्वामदेवश्चापश्यदग्नेष्टायजुराग्नेयमिंद्रस्यैंद्रंभुवस्त्रिशिराऽआग्नेयींत्रिष्टुभम्
॥ १२ ॥ ध्रुवास्यूर्ध्वबृहतीप्रजापतिरनुष्टुप्भूरासिप्रस्तारपंक्तिरासाँस्वयमातृणादेवताविश्वस्माइत्ये-
तस्य च यजुषः कांडात्कांडादानुष्टुभंद्व्यृचमग्निनादृष्टंदूर्वेष्टकादैवतं यास्तऽआग्नेयं द्व्यृचमानुष्टुभमिन्द्रा-
ग्निभ्यां दृष्टं विराडयंलोकःस्वराडसौलोकः प्रजापतिष्टाविश्वज्योतिषं मधुश्चर्तुदैवतमषाढासिसविता-
पश्यद्देवावापश्यन्निष्टकादैवतम् ॥ १३ ॥ मधुवातावैश्वदेवंतृचंगायत्रंगोतमोपांगंभन्पङ्क्तिस्त्रीन्त्समुद्रां-
स्त्रिष्टुप्कौर्म्यं द्व्यृचं ध्रुवासित्रिष्टुविषेबृहत्यौरवं द्व्यृचमग्नेयुक्ष्वाग्नेयं द्व्यृचं गायत्रमाद्यायां भरद्वाजोद्वितीि-
यस्यां विरूपः सम्यक्त्रिष्टुब्लिंगोक्तदेवताः चेत्वाबृहत्यग्निर्ज्योतिषोष्णिगादित्यंगर्भं पंचर्चमाग्नेयं त्रैष्टु-
भमिमंमापंचर्चमाग्नेयं त्रैष्टुभमेवद्वेद्वेचांतेयजुषीत्वंयविष्ठोशनाः काव्यआग्नेयीमनिरुक्तांगायत्रीमपां-
त्वाविँशतिरिष्टकान्ययंपुरःपंचाशत्प्राणभृद्देवत्यानि लोकंताऽइंद्रं तिस्रः प्रतीकोक्ताः एवँसर्वत्र
॥ १४ ॥ इति० संहितायां त्रयोदशोऽध्यायः ॥ १३ ॥ अथ द्वितीया चितिः ॥ ध्रुवक्षितिः पंचाश्वि-

न्यस्तासां प्रथमाविराड्वतस्त्रिष्टुभो यजुरंताः शुक्रश्चर्तव्यऽसजूःपंच विश्वेषां देवानामार्षं ता एव
देवताः प्राणं मे पंच वायव्यान्यपः पंचायानि मूर्द्धावय एकोनविंऽशतिलिंगोक्तदेवतानि ॥ १५ ॥
अथतृतीयेंद्राग्नीअनुष्टुप् पूर्वोर्द्धर्च्चऐंद्राग्नऽउत्तरः स्वयमातृणादेवतोविश्वकर्मावायव्यऽराज्यसि पंच-
दिग्दैवत्यानिविश्वकर्मावायव्यं नभश्चैषश्चर्तव्येआयुर्मे दश लिंगोक्तदैवतानि माच्छंदश्चषड्विंऽशन्मू-
र्द्धानुष्टुब्व्यंत्रीपरोष्णिक्चतुर्दशयजूंऽषि प्राणदैवत्यानि ॥ १६ ॥ अथचतुर्थ्याशुरष्टादशाग्नेर्दशैकया
सप्तदश सर्वाणि लिंगोक्तदैवतानि सहश्चर्तव्यम् ॥ १७ ॥ इति० संहितायां चतुर्दशोऽध्यायः ॥ १४ ॥
अथ पंचमी अग्नेजातानाग्नेऽयौत्रिष्टुभौपोडशीचतुश्चत्वारिंऽशल्लिंगोक्ते अग्नेत्रिष्टुप्एवश्चत्वारिंऽशद्र-
श्मिनैकोत्रिंऽशद्राज्यसि पंचायंपुरः पंचैतानि सर्वाणि लिंगोक्तदैवतानि ॥१८॥ अग्निर्मूर्द्धाग्नेयोनुवाकः
प्रथमस्तृचोगायत्रोद्वितीयस्त्रैष्टुभोभुवंस्तृतीयोजागतोऽयमिहचतुर्थआनुष्टुभः सखायःसं पंचमःप्रगा-
थएनावस्तत्रपूर्वा बृहती सतोबृहत्युत्तराताभ्यां तिस्रोबृहत्यः संपादिताः षष्ठऔष्णिहोग्नेवाजस्य गोत-
मःसप्तमः पुनः ककुभः प्रगाथोभद्रोनस्तत्रपूर्वाककुप्सतोबृहत्युत्तराताभ्यां तिस्रः ककुभः संपादिता-

अष्टमः पांक्तोग्निंतंपद्पांक्तोनवमोग्नेतमग्निꣳहोतारमतिछंदाव्यवसानाग्नेत्वंद्वैपदस्तृचः ॥ १९ ॥ अयमग्निर्विरूपोबोधिबुधगविष्ठिरोजनस्यसुतम्भरः सखाय इषःसꣳसमित्संवननस्त्वांप्रस्कण्व एनावो वसिष्ठोऽग्नेवाजस्यगोतमोभद्रोनः सौभरिरग्निं तं कुमारवृषौ येनाष्टावाग्नेय्यः षट्त्रिष्टुभो द्वे अनुष्टुभौ तदश्वत्तंव्यंपरमेष्ठीसौरं प्रोथदश्वोवसिष्ठस्त्रिष्टुभमाग्नेयीमायोर्द्वेस्वयमातृणदैवत्ये सहस्रस्यपंचाग्नेयानि ॥ २० ॥ इति० संहितायां पंचदशोऽध्यायः ॥ १५ ॥ रौद्रोऽध्यायः परमेष्ठिन आर्ष देवानां वा प्रजापतेर्वाऽद्योनुवाकः षोडशर्च्च एकरुद्रदेवत्यः प्रथमागायत्रीतिस्रोऽनुष्टुभस्तिस्रःपङ्क्तयः सप्तानुष्टुभोद्वेजगत्यौ मानोद्वेकुत्सः ॥ २१ ॥ अंत्यानुवाकेसप्तैकरुद्रस्तुतिः आद्योपरिष्टाद्बृहती द्वितीया जगती कुत्सस्य तृतीयानुष्टुब्द्वे त्रिष्टुभौ द्वे अनुष्टुभावसंख्याता बहुरुद्रदेवत्यादशानुष्टुभोमंत्राऽअवतानसंज्ञकास्ततोऽत्यानित्रीणियजूꣳषि बहुरुद्रदेवत्यानि प्रत्यवरोहसंज्ञकामंत्राः ॥२२॥ मध्ये सर्वाणि यजूꣳषिहिरण्यबाहवइति तिस्रोऽशीतयोरुद्राणां तेषामुभयतोनमस्कारा अन्येन्यतरतोनमस्कारा अपरेजातानामरुद्राः सभाभ्यइत्यादयो नमोवःकिरिकेभ्यइत्यग्निवायुसूर्यहृदयभूताः पंचव्याहृतयोबहु-

रुद्रदेवत्याः ॥ २३ ॥ इति० संहितायां षोडशोऽध्यायः ॥ १६ ॥ अश्मन्मारुतमश्मँस्ते इमामरुषा-
शीर्ष्वद्विष्मऽआभिचारिकीमिमामऽआग्नेयमृतवोबृहतीपंक्तिर्वा समुद्रस्य द्वे गायत्र्यावुपज्मं जगती
त्रिष्टुब्वाऽपामिदं बृहत्यग्नेपावकवसूयवः सनोमेधातिथिःपरेतेआग्नेय्यौ गायत्र्यौ पावकया जगती
भरद्वाजो नमस्ते बृहतीमाग्नेयीमृषिसुता लोपामुद्रा ॥ २४ ॥ नृषदे पंचाग्नेयानि ये देवा जगत्यौ
प्राणदेवत्ये प्राणदा बृहतीपंक्तिर्वाऽऽग्नेय्याग्निस्तिग्मेनाग्नेयीं गायत्रीं भरद्वाजोयऽइमा वैश्वकर्म्मणी-
त्रिष्टुभोविश्वकर्माभौवनः ॥२५॥ आशुरैन्द्रीर्द्वादश त्रिष्टुभोऽप्रतिरथोवस्त्रष्टानुष्टुब्विषुदेवत्याप्रेतयोद्ध्रु-
न्स्तौत्यनुष्टुब्वसौयामारुतीत्रिष्टुब्यत्रलिंगोक्तदेवता पंक्तिर्मर्म्माणि लिंगोक्तैवत्रिष्टुबुदेनंतिस्रोनुष्टुभ-
ऽआद्याग्नेयीद्वितीयैंद्री तृतीया लिंगोक्तदेवता पंचदिशः पंचयज्ञाग्निसाधनवादिन्यऽआद्येद्वे त्रिष्टुभौ
तृतीया पंक्तिर्बृहती वा चतुर्थीबृहत्येवान्त्यात्रिष्टुब्विमानो द्वे आदित्यदेवत्येऽआद्या विश्वावसोर्द्वितीया-
प्रतिरथस्यदेवहूर्विधृतिरनुष्टुब्यज्ञदेवत्या वाजस्यैंद्र्यनुष्टुबुद्ग्राभमैंद्राग्न्यनुष्टुबेव ॥२६॥ क्रमध्वंपंचाग्नेय्य-
ऽआद्यानुष्टुप्ततस्त्रिष्टुप्ततोबृहतीपिपीलिकमध्या ततोनुष्टुप्त्रिष्टुबंत्या अग्नेसहस्राक्षविराडाग्नेयीसुप-

ण्णौद्वेपंक्तित्रिष्टुभौताꣳसवितुःसावित्रीं त्रिष्टुभं पुरस्ताज्ज्योतिषंकण्वोददर्श विधेमाग्नेयीं गृत्समदस्त्रिष्टुभमस्यास्त्रिस्थानाग्निर्देवता प्रेद्धोविराडाग्नेयी वसिष्ठस्य चित्तिं वैश्वकर्मण्यतिजगती सप्तत्ऽआग्नेयी त्रिष्टुप्सप्तऽऋषीणाम् ॥ २७ ॥ शुक्रज्योतिः षण्मारुत्यऽआद्या चतुर्थीचोष्णिग्द्वितीयातृतीयाच्चगायत्री पंचमीजगती षष्ठीगायत्र्युष्णिग्वाइन्द्रंदैवीमारुतमिमंत्रयोदशर्चऽआग्नेयस्त्रैष्टुभोऽनुवाको यज्ञस्तुतिर्घृतस्तुतिर्वावसोर्द्धाराभिवादिनी वा घृतंमिमिक्षेगृत्समदः समुद्राद्वामदेवश्चत्वारिशृङ्गायज्ञपुरुपदेवत्यऽऋषभोमंत्रः ॥ २८ ॥ इति० संहितायां सप्तदशोऽध्यायः ॥ १७ ॥ वाजश्चदेवानामार्षम् एतैर्यजुर्भिर्यजमानोग्नेः कामान्याचते वाजप्रसवीयꣳसप्तर्च विश्वेत्रैष्टुभं वैश्वदेवं लुशोधानाकः वाजोनस्तिस्त्रोन्नदेवत्या आद्यानुष्टुब्द्वे त्रिष्टुभौ संमाविराजावाग्नेय्यौ सरस्वत्यै लिंगोक्तदेवतम् ॥ २९ ॥ ऋताषाड्गन्धर्वाप्सरसः सनः प्राजापत्या प्रस्तारपंक्तिः समुद्रोसि वाय्व्यानि त्रीणि रुचमाग्नेय्यनुष्टुप्त्वा वारुणीं त्रिष्टुभꣳशुनःशेपः स्वर्णाग्नेयानि पंचाग्निंयुनज्म्याग्नेय्यस्तिस्रऽआद्येद्वे त्रिष्टुभौ पंक्तिस्तृतीयादिवोद्वेआग्नेय्यौ परौष्णिग्ब्रहापदपंक्तीऽइष्टोयज्ञोभृचं यजमानाग्निदेवत्यं गालवऽआद्योष्णि-

ग्द्वितीयागायत्री ॥ ३० ॥ यदाकूतादष्टर्चमाग्नेयम् विश्वकर्म्मणस्तृतीया दैवीवाद्याजगती तिस्रस्त्रि-
ष्टुभश्चतस्रोनुष्टुभोग्निरस्म्यश्यद्वैतवादिनीं त्रिष्टुभं देवश्रवादेववातश्च भारतावृचोयजुर्वैअग्नेयोनुष्टुबा-
ग्नेयी ॥ ३१ ॥ वार्त्रहत्याय सप्तर्चमिन्द्रोऽपश्यत् । आद्ये द्वे वार्त्रघ्न्यौगायत्रीत्रिष्टुभौ विश्वामित्रस्य
चविनोऽनुष्टुप्स्वगोनत्रिष्टुप्प्रथमा०ंशासोभारद्वाजोद्वितीयांजयऽऐंद्रोद्वेवैश्वानऽर्ष्यौगायत्रीत्रिष्टुभौ
पृष्टोदिविकुत्सस्य चाश्यामद्वेत्रिष्टुभावाग्नेऽर्ष्यौ कामवत्यावश्यामभरद्वाजस्य च वयंते कात्यस्योत्कीलस्य
च धामच्छदनुष्टुब्वैश्वदेवी ॥ ३२ ॥ इति० संहितायां अष्टादशोऽध्यायः ॥ १८ ॥ अथ सौत्रामणी
प्रजापतेरार्षम् अश्विनोः सरस्वत्याश्च स्वाद्वींत्वानुष्टुप्सुरासोमदेवत्या सोमोसि चत्वारि सौराणि परि-
तोभारद्वाजः सौमीं बृहतीं वायोस्तृचोगायत्रः सौम्यऽआभूतेर्ब्रह्मक्षत्रं त्रिष्टुप्सुरासोमदेवत्या नानाहि
जगती सुरासोमदेवत्या तेजोसि पयोदेवत्यान्योजोसि सुरादेवत्यानि षाठ्याग्रंहैमवर्चैरनुष्टुब्विषूचि-
कास्तुतिर्यदापिपेषाग्नेयी बृहती सम्पृचस्थपयोग्रहाः विप्रचस्थ सुराग्रहाः देवायज्ञंब्राह्मणानुवाको वि८
शतिरनुष्टुभःसोमसंपत् ॥ ३३ ॥ सुरावंतंचतुर्ऋचंत्रैष्टुभं अश्विसरस्वतींद्रदेवत्यांपितृभ्यः सप्त पित्र्याणि

पुनन्तुमा नवर्चं पावमानमाद्येद्वे पित्र्येअनुष्टुभौ प्रजापतिस्तृतीयां वैखानसऽआग्नेयीं गायत्रीं चतुर्थीलिंगोक्तदेवतानुष्टुप्पंचम्याग्नेयीगायत्री षष्ठ्याग्नेयीब्राह्मी च गायत्री ब्राह्मस्तृतीयःपादःसौमी-[1]सावित्र्यष्टमी नवमीत्रिष्टुब्वैश्वदेवी येसमानाऽअनुष्टुभौपित्र्याद्या द्वितीया यजमानाशीर्द्वेस्तृतीत्रिष्टुब्देवपानपितृपाणौपंथानौब्रवीतीदꣳहविस्त्र्यवसानाष्टिर्यजमानाशीः ॥ ३४ ॥ उदीरतांत्रयोदशर्चंपैत्र्यं त्रैष्टुभꣳशंखएकादशी तु जगत्याच्याजानुदशर्चौनुवाकोनवपित्र्या दशम्यैंद्रीगायत्री तृतीयाचतुर्थीनवम्योऽनुष्टुभस्त्रिष्टुभऽइतराः सोमोराजाष्टर्चमश्विसरस्वतीन्द्राऽ अपश्यन्नद्यास्तिस्रोमहाबृहत्यऽउपान्त्याचचतुर्थ्यन्ते अतिजगत्यौ शेषेअतिशाक्वर्यौत्र्यवसाने सीसेनतंत्रमश्विसरस्वतींद्रदेवत्याः षोडशजगत्यः ॥ ३५ ॥ इति० संहितायां एकोनविंशोऽध्यायः ॥ १९ ॥ क्षत्रस्ययोनिर्द्विपदागायत्री-आसन्दीदेवताकामात्वाकृष्णाजिनं मृत्योरुक्मावश्विनोर्भैषज्येनलिंगोक्तदेवतानि त्रीणि कोसिप्राजापत्यागायत्री शिरोमेपंचर्चमिन्द्रशरीरावयवदेवताकं तृतीयागायत्र्यंत्यामहापंक्तिस्त्र्यवसानानुष्टु-

१ सप्तमी ।

भौत्याः प्रतिक्षत्रे वैश्वदेवं त्रयादेवा दैवीपंक्तिस्त्र्यवसाना प्रथमाद्द्वितीयैर्वैश्वदेवमाशीर्लिंगं लोमान्य-
नुष्टुब्लिंगोक्तदेवता ॥ ३६ ॥ षड्देवास्तिस्रोऽग्निवायुसूर्यदेवत्याऽअनुष्टुभः कूष्माण्डीर्यद्ग्रामे लिंगोक्त-
देवतꣳसमुद्रेतेद्विपदा विराडापी द्रुपदादिवानुष्टुबाप्युद्वयꣳसौरुर्यनुष्टुप्प्रस्कण्वस्यापोऽअद्याग्नेयी
पंक्तिरेधोसिसमिद्देवत्ये यजुषी समाववर्त्यनिरुक्तागायत्री वैश्वानरज्योतिर्यजुरभ्यादधाम्याग्नेयं तृच-
मानुष्टुभमाश्वतराश्विरꣳशुनासौर्य्यनुष्टुप्सिंचंतिपरिसौयैन्द्रीचानुष्टुब्धानावंतमैंद्रीगायत्री विश्वा-
मित्रस्य च बृहदिंद्राय बृहती नृमेधपुरुषमेधयोरध्वर्योगायत्री ॥ ३७ ॥ योभूतानामात्मप्रवादा-
पंक्तिर्नारायणीयाकौण्डिन्यस्यप्राणपामे द्वे अनुष्टुबुपरिष्टाद्बृहत्यौ लिंगोक्तदेवते समिद्धऽइंद्रऽएका-
दशाप्रीस्त्रिष्टुभऽआंगिरसऽइध्मस्तनूनपान्नराशꣳ सऽइडोबर्हिर्द्वारऽउषासानक्ता दैव्याहोतारा तिस्रो-
देवीस्त्वष्टा वनस्पतिः स्वाहाकृतयऽइत्येताऽआप्रीदेवताऽआयातु सप्तत्रिष्टुभऐंद्र्यऽआमन्द्रैर्बृहत्यायातु
वामदेवस्त्रातारं गर्गऽआमन्द्रैर्विश्वामित्रऽएवेद्वासिष्ठः ॥ ३८ ॥ अथहोत्रंत्रिपशोः समिद्धोऽअग्नि-
राप्रीर्द्वादशविदर्भिराश्विसरस्वतीन्द्रदेवत्या अनुष्टुभोश्विनाहविस्तिस्रोनुष्टुभऽएकैकाश्विसरस्वतींद्र-

देवत्याःयइंद्रंसवितृवरुणदेवत्यास्तिस्रोऽनुष्टुभोऽश्विनागोभिस्तिस्रोनुष्टुभो युवंपुत्रमिवानुष्टुप्त्रिष्टु-
भौयस्मिन्नश्वासऽआग्नेय्यौ जगतीत्रिष्टुभावश्विनातेजसैकादशर्चं¹शस्त्रंगोमद्वृत्समदस्तृचमाश्विनं
गायत्रं पावकानो मधुच्छंदाः सारस्वतमिंद्रायाह्येंद्रंमधुच्छंदाएवानुक्तमानुष्टुभमाश्विसरस्वतींद्रदेव-
त्यम् ॥ ३९ ॥ इति० संहितायां विंशोऽध्यायः ॥ २० ॥ इमंमे गायत्रीत्रिष्टुभौवारुण्यौशुनःशेपस्त्वन्न-
त्रिष्टुभावावारुण्यौ वामदेवो महीसूषुत्रिष्टुबादित्या सुत्रामाणंगयः प्लातः सुनावन्नौस्वर्ग्यागायत्र्या-
नोमैत्रावरुणींगायत्रींविश्वामित्रः प्रबाहवावासिष्ठस्त्रिष्टुभ¹ समिद्धोऽअग्निरेकादशाप्रमानुष्टुभ¹स्वस्त्या-
त्रेयस्यार्ष वयोधाइंद्रोदेवता वसंतेनऽऋतुना षडृचामानुष्टुभंलिंगोक्तदेवत¹होतायक्षद्वादशाप्रीः
प्रैषाअश्विसरस्वतींद्रदेवत्या अश्विनौछागस्यसप्तलिंगोक्तदेवताःप्रैषाः वनस्पतिमभियूपोऽग्निॐस्विष्ट-
²कृदग्निर्देवंबर्हिरेकादशानुयाजप्रैषा अश्विसरस्वतीन्द्रदेवत्याऽअग्निमद्यसूक्तवाकप्रैषोलिंगोक्तदेवतो-
लिंगोक्तदेवतः ॥ ४० ॥ इति० संहितायां एकविंशोऽध्यायः ॥ २१ ॥ इति सर्वानुक्रमणिकायां

१ इद्र    २ तस्विष्टॐक्र.

द्वितीयोऽध्यायः ॥ २ ॥ ॐअथाश्वमेधश्चतुरोऽध्यायान्प्रजापतिरपश्यत् तेजोसिसौवर्णं निष्कमिमास-
गृभ्णन्संवत्सरो यज्ञपुरुषस्त्रिष्टुभमभिधालिंगोक्तानि यो॒ऽअर्वन्तंगायत्र्यर्द्धेनाश्वस्तुतिः परोर्द्धेलिंगो-
क्ताऽग्नयेलिंगोक्तान्येव हिंकारायेत्यश्वस्यैकोनपंचाशच्चेष्टितानि हिरण्यपाणिंपंचर्चं१८सावित्रं गायत्र-
माद्यां मेधातिथिरग्नि१ँस्तोमेनाग्नेयंतृचंगायत्र१८सुतंभरोविश्वामित्रोविरूपोयथासंख्यमजीजनोहि-
पावमानीक्रुतिंपिपीलिकमध्यामनुष्टुभं त्र्यरुणत्रसदस्यूर्विभूरश्वदैवतं देवादैवमिहरतिराग्नेयानि
चत्वारि कायौद्भुभणानिलिंगोक्तान्याब्रह्मालिंगोक्तान्येवाध्यायात् ॥ १ ॥ इति० संहितायां द्वाविंशो-
ऽध्यायः ॥ २२ ॥ प्रजापतये प्राजापत्यम् यस्ते देवं यः प्राणतस्त्रिष्टुप्कायी हिरण्यगर्भस्य युञ्जन्ति-
मधुच्छन्दाआदित्यदेवत्यांगायत्रीं युंजंत्यस्याश्वस्तुतिर्यद्वातोवृहतीमौ वसवस्त्वालिंगोक्तानिलाजीं ३
नश्वदेवत्यंकःस्विच्चतस्त्रोऽनुष्टुभःप्रश्नप्रतिप्रश्नभूताब्रह्मोद्ये होतुर्ब्रह्मणश्चवायुष्ट्वा लिंगोक्तानि स१८शित-
स्तिस्रोश्वदेवत्याअनुष्टुब्विराड्त्रिष्टुभोऽग्निः पशुराश्वानित्रीण्ययंवेऽनुष्टुवश्वस्तुतिर्गणानांत्वाचत्वारि-
लिंगोक्तानि ॥ २ ॥ उत्सक्त्थ्यागायत्र्याश्री येकादशर्चमानुष्टुभं द्वितीयातूपरिष्टाद्बृहत्यध्वर्य्वादीनां

कुमार्य्यादिभिरश्लीलभाषणं ताऽएवदेवताः दधिक्राव्णोदधिक्रावावामदेव्यः सुरभिमतीमनुष्टुभमाश्वींगायत्रीऽषड्टृचमाश्वमुष्णिगाद्याश्चतस्रोनुष्टुभोंऽत्यात्रिष्टुप्कस्त्वाषड्टृचमाश्वमाद्यागायत्रीपंचानुष्टुभः कःस्विदष्टादशर्च्चं ब्रह्मोद्यꣳहोत्रादीनां प्रश्नप्रतिप्रश्नभूतमाद्याश्चतस्रोनुष्टुभः कास्विदाद्याश्चतस्रोनुष्टुभः कास्विदाद्याश्चतस्रश्चांत्यादशात्रिष्टुभः सुभूरनुष्टुब्लिंगोक्तदेवताहोतायक्षत्प्राजापत्यः प्रैषप्रजापतेर्हिरण्यगर्भः प्राजापत्यांत्रैष्टुभम् ॥ ३ ॥ इति० संहितायां त्रयोविंशोऽध्यायः ॥ २३ ॥ अश्वस्तूपर इत्यादयः पशवोऽध्यायेनोक्ता देवतावापर्यग्यास्तथारोहितादयोगुणयुक्ताऽआरण्याश्च कपिंजलादयऽआध्यायात् शादंदद्भिरित्यादित्वगित्येतदंतं द्रव्यदैवतमुक्तम् अश्वस्तूपरोब्राह्मणोऽध्यायः॥४॥ इति० संहितायां चतुर्विंशोऽध्यायः ॥ २४ ॥ शादंदद्भिस्त्वचांतश्चजुंबकायवारुणीं द्विपदां मुंडिभओदन्यएषा चाधनाशन्यंतर्ज्जले षस्येमे कारुयौत्रिष्टुभौ हिरण्यगर्भःप्राजापत्यऽआनोदशर्च्चं जागतं वैश्वदेवं गोतमःस्वस्तिनो विराट्स्थाना भद्रंकर्णेभिस्तृचं त्रैष्टुभं मानोश्वस्तोमीयंदीर्घतमास्त्रैष्टुभंद्वाविꣳशत्यृचमश्वस्तुतिस्तृतीयाषष्ठ्यौ जगत्याविमानुद्वैपदं वैश्वदेवं तृचं भौवनआप्त्यो वा साधन-

भौवनो वा ॥ ५ ॥ इति० संहितायां पञ्चविंशोऽध्यायः ॥ २५ ॥ अग्निश्चसप्तलिंगोक्तानिप्रियोदेवानां
लौगाक्षिरनुष्टुभमनवसानां बृहस्पतेगृत्समदोब्राह्मींत्रिष्टुभमिंद्रगोमन्नैंद्रीगायत्र्यौरम्याक्षिर्क्रतावानं
प्रादुराक्षिर्वैश्वानरीयांवैश्वानरस्य त्रिष्टुभं कुत्सोग्निर्ऋषिराग्नेयीं गायत्रीं वसिष्ठभरद्वाजौमहाँ२ ऽइंद्रो
माहेंद्रींवसिष्ठस्त्वं ऐंद्रींपथ्याबृहतींनोधागोतमोयद्वाहिष्ठंवसूयवआग्नेयीमनुष्टुभमेहिभरद्वाजोगायत्री
मृतवस्तेबृहतीत्युपह्वरेवत्सो गायत्रीं ॥ ६ ॥ उच्चाते गायत्रं तृचᳬसौम्यमामहीयवोनुवीरैर्सुद्गलो
यज्ञपुरुषस्त्रिष्टुभमग्नेपत्नीर्मेधातिथिराग्नेयीं गायत्रीमभियज्ञंतृचमृतुदैवतं मेधातिथिस्त्वायमैंद्रीत्रिष्टु-
भंविश्वामित्रोऽमेवनोजगतींगृत्समदःस्वादिष्ठया मधुच्छंदाः सौम्यावनुक्तानांगायत्रम् ॥ ७॥ इति०
संहितायां षड्विंशोऽध्यायः ॥ २६ ॥ समास्त्वाग्निकोध्यायः प्रजापतेरार्षᳬसामिधेन्यो नवाग्नेऽयस्त्रि-
ष्टुभोऽग्निनादृष्टाऽअग्निर्ऋषिः कर्मांगभूतमग्निᳬस्तौत्यूर्ध्वाद्वादशर्चमाप्रियमौष्णिहं विषमपदं प्राजा-
पत्यमाग्नेयमग्निरपश्यदग्निर्हिप्रजापतित्वेन संस्तूयते तेन प्राजापत्यम् ॥ ८ ॥ पीवोऽअन्ना द्वे वायव्ये
त्रिष्टुभौवसिष्ठऽआपोहद्वे प्राजापत्ये हिरण्यगर्भः प्राजापत्यः प्रयाभिर्द्वे वायव्ये वसिष्ठोनियुत्वान्वा-

यव्या: षड्वायोशुक्रोऽनुष्टुबेकया च त्रिष्टुवंत्यागायत्र्यो नियुत्वान्वायोयेग्रत्समदोवायोशुक्रः पुरुमीढा-
जमीढौ तववायोव्यश्वऽआङ्गिरसोभित्वा वसिष्टऐंद्रंप्रगाथं प्रथमावृहती द्वितीयासतोवृहती त्वामि-
देवऽशंयुर्बार्हस्पत्यः कयानऐंद्रं तृचं गायत्रं वामदेवोऽत्यातु पादनिचृद्यज्ञायज्ञावऽऊर्जोनपातऽशंयुः
पाहिनोगर्भः प्रागाथएतं तृचं प्रागाथमाग्नेयंद्वेबृहत्यौ तृतीयासतोबृहती संवत्सरोऽस्याग्नेयम् ॥ ९ ॥
इति० संहितायां सप्तविंशोऽध्यायः ॥ २७ ॥ इन्द्रमिडः सौत्रामणिकोऽध्यायः एकादशप्रयाजप्रैषा-
ऐंद्रा आप्रीदेवत्या आद्येऽनुवाके देवंबर्हिरनुयाजप्रैषाऐंद्राएकदशैवाश्विमद्यैन्द्रः सूक्तवाकप्रैषस्त्वामद्य
प्रतीक उभयत्रापि समिधानं महद्वायोधस आप्रिय एकादश प्रयाजप्रैरवास्तथैव देवंबर्हिरनुयाज-
प्रैरवाऽअग्निमद्यवायोधसः सूक्तवाकप्रैषः ॥ १० ॥ इति० संहितायां अष्टाविंशोऽध्यायः ॥ २८ ॥
समिद्धोऽअञ्जन्नाश्वमेधिकोऽध्याय आद्या आप्रीस्त्रिष्टुभएकादशाश्वस्तुतिर्बृहदुक्थोवामदेव्योददर्शा-
श्वोवासामुद्रिर्यदक्रंदस्त्रयोदशाश्वस्तुतिस्त्रिष्टुभोभार्गवोजमदग्निर्ददर्शदीर्घतमाश्च समिद्धोऽअद्यद्वा-
दशाप्रीस्त्रिष्टुभोजमदग्निः ॥ ११ ॥ केतुं कृण्वन्नाग्नेयीमनिरुक्तां गायत्रीं मधुच्छन्दाः जीमूतस्येव

पायुर्भारद्वाजः संग्रामांगान्यृक्षोस्तौषीत्सन्नाहंकार्मुकं गुणमार्त्नीतूणं जगत्यर्द्धेन सारथिमर्द्धेन रश्मीन्
हरीन् रथगोपायितॄन् जगत्यालिंगोक्तदेवता द्वाभ्यां त्रिष्टुबनुष्टुब्भ्यामिषुमनुष्टुभाकशां ततोहस्त-
घ्नतं ततस्तृचौ रथदुन्दुभिदेवत्यावैन्द्रोर्द्धर्चौन्त्यः सर्वास्त्रिष्टुभोऽनुक्ता आग्नेय्यः कृष्णग्रीव इत्याद्या
एकादशिन्द्र्योर्द्वयोः पशुदेवता अग्नये गायत्रायेति दश हविषोवेष्टेर्देवता ॥ १२ ॥ इति० संहितायां
एकोनत्रिंशोऽध्यायः ॥ २९ ॥ देवसवितर्द्वावध्यायौ पुरुषमेधोनारायणः पुरुषोददर्श विश्वानिदेव-
गायत्रीᳪंसावित्रीᳪंश्यावाश्वोविभक्तारंमेधातिथिर्ब्रह्मणेब्राह्मणमिति द्वे कंडिके तपसेऽनुवाकश्च
ब्राह्मणम् ॥ १३ ॥ इति० संहितायां त्रिंशोऽध्यायः ॥ ३० ॥ सहस्रशीर्षाषोडशर्चमानुष्टुभं त्रिष्टुबंत्यं-
पुरुषोजगद्बीजमन्त्रदेवताद्भ्यः षड्चउत्तरनारायणोमंत्र आद्यास्तिस्रस्त्रिष्टुभौद्वे अनुष्टुभावंत्यात्रिष्टुप्
॥ १४ ॥ इति० संहितायां एकत्रिंशोऽध्यायः ॥ ३१ ॥ तदेवसर्वमेधोऽध्याय आत्मदैवतः सप्तमेऽहनि
सर्वहोमे विनियुक्तः सर्वमेधं ब्रह्म स्वयंभ्वैक्षत तदीयं मंत्रगणं प्रवायुमच्छेत्येतस्मादाद्येद्वे अनुष्टुभौ
नतस्य द्विपदागायत्री हिरण्यगर्भश्चतस्रोमामाहिᳪसीद्यस्मान्नद्वे एताः प्रतीकचोदिता ब्रह्मयज्ञेऽ-

ध्येयाः सर्वत्रैवमेषोहृचतस्त्रस्त्रिष्टुभ आपोहयश्चित्प्रतीकचोदिते ॥१५॥ वेगस्ततपश्च त्रिष्टुभः सदसस्पतिं तृचेन मेधाकामो मेधां याचते प्रथमा गायत्री लिंगोक्तदेवता द्वितीयाग्नेय्यनुष्टुप्तृतीयालिंगोक्त-देवतानुष्टुबिदंमे मांत्रवर्णिक्यनुष्टुबे तयादेवेभ्यःश्रीकामोयाचते श्रियम् ॥ १६ ॥ इति० संहितायां द्वात्रिंशोऽध्यायः ॥३२॥ अस्याजरासः सप्तदशाग्निष्टुत्याग्निष्टोमिके प्रथमेऽहनि पुरोरुत्रआग्नेय्यऽआद्ये द्वे ऐंद्रवायवस्यास्याजरासोवत्सप्रीर्हरयोधूमकेतवो विरूपोयजमानो द्वे मैत्रावरुणस्य यजमानो गोत-मोद्वे विरूपे शुक्रस्य कुत्सोयमिहमंथिनोवैश्वदेवग्रहग्रहणे त्रीणिशता विश्वामित्रऐंद्राग्नस्याग्निर्वृत्राणि भरद्वाजो वैश्वदेवस्य विश्वेभिः सोम्यंमेधातिथिरायन्मरुत्वतीययोर्द्वे आयत्पराशरः शाक्त्योऽग्नेशर्द्धा-त्रिदुहिताविश्ववारा त्वाꣳहि भरद्वाजस्त्वे अग्नेद्वे बृहत्यावादित्यस्य त्वेऽअग्ने वसिष्ठः श्रुधिप्रस्कण्व आदित्यग्रहग्रहणे विश्वेषामदितिर्वामदेवो गोतमो महोअग्नेः सावित्रस्य लुशोधानाकोऽनुक्तंगयात्रं त्रैष्टुभम् ॥ १७ ॥ इन्द्रस्तुत्युक्थ्येद्वितीयेऽहनि ऐन्द्र्यःपुरोरुचो द्वादशप्रतीकचोदिते च द्वे तिस्रश्चा-पश्चिद्वसिष्ठो गावऽउपपुरुमीढाजमीढौ यदद्य वसिष्ठऽआसुते सुनीतिरातिष्ठतं विश्वामित्रः प्रवः

सुचीकोबृहन्नित्रिशोकऽइंद्रेहि मधुच्छन्दाऽइन्द्रोवृत्रं विश्वामित्रः कुतस्त्वमगस्त्यऽआतद्यौरीवीतिः
शाक्त्यऽइमान्ते कुत्सो जगतीमनुक्तं गायत्रं त्रैष्टुभम् ॥ १८ ॥ सूर्यस्तुत्युक्थ्ये तृतीयेऽहनि सौर्य-
श्चतुर्दश पुरोरुचस्तिस्रश्च प्रतीकोक्ताः विभ्राड्बृहज्जगतीं विभ्राट्सौर्यऽउदुत्यं तिस्रः प्रस्कण्वऽआनो-
गस्त्यो षद्द्य श्रुतकक्षः सुतकक्षौ तरणिः प्रस्कण्वस्तत्सूर्यस्य द्वे कुत्सो बण्महाँ २ द्वे जमदग्निर्बृ-
हतीसतोबृहत्यौ श्रायंतइवनृमेधोबृहतीमद्यादेवाः कुत्सऽआकृष्णेन हिरण्यस्तूप आङ्गिरसो नाख्या-
तऽसौर्यं गायत्रं त्रैष्टुभम् ॥ १९ ॥ वैश्वदेवस्तुतिश्चतुर्थेऽहनि वैश्वदेव्यः पुरोरुच एकादश षट् च
प्रतीकोक्ताः प्रवावृजे वसिष्ठस्त्रिष्टुभं इन्द्रवायूबृहस्पतिंद्वे मेधातिथिरधिनः कुसीदीकाण्वोऽग्न इन्द्र-
प्रतिक्षत्र इन्द्राग्नीमित्रावरुणा जगतीं काश्यपोऽवत्सारोस्मेरुद्राः प्रगाथोवाँचो अद्यकूर्म्मोगार्त्समदो
विश्वेअद्य लुशोधानाको विश्वेदेवाः सुहोत्रोदेवेभ्योहि वामदेवो जगतीमनुक्तं गायत्रं त्रैष्टुभम् ॥२०॥
अथाऽनारस्याधीतं मंत्रगणं अर्वाक्पितृमेधादादित्ययाज्ञवल्क्यौ ददृशतुः प्रवायुं पंचदशर्च्चः पुरो-
रुग्गणो द्वे च प्रतीकोक्ते प्रवायुमृजिश्वो मित्रऽहुवे द्वे मधुच्छन्दामित्रं लिंगोक्ता दस्त्रासुवाकवऽआ-

श्विनीं विदद्यद्यैन्द्रीं कुशिको नहिस्पशं विश्वामित्रो वैश्वानरीमुग्राविघनिनैन्द्राग्नीं भरद्वाजऽउपास्मै
सौमीं देवलोसितोवा येत्वा विश्वामित्रो जनिष्ठाऽउग्रो गौरिवीतिरातु वामदेवस्तृचमैन्द्रं त्वमिन्द्रे-
न्द्रौनृमेधः पथ्याबृहतीसतोबृहत्यौ यज्ञोदेवानां कुत्सोऽदब्धेभिः सावित्रीं जगतीं भरद्वाजः ॥ २१ ॥
प्रवीरयापंचदशर्च्चः पुरोरुग्गणो द्वे च प्रतीकोक्ते प्रवीरया वसिष्ठोवायव्यां काव्ययोराजानेषु दक्ष-
स्तिरश्चीनः परमेष्ठीं प्रजापतिर्भाववृत्तं तृचमारोदसीं जगतीं विश्वामित्र उक्थेभिर्वृत्रहंतमा वसिष्ठ-
ऽउपनः सुहोत्रो वैश्वदेवीं ब्रह्माणिमेऽगस्त्यो द्वे इंद्रमरुत्संवादे तदिदाथर्वणो बृहद्दिवऽइमाऽउत्वा द्वे
बृहत्यौ मेधातिथिरयं सहस्रं मेधातिथिः सतोबृहतीम् ॥ २२ ॥ आनस्त्रयोदशर्च्चः पुरोरुग्गणश्चतु-
र्ऋचं प्रतीकचोदितं चानोवायव्यां जमदग्निरिन्द्रवायूसुसन्दृशैन्द्रवायव्यान्तापसऋधगित्थामैत्राव-
रुणीं जमदग्निरायातमाश्विनीं वसिष्ठः प्रैतु वैश्वदेवींकण्वश्चन्द्रमाः अप्स्वैन्द्रीमारुतीपरिणामवादिनीं
त्रितआस्यो देवंदेवंवो मनुर्वैवस्वतो वैश्वदेवीं दिविपृष्ठोमृधऐन्द्रऽइन्द्राग्नीऽअपात्सुहोत्रोदेवासोहिम-
नुरपाधमद्वेनृमेधोस्येन्मेधातिथिर्दशम्येकादश्यन्त्याश्चसतोबृहत्यः शेषाबृहत्यः शेषाबृहत्यः ॥ २३ ॥

इति० संहितायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ इति सर्वानुक्रमणिकायां तृतीयोऽध्यायः ॥ ३ ॥ यज्जा-
ग्रतः षड़ृचं मानसं त्रैष्टुभꣳशिवसंकल्पः पितुन्नूष्णिहमगस्त्योन्नस्तुतिमन्विच्चतुर्ऋचमानुष्टुभं द्वयो-
रनुमितिर्द्वयोः सिनीवालीसरस्वत्यौ सिनीवालीपृथुष्टुके द्वे गृत्समदस्त्वमग्नेद्वे आग्नेय्यौ जगत्यौ
हिरण्यस्तूप आंगिरसः उत्तानायां द्वे देवश्रवादेववातश्च भारतावाद्यात्रिष्टुब्द्वितीयानुष्टुप्प्रमन्महे
नोधाद्व्यृचमैन्द्रं त्रैष्टुभमिच्छन्तित्वा द्व्यृचमैन्द्रंत्रैष्टुभमेव देवश्रवादेववातश्च भारतौ ॥ १ ॥ अषाढं-
युत्सुगोतमश्चतुर्ऋचं त्रैष्टुभꣳसौम्यमष्टौव्यख्यच्चतुर्ऋचं त्रैष्टुभꣳसावित्रमांगिरसोहिरण्यस्तूपो
द्वितीयाजगत्युभापिवतमाश्विनं तृचमुभापिवतं प्रस्कण्वो गायत्रीमप्नस्वतीमश्विना त्रिष्टुभौ कुत्स
अरात्रि पथ्याबृहतीꣳरात्रिन्देवत्यां कशिपाभरद्वाजदुहितोषस्तदुषस्यापरोष्णिहं गोतमः प्रातरग्निं
वसिष्ठः ससर्चमाद्याजगती बहुदेवत्या पंचभगदेवत्यास्त्रिष्टुभोंत्योषस्याः ॥ २ ॥ पूषन्तव सुहोत्रः
पथस्पथः परिपतिमृजिश्वैतेपौष्ण्यौ गायत्रीत्रिष्टुभौ त्रीणिपदा वैष्णव्यौ गायत्र्यौ मेधातिथिर्घृतव-
तीभुवनानां भरद्वाजो द्यावापृथिव्यां जगतीं येनोलिंगोक्तदेवतां त्रिष्टुभं विहव्याऽआनासत्या हिर-

ऋषिस्त्वष्टिप्रतिपादिका त्रिष्टुभं यज्ञः
पण्यस्तूप आश्विनीमेषवोमारुतीं त्रिष्टुभमगस्त्यः सहस्तोमा ऋषिस्त्वष्टिप्रतिपादिका त्रिष्टुभं यज्ञः
पण्यस्तूप आश्विनीमेषवोमारुतीं त्रिष्टुभमगस्त्यः सहस्तोमा
प्राजापत्य आयुष्यं वर्चस्यं तृचं दक्षउष्णिक्शक्करीत्रिष्टुभोहिरण्यस्तुतिरुतनऋत्विजो वहुदेवत्या-
त्रिष्टुभमिमागिरः कूर्मोगार्त्समदआदित्यदेवत्यां त्रिष्टुभऽसप्तऋषयोऽध्यात्मवादिनी जगत्युत्तिष्ठं-
तृचोब्रह्मणस्पत्य आद्ये वृहत्यौ कण्वोघोरोन्त्यांत्रिष्टुभं गृत्समदोयइमा चतुर्ऋचं प्रतीकोक्तम् ॥ ३ ॥
इति० संहितायां चतुस्त्रिंशोऽध्यायः ॥३४॥ अपेतोऽध्यायः पित्र्यआदित्यस्य देवानां वाआद्यागायत्री
परंयजुःसवितातेगायत्री वायुः पुनातु चत्वारि लिंगोक्तानि सवितातेगायत्री परंमृत्यो संकसुकस्त्रि-
ष्टुभं मृत्युदेवत्याॐशंवातोऽनुष्टुप्वृहत्यौ वैश्वदेव्यावश्मन्वती सुचीकस्त्रिष्टुभं वैश्वदेवीमपाघं लिंगो-
क्तदेवतामनुष्टुभऽशुनःशेपोदुःस्वप्ननाशनीमनड्वाहमानडुह्यनुष्टुप् इमंजीवेभ्यः संकसुकोमृत्युदेवत्यां
त्रिष्टुभमायुष्मानग्नआग्नेयीं त्रिष्टुभं वैखानसःपरीमेऽनुष्टुभमैंद्रीं भारद्वाजः शिरिंविहः क्रव्यादमग्निं
त्रिष्टुभमाग्नेयी दमनो वहवपां जातवेदसी त्रिष्टुप् स्योनापृथिवी मेधातिथिः पार्थिवीं गायत्रीमस्मा-
त्वमाग्नेयी गायत्र्यनिरुक्ता ॥ ४ ॥ इति० संहितायां पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥ ऋचंवाचं पंचा-

ध्यायीं दध्यङ्ङाथर्वणोददर्शाग्निकाश्वमेधिकवर्ज्जमाद्योऽध्यायः शान्त्यर्थोवैश्वदेव आद्यानि यजूꣳषि
षन्मे बार्हस्पत्या पंक्तिः कयात्वमैंद्यनिरुक्ता गायत्रींद्रोविश्वस्यविराड् द्विपदा शन्नोद्वे अनुष्टुभावहानि
द्विपदागायत्री शन्नऽइन्द्राग्नी त्रिष्टुब् गायत्र्यावन्त्याशीर्वौः शांतिर्यजूꣳषि नमस्ते अस्त्वनुष्टुभौ
तच्चक्षुः पुरउष्णिक्सौरी ॥ ५ ॥ इति० संहितायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥ आददेनारिरस्य-
भ्रिदैवतं देवीद्यावापृथिव्यं देव्योवम्र्यो वल्मीकवपेयत्यग्रेवराहविहतामिंद्रस्यौजआदाराः प्रैतु
मखस्याश्वस्यर्ज्जवेषमायदेवस्त्वार्च्चिरसि घर्मदेवत्यानि योघर्मःसआदित्योयएषतपत्यनाधृष्टापुरस्ता-
त्ससपार्थिवानि यजमानाशीर्मधुप्राणदेवत्यानि गर्भोदेवानामवकाशा मामाहिꣳसीरित्येतदन्ताघर्म-
देवत्या धर्तादिवऽऊर्ध्वबृहत्यपश्यङ्गोपां त्रिष्टुभं दीर्घतमाहृदेत्वा परोष्णिक्त्वष्टृमन्तः पत्न्याशीरहः-
केतुना यजुषी घर्मदेवत्ये ॥ ६ ॥ इति० संहितायां सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ आददेदित्यै रज्जुः
इडऽएहि गौर्यस्ते त्रिष्टुभं दीर्घतमाः इन्द्राश्विना वैश्वदेवानि समुद्रायत्वा वातनामानि स्वाहाघर्मा-
यघर्मदेवत्ये विश्वाऽआशा आश्विन्यनुष्टुब् दिविधा घर्मदेवत्यमाश्विनाघर्ममुष्णिगपातां ककुबमेध्य-

स्रेखरः स्वाहापूष्णे सप्तलिंगोक्तदेवतानिस्वाहासंपयोदेवत्यं मधुहुतं घर्म्मों भीमं गायत्रीबृहत्याव-
नवसाने अतिशक्करी वाग्नेयी समस्ता त्र्यवसाना यातेघर्मक्षत्रस्य बृहती चतुःस्रक्तिर्महाबृहती
घर्मैतदनुष्टुबचिक्रदत्परोष्णिक् यावतीद्यावापृथिवी दधिघर्मों मयित्यत्पंक्तिर्यजमानाशीः पयसो
रेतोगायत्र्यनवसाना विषःसंवृग्दधिघर्मोऽनुक्तं घर्मदैवतम् ॥ ७ ॥ इति० संहितायां अष्टात्रिंशो-
ऽध्यायः ॥ ३८ ॥ स्वाहाप्राणेभ्यो मांत्रवर्णिक्योदेवतामनसःकाममनुष्टुब्यजमानाशीः श्रीर्देवता
प्रजापतिःसंभ्रियमाणो यथाकालं प्रायश्चित्तदेवताः सविताप्रथमेहन्प्रत्यहं क्रमेणोग्रश्च मारुती
गायत्री विमुखाख्यो मंत्रोऽश्वो विनियुक्तस्तस्मादाग्निकऽएवास्य ऋषिः परमेष्ठी प्राजापत्योवाग्निꣳहृद-
येनाश्वमेधिकानि त्रीणि तंत्रोक्त एव ऋषिर्लोमभ्यःस्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिꣳशत्
॥ ८ ॥ इति० संहितायां एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ईशावास्यमात्मदेवत्य आनुष्टुभोऽध्यायः
अनेजदेकं त्रिष्टुप् सपरि जगती वायुरनिलं यजुषि ॐ ३ मिति परमाक्षरस्य योगिनामालम्ब-
भूतस्य परस्य ब्रह्मणः प्रणवाख्यास्यास्थूलादिगुणयुक्तस्य ब्रह्म ऋषिछन्दोगायत्रं परमात्मा देवता

ब्रह्मारंभे विरामे च यागहोमादिषु शांतिपुष्टिकर्मसु चान्येष्वपि काम्यनैमित्तिकादिषु सर्वेषु विनि-
योगोऽस्यक्रतोत्रिभिरुर्ग्यजुर्भिरंते यज्ञान्योगी स्मारयत्यन्नेनयान्तेनमस्कारोक्तिर्हिरण्मयेनादित्यो-
पासनम् ॐ ३ मिति नामनिर्देशो ब्रह्मणः खंब्रह्मेत्याकाशरूपमन्ते ब्रह्म ध्यायेत् ॥ ९ ॥ ॥ ४० ॥
अथातश्छन्दोदेवता गायत्र्या अग्निरुष्णिहः सवितानुष्टुभः सोमोबृहत्याबृहस्पतिः पंक्तेर्वरुणस्त्रिष्टुभ-
ऽइन्द्रोजगत्या विश्वेदेवाविराजोमित्रः स्वराजोरुणोतिच्छन्दसः प्रजापतिर्विच्छन्दसो वायुर्द्विपदायाः
पुरुषऽएकपदाया ब्रह्मा सर्वा ऋच आग्नेय्यः सर्वाणि यजूꣳषि वायव्यानि सर्वाणि सामानि
सौराणि सर्वाणि ब्राह्मणानि च स्वाहाकारस्याग्निर्वषट्कारस्य विश्वेदेवाः कर्मारंभे मंत्राणां देवता
वेदितव्याः संन्यस्यमनसिदेवतां ततो हविर्हूयते देवतामविज्ञाय योजुहोति देवास्तस्य हविर्नजुषन्ते
स्वाध्यायमपियोऽधीते मंत्रदेवज्ञः सोऽमुष्मिंल्लोके देवैरपीड्यते तस्माच्च देवता वेद्या मंत्रे मंत्रे प्रय-
ततो मंत्राणां देवताज्ञानान्मंत्रार्थमधिगच्छति मंत्रार्थज्ञानात्तु विधूतपाप्मा नाकमभ्येति न हि
कश्चिदविज्ञाय याथातथ्येन देवताः श्रौतानां कर्मणां विप्रः स्मार्तानां चाश्नुते फलम् ॥ १० ॥ अना-

दिष्टमध्वरादौ सर्वांतकर्मणी परिभाषितं मंत्रगणं वक्ष्यामः सर्वमाग्नेयं गायत्रं गौतमी यऽसर्वऽसा-
वित्रमौष्णिहं भारद्वाजीयऽसर्वऽसौम्यमानुष्टुभमाथर्वणिकऽसर्व वार्हस्पत्यं वार्हतमाङ्गिरसऽसर्व
वारुणं पांक्तमालंबायनीयऽ सर्वमैंद्रं त्रैष्टुभं याज्ञवल्कीयऽसर्वमादित्यदैवतं जागतं कौत्सम् ॥ ११ ॥
ज्योतिष्टोमे दीक्षाप्रभृति वक्ष्यामो दीक्षायां भृगुरग्नाविष्णूगायत्री प्रायणीय आंगिरसोऽदितिरु-
ष्णिक्त्रये विश्वामित्रः सोमोऽनुष्टुवातिथ्ये वसिष्ठो विष्णुर्बृहती प्रवर्ग्ये कश्यप आदित्यपङ्क्तिरुप-
सत्स्वात्रेयउपसद्देवता त्रिष्टुवग्नीषोमीयेऽगस्त्योऽग्नीषोमौ जगती प्रायणीयेऽतिरात्र आग्निवेश्योऽहो-
रात्रे अतिजगतीचतुर्विंऽशत्यहेसौकरायणः संवत्सरः शक्वर्यभिप्लवे षडहे सौपर्णोऽर्द्धमासामासाश्चा-
तिशक्वरीपृष्ठ्येषडहे सायकायनऋतवोष्टिरभिजितिप्रियघृतोग्निरत्यष्टिः स्वरसामसु सरस्वत्यापोधृति-
र्विषुवति रौहिणायन आदित्योतिधृतिर्विश्वजिति सौभरऽइंद्रः कृतिर्गोआयुषो बाष्कलिर्मित्रावरुणौ
प्रकृतिर्दशरात्र आचार्यो विश्वेदेवा आकृतिर्द्वादशरात्रिके पृष्ठ्ये षडहे भाल्लवेयो दिशोविकृतिश्छ-
न्दोमेषु शौल्वायन इमे लोकाः संकृतिर्दशमेहनि पराशरःसंवत्सरोभिकृतिर्महाव्रते शैलिनः प्रजा-

पतिरुक्तोतिरुदयनीयेतिरात्रे भौवायनो वायुश्छन्दाꣳसि सर्वाणि ॥ १२ ॥ ऋषिभिरुपलक्षितं वाक्यं
ऋषयश्छंदोभिरुपलक्षिता देवता मंत्रवर्णाद्दृग्यजुषयोर्विनियोगतश्च विज्ञेयाः सर्वमेतच्छन्दोदैवत-
मार्षं च विज्ञाय यत्किंचिज्जपहोमादिकरोति तस्य फलमश्नुते ब्रह्मयज्ञारंभे यथाविधि स्नात्वा
छन्दःपुरुषमेनोनिर्णोदनꣳशरीरं न्यसेत्तिर्र्यग्बिलश्चमसऊर्ध्वबुध्नस्तस्याक्षिणी गोतमभरद्वाजौ श्रोत्रे
विश्वामित्रजमदग्नी नासिके वसिष्ठकश्यपौ वागत्रिर्गायत्रींछंदोऽग्निर्देवताꣳशिरसि विन्यसेदेवमेवो-
ष्णिहꣳसवितारं ग्रीवास्वनूकेबृहतीं बृहस्पतिं बाह्वोर्बृहद्रथन्तरे द्यावापृथिवीमध्येत्रिष्टुभमिन्द्रꣳश्रो-
ण्योर्जगतीमादित्यं मेंढ्रेऽतिछंदसं प्रजापतिं पायौ यज्ञायज्ञियं वैश्वानरमूर्वोरनुष्टुभं विश्वान्देवानष्ठी-
वतोः पंक्ति मरुतः पादयोर्द्विपदाविष्णुं प्राणेषु विछन्दसं वायुं न्यूनातिरिक्तेष्वङ्गेषु न्यूनाक्षरं छन्द
आपोदेवतेत्येवꣳसर्वांगेषु योजयित्वा वेदमयः संपद्यते शापानुग्रहसमर्थो भवति ब्राह्मं तेजश्च वर्द्धते
न कुतश्चिद्भयं विन्दते ऋङ्मयो यजुर्मयः साममयस्तेजोमयो ब्रह्ममयोऽमृतमयः संभूय ब्रह्मैवा-
भ्येति तस्मादेवं नाब्रह्मचारिणे नातपस्विने नासंवत्सरोषिताय नाप्रवक्त्रेऽनुब्रूयादनेनाधीतेन चांद्रा-

यणाद्फलमवाप्नोत्यनेन च सम्यग्ज्ञातेन ब्रह्मणः सायुज्यꣳसलोकतामाप्नोत्याप्नोति ॥ १३ ॥ इति सर्वानुक्रमणिकायां चतुर्थोऽध्यायः ॥ ४ ॥ ॥ अथ छन्दाꣳसि गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यतिजगती शक्वर्यतिशक्वर्यष्ट्यत्यष्टीधृत्यातिधृतयः कृतिप्रकृत्याकृतिर्विकृतिसंकृत्यभिकृत्युत्कृतयश्चतुर्विंꣳशत्यक्षरादीनि चतुरुत्तराण्यूनाधिकेनैकेननिचृद्भुरिजौ द्वाभ्यां विराट्स्वराजौ पादपूरणार्थं तु क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेदाद्ये तु सप्तवर्गे पादविशेषान् संज्ञाविशेषांस्ताननुक्रामन्त एवोदाहरिष्यामो विराड्रूपाविराट्स्थानाश्च बहूनामपि त्रिष्टुभ एवेत्युद्देशस्तत्र दशैकादशद्वादशाक्षराणां वैराजत्रैष्टुभजागता इति संज्ञा अनादेशेष्टाक्षराः पादाश्चतुष्पदाश्चर्चः ॥ १ ॥ प्रथमं छन्दस्त्रिपदा-गायत्री पञ्चकाश्चत्वारषट्कश्चैकश्चतुर्थश्चतुष्को वा पदपंक्तिः षट्सप्तैकादशा उष्णिग्गर्भास्त्रयः सप्तकाः सा वर्द्धमाना विपरीता प्रतिष्ठा द्वौ षट्कौ सप्तकश्चेति ह्रसीयसी ॥ २ ॥ द्वितीयमुष्णिक्त्रिपदान्त्यो द्वादशक आद्यश्चेत्पुरउष्णिङ्मध्यमश्चेत्ककुप्त्रैष्टुभजागतचतुष्काः ककुभ्यंकुशिरैकादशिनोःपरःषट्कस्तनुशिरा मध्ये

चेत्पिपीलिकमध्याद्यःपंचकस्त्रयोऽष्टका अनुष्टुब्गर्भाश्चतुःसप्तकोष्णिगेव ॥ ३ ॥ तृतीयमनुष्टुप्चतुष्पदाथ पञ्चपञ्चकाः षट्कश्चैकौ महापदपंक्तिर्जागतावष्टकश्च कृतिर्मध्ये चेदष्टकः पिपीलिकमध्या नवकयोर्मध्ये जागतः कविराणनववैराजत्रयोदशैर्नष्टरूपादेकास्त्रयो विराडेकादशका वा ॥ ४ ॥ चतुर्थं बृहतीतृतीयो द्वादशक आद्यश्चेत्पुरस्ताद्बृहती द्वितीयश्चेन्न्यंकुसारिण्युरोबृहती स्कन्धो ग्रीवीवान्त्यश्चेदुपरिष्टाद्बृहत्याष्टिनोर्मध्ये दशकौ विष्टारबृहती त्रिजागतोर्ध्वबृहती त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकमध्या नवकाष्टकैकादशाष्टिनो विषमपदाचतुर्नवका बृहत्येव ॥ ५ ॥ पञ्चमं पंक्तिः पञ्चपदाऽथ चतुष्पदाविराड्दशका अयुजौ जागतौ सतो बृहती युजौ चेद्विपरीता आद्यौ चेद्विष्टारपंक्तिरन्त्यौ चेदास्तारपंक्तिराद्यान्त्यौ चेत्सँस्तारपङ्क्तिर्मध्यमौ चेद्विष्टारपंक्तिः ॥६॥ षष्ठं त्रिष्टुप् त्रैष्टुभपदा द्वौ तु जागतौ यस्याः सा जागते जगती त्रैष्टुभे त्रिष्टुब्वैराजौ जागतौ चाभिसारिणी नवकौ वैराजस्त्रिष्टुभश्च द्वौ वा वैराजौ नवकस्त्रैष्टुभश्चाविराट्स्थानैकादशिनस्त्रयोऽष्टकश्च विराड्रूपा द्वादशि-



१ प्रस्तार.

नस्त्रयोष्टकश्च ज्योतिष्मती यतोऽष्टकस्ततो ज्योतिश्चत्वारोऽष्टका जागतश्च महाबृहतीमध्ये जागतश्चे-
द्यवमध्याद्यौदशकावष्टकास्त्रयः पंक्त्युत्तरा विराट्पूर्वा वा ॥ ७ ॥ सप्तमं जगती जागतपदाष्टिनस्त्रयः
स्त्रौ च द्वौ महासतो बृहत्यष्टकौ सप्तकः षट्को दशको नवकश्च षडष्टका वा महापंक्तिर्माध्यन्दिनीये
वाजसनेयके सर्वानुक्रमणिकैषा कृतिर्भगवतः कात्यायनस्यैषा कृतिर्भगवतः कात्यायनस्य ॥ ८ ॥
इति सर्वानुक्रमणिकायां पञ्चमोऽध्यायः ॥ ५ ॥ कंडिका संख्या ॥ १२४ ॥ समाप्ता ॥ ॥



# श्रीशुक्लयजुर्वेदिनां[1] पारस्करगृह्यसूत्रम् ॥

॥ श्रीगणेशाय नमः । अथातो गृह्यस्थालीपाकानां कर्म परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्नि-मुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य प्रणीय परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः सँस्कृत्यार्थवत्प्रोक्ष्य निरुप्याऽऽज्यमधिश्रित्य पर्यग्नि कुर्यात्स्रुवं प्रतप्य सम्मृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यादाज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनान्कुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयादेष एव विधिर्यत्र क्वचिद्धोमः ॥ १ ॥ आवसथ्याधानं दारकाले दायाद्यकाल एकेषां वैश्यस्य बहुपशोर्गृहादग्निमाहृत्य चातुष्प्राश्यपचनवत्सर्वमरणिप्रदानमेके पञ्चमहायज्ञा इति श्रुतेरग्न्याधेय-

१ "छन्दोवत्सूत्राणि" इत्युच्चारणे याजुपा नियमः । ये ये धर्माश्छन्दसि ते सर्वे सूत्रेष्वपि ज्ञेयाः । अतोऽध्ययनवेलायामेव तत्र तत्र गुरोः सकाशाद् यकारोच्चारणं खकारोच्चारणं द्वित्वादिकश्चावगन्तव्यं तज्ज्ञानेच्छुना ।

देवताभ्यः स्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाज्याऽऽहुतीर्जुहोति त्वन्नोऽअग्ने, स त्वन्नोअग्न इमं मे वरुण, तत्त्वायामि, ये ते शतमयाश्चाग्नऽउदुत्तमं, भवतन्न इत्यष्टौ पुरस्तादेवमुपरिष्टात्स्थालीपाकस्याग्न्याधेयदेवताभ्यो हुत्वा जुहोति स्विष्टकृते चायास्यग्नेर्वषट्कृतं यत्कर्मणाऽत्यरीरिचं देवा गातुविद इति बर्हिर्हुत्वा प्राश्नाति ततो ब्राह्मणभोजनम् ॥ २ ॥ षडर्घ्या भवन्त्याचार्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति प्रतिसंवत्सरानर्हयेयुर्यक्ष्यमाणास्त्वृत्विज आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तमित्याहरन्ति विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितङ्काꣳस्ये काꣳस्येनान्यस्त्रिस्त्रिः प्राह विष्टरादीनि विष्टरं प्रतिगृह्णाति वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः ॥ इमं तमभितिष्ठामि यो मा कश्चाभिदासतीत्येनमभ्युपविशति पादयोरन्यं विष्टर आसीनाय सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ब्राह्मणश्चेद्दक्षिणं प्रथमं विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोह इत्यर्घं प्रतिगृह्णात्यापः स्थ युष्माभिः सर्वान्कामानवाप्नवानीति निनयन्नभिमन्त्रयते, समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत ॥ अरिष्टा अस्माकं

वीरा मा परासेचिमत्पय इत्याचामत्यामागन्यशसा सꣳसृज वर्चसा ॥ तं मा कुरु प्रियं प्रजानाम-
धिपतिं पशूनामरिष्टिन्तनूनामिति मित्रस्य त्वेति मधुपर्क प्रतीक्षते देवस्य त्वेति प्रतिगृह्णाति सव्ये
पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते
निष्कृन्तामीत्यनामिकाङ्गुष्ठेन च त्रिर्न्निरूक्षयति तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यं परमꣳरूपम-
न्नाद्यम् ॥ तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति मधुमती-
भिर्वा प्रत्यृचं पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात्सर्वं वा प्राश्नीयात्प्राग्वा सञ्चरे
निनयेदाचम्य प्राणान्सम्मृशति वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वो-
रोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहेत्याचान्तोदकाय शासमादाय गौरिति त्रिः प्राह प्रत्याह
माता रुद्राणां दुहिता वसूनाꣳस्वसादित्यानाममृतस्य नाभिः ॥ प्रनुवोचं चिकितुषे जनाय
मागामनागामदितिं वधिष्ट ॥ मम चामुष्य च पाप्मानꣳ हनोमीति यद्यालभेताथ यद्युत्सिसृक्षे-
न्मम चामुष्य च पाप्माहत ओमुत्सृजत तृणान्यत्त्विति ब्रूयान्न त्वेवामाꣳसोऽर्घस्यादधियज्ञम-

धिविवाहं कुरुतेत्येव ब्रूयाद्यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृताघ्र्या एवैनं याजयेयुर्नाकृताघ्र्या इति श्रुतेः ॥ ३ ॥ चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति पञ्चसु बहिःशालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इत्युपलिप्त उद्धृतावोक्षितेऽग्निमुपसमाधाय निर्मन्थ्यमेके विवाह उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयात्त्रिषु त्रिषूत्तरादिषु स्वातौ मृगशिरसि रोहिण्यां वा तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण द्वे राजन्यस्यैका वैश्यस्य सर्वेषाᳬशूद्रामप्येके मन्त्रवर्जमथैनां वासः परिधापयति जराङ्गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा ॥ शतं च जीव शरदः सुवर्च्चा रयिश्च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वास इत्यथोत्तरीयं या अकृन्तन्नवयं या अतन्वत । याश्च देवीस्तन्तूनभितो ततन्थ तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वास इत्यथैनौ समञ्जयति समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ ॥ सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नाविति पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति यदैषि मनसा दूरं दिशोऽनु पवमानो वा ॥ हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोत्वित्यसावित्यथैनौ

समीक्षयत्यघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ॥ वीरसूर्देवकामा स्योनाशन्नो भव द्विपदे शं चतुष्पदे ॥ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ॥ तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद्ग्नये ॥ रयिं च पुत्राँश्चादादग्निर्मह्यमथो इमाम् ॥ सा नः पूषा शिवतमामेरय सा न ऊरू उशती विहर ॥ यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्या इति ॥ ४ ॥ प्रदक्षिणमग्निं पर्याणीयैके पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रहृत्योपविशत्यन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳस्विष्टकृच्चैतन्नित्यꣳ सर्वत्र प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः सर्वप्रायश्चित्तं प्राजापत्यान्तरमेतदावापस्थानं विवाहे राष्ट्रभृत इच्छञ्जयाभ्यातानाँश्च जानन्येन कर्मणेर्छेदिति वचनाच्चित्तश्च चित्तिश्चाकूतं चाकूतिश्च विज्ञातं च विज्ञातिश्च मनश्च शक्वरीश्च दर्शश्च पौर्णमासं च बृहच्च रथन्तरं च प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतना जयेषु ॥ तस्मै विशः समनमन्त सर्वाः स उग्रः स इहव्यो बभूव स्वाहेत्यग्निर्भूतानामधिपतिः स मावत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्त-

रिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपाꣳसमुद्रः स्रोत्या-नामन्नꣳसाम्राज्यानामधिपति तन्मावतु सोम ओषधीनाꣳसविता प्रसवानाꣳरुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते मावन्तु पितरः पितामहाः परेऽवरे ततास्त-तामहाः ॥ इह मावन्त्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देव-हूत्याꣳ स्वाहेति सर्वत्रानुषजत्यग्निरैतु प्रथमो देवतानाꣳ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् ॥ तदयꣳराजा वरुणोऽनुमन्यतां यथेयꣳ स्त्री पौत्रमघन्नरोदात्स्वाहा ॥ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः ॥ अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यता-मियꣳ स्वाहा ॥ स्वस्ति नो अग्ने दिवा पृथिव्या विश्वानि धेह्ययथा यजत्र ॥ यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रꣳ स्वाहा ॥ सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मध्ये ह्यजरन्न आयुः ॥ अपैतु मृत्युरमृतम्म आगाद्वैवस्वतो नो अभयं कृणोतु स्वाहेति परं मृत्यविति चैके प्राशनान्ते ॥ ५ ॥ कुमार्या भ्राता शमीपलाशमिश्राँल्लाजानञ्जलिनाञ्जलावावपति तां जुहोति

सꣳहतेन तिष्ठत्यर्यमणं देवङ्कन्या अग्निमयक्षत। स नो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा ॥
इयन्नार्युपब्रूते लाजानावपन्तिका ॥ आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ॥ इमाँ-
ल्लाजानावपाम्यग्नौ समृद्धिकरणं तव ॥ मम तुभ्यं च संवननं तदग्निरनुमन्यतामियꣳस्वाहेत्यथास्यै
दक्षिणꣳहस्तं गृह्णाति साङ्गुष्ठं गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः ॥
भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥ अमोहमस्मि सा त्वꣳसात्वमस्यमो-
अहम् ॥ सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वम्। तावेहि विवहावहै सह रेतो दधावहै ॥ प्रजां
प्रजनयावहै पुत्रान्विन्द्यावहै बहून् ॥ ते सन्तु जरदष्टयः सम्प्रियौ रोचिष्णू सुमनस्यमानौ ॥
पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतमिति ॥ ६ ॥ अथैनामश्मानमारो-
हयत्युत्तरतोऽग्नेर्दक्षिणपादेनारोहेममश्मानमश्मेव त्वꣳस्थिरा भव॥ अभितिष्ठ पृतन्यतोऽवबाधस्व
पृतनायत इत्यथ गाथां गायति सरस्वति प्रेदमव सुभगे वाजिनीवती ॥ यां त्वा विश्वस्य भूतस्य
प्रजायामस्याग्रतः ॥ यस्यां भूतꣳसमभवद्यस्यां विश्वमिदं जगत् ॥ तामद्य गाथां गास्यामि या

स्त्रीणामुत्तमं यश इत्यथ परिक्रामतस्तुभ्यमग्ने पर्यवहं सूर्या वहतु ना सह ॥ पुनः पतिभ्यो जाया-
न्दाग्ने प्रजया सहेत्येवं द्विरपरं लाजादि चतुर्थꣳ शूर्पकुष्ठया सर्वाँल्लाजानावपति भगाय स्वाहेति त्रिः परि-
णीतां प्राजापत्यꣳ हुत्वा ॥ ७ ॥ अथैनामुदीचीꣳ सप्त पदानि प्रक्रामयत्येकमिषे द्वे ऊर्ज्जे त्रीणि
रायस्पोषाय चत्वारि मायोभवाय पञ्च पशुभ्यः षडृतुभ्यः सखे सप्तपदा भव सा मामनुव्रता भव
विष्णुस्त्वानयत्विति सर्वत्रानुषजति निष्क्रमणप्रभृत्युदकुम्भꣳ स्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतः
स्थितो भवत्युत्तरत एकेपान्तत एनां मूर्धन्यभिषिञ्चत्यापः शिवाः शिवतमाः शान्ताः शान्ततमा-
स्तास्ते कृण्वन्तु भेपजमित्यापोहिष्ठेति च तिसृभिरथैनाꣳ सूर्यमुदीक्षयति तच्चक्षुरित्यथास्यै दक्षि-
णाꣳसमधि हृदयमालभते मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं तेऽअस्तु ॥ मम वाच-
मेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यमित्यथैनामभिमन्त्रयते सुमङ्गलीरियं वधूरिमाꣳसमेत
पश्यत ॥ सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतनेति तान्दृढपुरुष उन्मथ्य प्राग्वोदग्वानुगुप्त आगार-
आनडुहे रोहिते चर्मण्युपवेशयतीह गावो निषीदन्त्विहाश्वा इह पूरुषाः ॥ इहो सहस्रदक्षिणो

यज्ञ इह पूषा निषीदन्त्विति ग्रामवचनं च कुर्युर्विवाहश्मशानयोर्ग्रामं प्राविशनादिति वचनात्त-
स्मात्तयोर्ग्रामः प्रमाणमिति श्रुतेराचार्याय वरं ददाति गौर्ब्राह्मणस्य वरो ग्रामो राजन्यस्याश्वो
वैश्यस्याधिरथꣳशतं दुहितृमतेऽस्तमिते ध्रुवं दर्शयति ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधिपोष्ये मयि
मह्यं त्वादात् ॥ बृहस्पतिर्मया पत्या प्रजावती सञ्जीव शरदः शतमिति सा यदि न पश्येत्पश्या-
मीत्येव ब्रूयात् त्रिरात्रमक्षारालवणाशिनौ स्यातामधः शय्याताꣳ संवत्सरं न मिथुनमुपेयातां
द्वादशरात्रꣳषड्रात्रं त्रिरात्रमन्ततः ॥ ८ ॥ उपयमनप्रभृत्यौपासनस्य परिचरणमस्तमितानुदित-
योर्दध्ना तण्डुलैरक्षतैर्वाग्नये स्वाहा प्रजापतये स्वाहेति सायꣳसूर्याय स्वाहा प्रजापतये स्वाहेति
प्रातः पुमाꣳसौ मित्रावरुणौ पुमाꣳसावश्विनावुभौ ॥ पुमानिन्द्रश्च सूर्यश्च पुमाꣳसंवर्ततां मयि
पुनः स्वाहेति पूर्वां गर्भकामा ॥ ९ ॥ राज्ञोऽक्षभेदे नद्धविमोक्षे यानविपर्यासेऽन्यस्यां वा व्यापत्तौ
स्त्रियाश्चोद्वहने तमेवाग्निमुपसमाधायाऽऽज्यꣳसंस्कृत्येहरतिरिति जुहोति नानामन्त्राभ्यामन्यद्यान-
मुपकल्प्य तत्रोपवेशयेद्राजानꣳस्त्रियं वा प्रतिक्षत्र इति यज्ञान्तेनात्वाहार्षमिति चैतया धर्यो दक्षिणा

प्रायश्चित्तिस्ततो ब्राह्मणभोजनम् ॥ १० ॥ चतुर्थ्यामपररात्रेऽभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोत्यग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ गन्धर्व प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहेति । स्थालीपाकस्य जुहोति प्रजापतये स्वाहेति हुत्वा हुत्वैतासामाहुतीनामुदपात्रे सꣳस्रवान्समवनीय तत एनां मूर्द्धन्यभिषिञ्चति या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नीं तत एनां करोमि सा जीर्य त्वं मया सहासावित्यथैनाꣳस्थालीपाकं

प्राशयति प्राणैस्ते प्राणान्सन्दधाम्यस्थिभिरस्थीनि माꣳसैर्माꣳसानि त्वचा त्वचमिति तस्मादेवं विच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति तामुदुह्य यथर्त्तुप्रवेशनं यथा कामी वा काममाविजनितोः सम्भवामेति वचनादथास्यै दक्षिणाꣳसमधिहृदयमालभते यत्ते सुशीमे हृदयं दिवि चन्द्रमसि श्रितम् ॥ वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतमित्येवमत ऊर्ध्वम् ॥११॥ पक्षादिषु स्थालीपाकꣳ श्रपयित्वा दर्शपूर्णमासदेवताभ्यो हुत्वा जुहोति ब्रह्मणे प्रजापतये विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यामिति विश्वेभ्यो देवेभ्यो बलिहरणं भूतगृह्येभ्य आकाशाय च वैश्वदेवस्याग्नौ जुहोत्यग्नये स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहाग्नये स्विष्टकृते स्वाहेति प्राशनान्ते बाह्यतः स्त्रीबलिꣳ हरति नमः स्त्रियै नमः पुꣳसे वयसेऽवयसे नमः शुक्लाय कृष्णदन्ताय पापिनां पतये नमो ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वारण्ये तेभ्यो नमोऽस्तु बलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददत्विति शेषमद्भिः प्रप्लाव्य ततो ब्राह्मणभोजनम् ॥१२॥ अथ गर्भाधानꣳ स्त्रियाः पुष्पवत्याश्चतुरहादूर्ध्वꣳ स्नात्वा विरजायास्तस्मिन्नेव

दिवा आदित्यङ्गर्भमित्यादित्यमवेक्षते गृहे वा स्नापयित्वा तामभिगच्छेदिति श्रुतेस्तस्मिन्प्रजायाः सम्भवकाले निशायां कुर्याद्यदि दिवा मैथुनं व्रजेत्क्लीबा अल्पवीर्या अल्पायुषाश्च प्रसूयन्ते तस्मा-देतद्वर्जयेत्प्रजाकामो गृही श्रुतिस्मृतिविरोधाभ्यां दक्षिणेन पाणिनोरू प्रसार्य प्रजास्थानमभि-मृशति पूषा भगꣳ सविता मे ददातु रुद्रः कल्पयति ललामगुं विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु ॥ आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके ॥ गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजाविति सꣳसृजेथास्तेजो वैश्वानरो दद्याद् ब्रह्माण-मामन्त्रयते ब्रह्मा गर्भं दधात्विति प्राङ्मुख उदङ्मुखो वोपविष्टो मन्यते रेतो मूत्रमिति चैके श्रावणं कुर्यात् ॥ १३ ॥ अथर्तुमतीं जायामधिगच्छेत्पिण्डपितृयज्ञेन यजेत मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा तत एतामाहुतिं जुहोत्याधत्त पितर इत्यलङ्कारमवजिघ्रत्यायन्तु न इति जपत्येवमथर्तुमतीं जायाहृदयमालभ्य पूर्ववत्सव्येन पाणिनोपस्थमभिमृशति भगप्रणेतारिति प्राशुतेदानीमिति रेतो-मूत्रमिति सन्धत्ते गायत्रेणेति प्रतिमन्त्रं मन्थयति पुत्रकामोऽभिगच्छेन्नित्यम् ॥ १४ ॥ सा यदि गर्भं

न दधीत सिंह्याः श्वेतपुष्प्या उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चतीयमोषधी त्रायमाणा सहमाना सरस्वती ॥ अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जग्रभमिति ॥ १५ ॥ अथ पुꣳसवनं पुरा स्पन्दत इति मासे द्वितीये तृतीये वा यदहः पुꣳसा नक्षत्रेण चन्द्रमा युज्येत तदहरुपवास्याऽऽप्लाव्याहते वाससी परिधाप्य न्यग्रोधावरोहाञ्छुङ्गाँश्च निशायामुदपेषं पिष्ट्वा पूर्ववदासेचनꣳ हिरण्यगर्भोऽद्भ्यः सम्भृत इत्येताभ्याङ्कुशकण्टकꣳ सोमाꣳशुं चैके कूर्मपित्तं चोपस्थे कृत्वा स यदि कामयेत वीर्यवान्स्यादिति विकृत्यैनमभिमन्त्रयते सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः ॥१६॥ अथ सीमन्तोन्नयनम् ॥ पुꣳसवनवत् प्रथमगर्भे मासे षष्ठेऽष्टमे वा तिलमुद्गमिश्रꣳस्थालीपाकꣳ श्रपयित्वा प्रजापतेर्हुत्वा पश्चादग्नेर्भद्रपीठ उपविष्टायां युग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जुलैस्त्र्येण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण च सीमन्तमूर्द्ध्वं विनयति भूर्भुवःस्वरिति प्रतिमहाव्याहृतिभिर्वा त्रिवृतमावध्नात्ययमूर्जावतो वृक्ष उर्ज्जीव फलिनी भवेत्यथाऽऽह वीणागाथिनौ राजानꣳसङ्गायेतां यो वाऽप्यन्यो वीरतर इति

नियुक्तामप्येके गाथामुपोद्‌गाहरन्ति सोम एव नो राजेमा मानुषीः प्रजाः ॥ अविमुक्तचक्र आसी- रँस्तीरे तुभ्यमसाविति यां नदीमुपावसिता भवति तस्या नाम गृह्णाति ततो ब्राह्मणभोजनम् ॥१७॥ सोष्यन्तीमद्भिरभ्युक्षत्येजतु दशमास्य इति प्राग्यस्यैत इत्यथावरावपतनमवैतु पृश्निशेवलꣳ शुने जराय्वत्तवे नैव माꣳसेन पीवरीं न कस्मिंश्चनायतनमवजरायुपद्यतामिति जातस्य कुमारस्याच्छि- न्नायान्नाड्यां मेधाजननाऽऽयुष्ये करोत्यनामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं वा भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवःस्वः सर्वं त्वयि दधामीत्यथास्याऽऽयुष्यं करोति नाभ्यां दक्षिणे वा कर्णे जपत्यग्निरायुष्मान्स वनस्पतीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि सोम आयुष्मान्सौषधीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ब्रह्माऽऽयुष्मत्तद्ब्राह्मणै- रायुष्मत्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि देवा आयुष्मन्तस्तेऽमृतेनाऽऽयुष्मन्तस्तेन त्वाऽऽयुषाऽऽ- युष्मन्तं करोमि ऋषय आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि पितर आयु- ष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि यज्ञ आयुष्मान्स दक्षिणाभिरायुष्माँ-

स्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि समुद्र आयुष्मान्स स्रवन्तीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि त्रिस्त्रिरुयायुषमिति च स यदि कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेद्दिवस्परीत्येतस्यानुवाकस्योत्तमामृचं परिशिनष्टि प्रतिदिशं पञ्च ब्राह्मणानवस्थाप्य ब्रूयादिमसनुप्राणितेति पूर्वो ब्रूयात्प्राणेति व्यानेति दक्षिणोऽपानेत्यपर उदानेत्युत्तरः समानेति पञ्चम उपरिष्टादवेक्षमाणो ब्रूयात्स्वयं वा कुर्यादनुपरिक्राममविद्यमानेषु स यस्मिन्देशे जातो भवति तमभिमन्त्रयते वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् ॥ वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतमित्यथैनमभिमृशत्यश्मा भव परशुर्भव हिरण्यमश्रुतं भव ॥ आत्मा वै पुत्रनामासि स जीव शरदः शतमित्यथास्य मातरमभिमन्त्रयत इडासि मैत्रावरुणी वीरे वीरमजीजनथाः ॥ सा त्वं वीरवती भव याऽस्मान्वीरवतोऽकरदित्यथास्यै दक्षिणꣳस्तनं प्रक्षाल्य प्रयच्छतीमꣳस्तनमिति यस्ते स्तन इत्युत्तरमेताभ्यामुदपात्रꣳशिरस्तो निदधात्यापो देवेषु जाग्रथ यथा देवेषु जाग्रथ ॥ एवमस्याꣳ सूतिकाया सपुत्रिकायां जाग्रथ इति द्वारदेशे सूतिकाग्निमुपसमाधायोत्थाना-

त्सन्धिवेलयोः फलीकरणमिश्रान्सर्षपानग्नावावपति शण्डामर्का उपवीरः शौण्डिकेय उलूखलः ॥ मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा ॥ आलिखन्ननिमिषः किंवदन्त उपश्रुतिर्हर्यक्षः कुम्भी शत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहेति यदि कुमार उपद्रवेज्जालेन प्रच्छाद्योत्तरीयेण वा पिताङ्क आधाय जपति कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः ॥ चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम् ॥ यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः ॥ चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम् ॥ यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ ॥ चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वरेत्यभिमृशति न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसीति ॥ १८ ॥ अथातो यमलजनने प्रायश्चित्तं व्याख्यास्यामो यस्य भार्या गौर्दासी महिषी वडवा वा विकृतं प्रसवे प्रायश्चित्ती भवेत्पूर्णे दशाहे चतुर्णां क्षीरवृक्षाणां काषायमुपसंहरेत् प्लक्षवटौदुम्बराश्वत्थशमीदेवदारुगौरसर्षपास्तेषामपो हिरण्यदूर्वाङ्कुराम्रपल्लवैरष्टौ कलशान्प्र-

पूर्ष सर्वौषधीनां दम्पती स्नापयित्वाऽऽपो हिष्ठेति तिसृभिः कयानश्चित्र इति द्वाभ्यां पञ्चैन्द्रेण पञ्च वारुणेनेदमापः प्रवहतेत्यपाघमिति स्नापयित्वालङ्कृत्य तौ दर्भेषूपवेश्य तत्र मारुतꣳस्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति पूर्वोक्तैः स्नपनमन्त्रैः स्थालीपाकस्य जुहोत्यग्नये स्वाहा सोमाय स्वाहा पवमानाय स्वाहा पावकाय स्वाहा मरुताय स्वाहा मारुताय स्वाहा मरुद्भ्यः स्वाहा यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहाग्नये स्विष्टकृते स्वाहेत्येतदेव गृहोत्पातेषूलूककपोतगृध्रः श्येनो वा प्रविशेत्स्तम्भः प्ररोहेद्वल्मीकं मधुजालं वा भवेदुदकुम्भप्रज्वलनाशनशयनयानभङ्गेषु गृहगोधिकाकृकलासशरीरसर्पण इत्येवं छत्रध्वजविनाशे सार्पे नैर्ऋते गण्डयोगेष्वन्येष्वप्युत्पातेषु भूकम्पोल्कापातकाकसर्पसङ्गमप्रेक्षणादिष्वेतदेव प्रायश्चित्तं ग्रहशान्त्योक्तेन विधिना कृत्वाऽऽचार्याय वरं दत्त्वा ब्राह्मणान्भोजयित्वा स्वस्ति वाच्याशिषः प्रतिगृह्य शान्तिर्भवति शान्तिर्भवति

॥ १९ ॥ अथातो यमलचरुं मारुतं व्याख्यास्यामो यस्य च यमलौ पुत्रौ दारिका वा प्रजायते पूर्णे दशाहे चतुर्णां क्षीरवृक्षाणां काषायमाहृत्याश्वत्थप्लक्षन्यग्रोधौदुम्बराश्चत्वारो विधवाः

ब्रह्मचारिणो वा शुक्लवाससः ऐन्द्रीं दिशमुदीचीं वा मङ्गलं पूर्ववद्गायन्त्यो यमलिनीᳪं स्नापयन्त्याचार्यः स्नापयति वसोः पवित्रेण शतधारेण चाष्टभिः कलशैः स्नात्वाऽप्रतिरथं जपेदिदमापः प्रवहतेति तौ स्नापितौ वरं प्रयच्छत्यानडुहमातृभ्यश्च हिरण्यं वस्त्रमेव परीतोषणं वाजेवाजेवतेति पतेपद्याद्वादित्याघारं मारुतं चरुं जुहोति मरुताय स्वाहा मारुती स्वाहा मरुद्भ्यो विष्णवे प्रजापतयेऽग्नये स्विष्टकृते स्वाहेति प्राशनान्ते शेषं चरुं गृहीत्वाऽश्वत्थं प्रदक्षिणीकृत्योपविशेत्तदेव तन्त्रᳪं समाप्य ततो ब्राह्मणभोजनम् ॥ २० ॥ अथातो मूलविधिं व्याख्यास्यामो मूलांशे प्रथमे पितुर्नेष्टो द्वितीये मातुस्तृतीये धनधान्यस्य चतुर्थे कुलशोकावहः स्वयं पुण्यभागी स्यान्मूलनक्षत्रे मूलविधानं कुर्यात्सर्वौषध्यात्सर्वगन्धैश्च सन्युक्तं तत्रोदकुम्भं कृत्वा स वस्त्रगन्धपुष्परत्नसहितᳪं श्वेतसिद्धार्थकुसुमायुक्तं कुर्यात्तस्मिन्रुद्रं जपित्वाऽप्रतिरथᳪं राक्षोघ्नं च सूक्तं द्वितीयोदकुम्भं कृत्वा चतुःशतपाठः प्रस्रवणसन्युक्तन्तस्मिन्नुपरिष्टान्मूलानि धारयेद्वंशपात्रे कृत्वा वस्त्रे बद्ध्वा तस्मिन्प्रधानानि मूलानि वक्ष्यामि हिरण्मयमूलᳪं सप्त धान्यं प्रथमाकाष्मर्या सहदेव्याऽपराजिता बाला पाठा शङ्खपुष्प्यधोपुष्पी

मधुयष्टिका चक्राङ्किता मयूरशिखा काकजङ्घा कुमारीद्वयं जीवन्त्यपामार्गभृङ्गारकलक्ष्मणाः सुलक्ष्मणा जाती व्याघ्रपत्रश्चक्रमर्द्दकः सिद्धेश्वरोऽश्वत्थोदुम्बरपालाशप्लक्षवटार्कदूर्वारोहितकशमीशतावरीत्येवमादिमूलशतं पूरयित्वा तस्मिन्निषिद्धानि मूलानि वक्ष्यामि बैल्वधवनिम्बकदम्बराजवृक्षोक्षशालाप्रयालुदधिकपित्थकोविदारश्लेष्मान्तकबिभीतकशाल्मलीररलुसर्वकण्टकिवर्ज तत्राभिषेकं कुर्यात्पितुः शिशोर्जनन्या देवस्य त्वेत्यौदुम्बर्यात्सन्दीमुदगग्रामास्तृणाति तत्रासीनान्सम्पातेनाभिषिञ्चति शिरसोऽध्यनुलोमꣳशिरो मे श्रीर्यश इति यथालिङ्गमङ्गानि सम्मृशति स्नानादूर्ध्वं नैर्ऋतं पायसꣳ श्रपयित्वा काश्मर्यमयꣳ स्रुक्स्रुवं प्रतप्य सम्मृज्यान्वारब्ध आघारावाज्यभागौ हुत्वाऽसुन्वन्तमिति चतस्रः स्थालीपाकेन जुहुयात्पञ्चदशाऽऽज्याहुतीश्चतुर्गृहीतेन जुहोति कृणुष्व पाज इति पञ्च मा नस्तोक इति द्वे या ते रुद्र शिवा तनूरिति षडग्नी रक्षाꣳसि सधेति शुक्रज्योतिरमर्त्यः शुचिः पावक ईड्य इति त्वन्नः सोम विश्वतो रक्षा राजन्नघायतो न रिष्ये त्वावतः सखेति स्विष्टकृदादि प्राशनान्ते कृष्णा गौः कृष्णाश्च तिला हेममयमूलꣳसप्त-

धान्यसन्युक्तमाचार्याय वरं दद्यात्कृष्णोऽनड्वान्ब्रह्मणे दद्यान्नक्षत्रसूचकेभ्यो वासो दद्यादन्येभ्यो ब्राह्मणेभ्यः सुवर्णं दद्यात्कृसरापायसेन ब्राह्मणान्भोजयेत्सार्पदैवते गण्डजात एष एव विधिः कात्यायनेनोक्तः कात्यायनेनोक्तः ॥ २१ ॥ दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता नाम करोति द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तःस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितमयुजाक्षरमाकारान्तꣳ स्त्रियै तद्धितꣳशर्म ब्राह्मणस्य वर्म क्षत्रियस्य गुप्तेति वैश्यस्य चतुर्थे मासि निष्क्रमणिका सूर्यमुदीक्षयति तच्चक्षुरिति ॥ २२ ॥ प्रोष्येत्य गृहानुपतिष्ठते पूर्ववत्पुत्रं दृष्ट्वा जपत्यङ्गादङ्गात्सम्भवसि हृदयादधिजायसे ॥ आत्मा वै पुत्रनामासि स जीव शरदः शतमित्यथास्य मूर्द्धानमवजिघ्रति प्रजापतेष्ट्वाहिंकारेणावजिघ्रामि सहस्रायुषाऽसौ जीव शरदः शतमिति गवां त्वा हिंकारेणेति च त्रिर्दक्षिणेऽस्य कर्णे जपत्यस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्ररायो विश्ववारस्य भूरेः ॥ अस्मे शतꣳशरदो जीवसेऽधा अस्मे वीराञ्छश्वत इन्द्रशिप्रिन्नितीन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे ॥ पोषꣳरयीणामरिष्टिं तनूनाꣳ स्वात्मानं वाचः सुदिन त्वमह्ना-

मिति सव्ये स्त्रियै तु मूर्द्धानमेवावजिघ्रति तूष्णीम् ॥ २३ ॥ षष्ठे मासेऽन्नप्राशनᳬस्थालीपाकᳬश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ॥ सा नो मन्द्रेषमूर्जन्दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहेति वाजो नो अद्येति च द्वितीयाᳬ स्थालीपाकस्य जुहोति प्राणेनान्नमशीय स्वाहाऽपानेन गन्धानशीय स्वाहा चक्षुषा रूपाण्यशीय स्वाहा श्रोत्रेण यशोऽशीय स्वाहेति प्राशनान्ते सर्वान्रसान्सर्वमन्नमेकत उद्धृत्याथैनं प्राशयेत्तूष्णीᳬहन्तेति वा हन्तकारं मनुष्या इति श्रुतेर्भारद्वाज्या माᳬसेन वाक्प्रसारकामस्य कपिञ्जलमाᳬसेनान्नाद्यकामस्य मत्स्यैर्जवनकामस्य कृकषाया आयुष्कामस्याऽऽट्या ब्रह्मवर्चसकामस्य सर्वैः सर्वकामस्यान्नपर्याय वा ततो ब्राह्मणभोजनमन्नपर्याय वा ततो ब्राह्मणभोजनम् ॥ २४ ॥

इति पारस्करगृह्यसूत्रे प्रथमं काण्डं समाप्तम् ॥ १ ॥



# अथ द्वितीयं काण्डम् ।

सांवत्सरिकस्य चूडाकरणं तृतीये वाऽप्रतिहते षोडशवर्षस्य केशान्तो यथामङ्गलं वा सर्वेषां ब्राह्मणान्भोजयित्वा माता कुमारमादायाप्लाव्याहते वाससी परिधाप्याङ्क आधाय पश्चादग्नेरुपविशत्यन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्ते शीतास्वप्सूष्णा आसिञ्चत्युष्णेन वाय उदकेनेह्यदिते केशान्वपेति केशश्मश्रु्विति च केशान्तेऽथात्र नवनीतपिण्डं घृतपिण्डं दध्नो वा प्रास्यति तत आदाय दक्षिणं गोदानमुन्दति सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूम् ॥ दीर्घायुत्वाय वर्चस इति त्र्येण्या शलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधात्योषध इति शिवो नामेति लोहक्षुरमादाय निवर्त्तयामीति प्रवपति, येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ॥ तेन ब्रह्माणो वपतेदमस्याऽऽयुष्यं जरदष्टिर्यथासदिति सकेशानि प्रच्छिद्यानडुहे गोमयपिण्डे प्रास्यत्युत्तरतो ध्रियमाण एवं द्विरपरं तूष्णीमितरयोश्चोन्दनाद्यथ पश्चात् त्र्यायुषमित्यथोत्तरतो येन भूरिश्चरा दिवं ज्योक् च

पश्चाद्भिः सूर्षम् ॥ तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तय इति त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति समुखं केशान्ते यत्क्षुरेण मज्जयता सुपेशसा वप्त्वा वाऽऽवपति केशान्छिन्धि शिरो माऽस्याऽऽयुः प्रमोषीर्मुखमिति च केशान्ते ताभिरद्भिः शिरः समुद्य नापिताय क्षुरं प्रयच्छत्यक्षण्वं[1] परिवपेति यथामङ्गलं केशशेषकरणमनुगुप्तमेतᳪसकेशं गोमयपिण्डं निधाय गोष्ठे पल्वल उदकान्ते वाऽऽचार्याय वरं ददाति गां केशान्ते संवत्सरं ब्रह्मचर्यमवपनं च केशान्ते द्वादशरात्रᳪ षड्रात्रं त्रिरात्रमन्ततः ॥ १ ॥ ( अथ कर्णवेधो वर्षे तृतीये पञ्चमे वा पुष्येन्दुचित्राहरिरेवतीषु पूर्वाह्णे कुमारस्य मधुरं दत्त्वा प्राङ्मुखायोपविष्टाय दक्षिणं कर्णमभिमन्त्रयते भद्रंकर्णेभिरिति सव्यं वक्ष्यन्तीवेदिति चाथ भिन्द्यात्ततो ब्राह्मणभोजनम् ॥ २ ॥ ) अष्टवर्षं ब्राह्मणमुपनयेद्गर्भाष्टमे वैकादशवर्षᳪ राजन्यं द्वादशवर्षं वैश्यं यथामङ्गलं वा सर्वेषां ब्राह्मणान्भोजयेत्तं च पर्युप्तशिरसमलङ्कृतमानयन्ति पश्चादग्नेरवस्थाप्य ब्रह्मचर्यमागामिति वाचयति ब्रह्मचार्यसानीति चाथैनं वासः

१ वप्त्रेति जयरामः । वप्त्वा ( मुण्डयित्वा ) इति गदाधरः ।

परिधापयति येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतम् ॥ तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चस इति मेखलां बध्नीत इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म आगात् ॥ प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयमिति युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः ॥ तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त इति वा तूष्णीं वात्र यज्ञोपवीतपरिधानम् ॥ (यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ॥ आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनो-पनह्याम्मीत्यथाजिनं प्रयच्छति मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरꣳसमिद्धम् ॥ अनाहनस्यं वसनं जरिष्णुः परीदं वाज्यजिनं दधेऽहमिति तूष्णीं वा) दण्डं प्रयच्छति तं प्रति-गृह्णाति यो मे दण्डः परापतद्वैहायसोऽधिभूम्याम् ॥ तमहं पुनरादद आयुषे ब्रह्मणे ब्रह्मवर्चसायेति दीक्षावदेके दीर्घसत्रमुपैतीति वचनादथास्याद्भिरञ्जलिनाऽञ्जलिं पूरयत्यापोहिष्ठेति तिसृभिरथैनꣳ-सूर्यमुदीक्षयति तच्चक्षुरित्यथास्य दक्षिणाꣳसमधि हृदयमालभते मम व्रते ते हृदयं दधामि

मम चित्तमनु चित्तं ते अस्तु ॥ मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यमि-
त्यथास्य दक्षिणꣳहस्तं गृहीत्वाऽऽह को नामासीत्यसावहं भो ३ इति प्रत्याहाथैनमाह कस्य
ब्रह्मचार्यसीति भवत इत्युच्यमान इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासावित्यथैनं
भूतेभ्यः परिददाति प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यः
परिददामि द्यावापृथिवीभ्यां त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा
भूतेभ्यः परिददाम्यरिष्ट्या इति ॥ ३ ॥ प्रदक्षिणमग्निं परीत्योपविशत्यन्वारब्ध आज्याहुतीर्हुत्वा
प्राशनान्तेऽथैनꣳसꣳशास्ति ब्रह्मचार्यस्यपोऽशान कर्म कुरु मा दिवा सुषुप्था वाचं यच्छ समिध-
माधेह्यपोऽशानेत्यथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय
समीक्षिताय दक्षिणतस्तिष्ठत आसीनाय वैके पच्छोर्ऽर्धर्चशः सर्वां च तृतीयेन सहानुवर्तयन्संवत्सरे
षण्मास्ये चतुर्विꣳशत्यहे द्वादशाहे षडहे त्र्यहे वा सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयादाग्नेयो वै
ब्राह्मण इति श्रुतेस्त्रिष्टुभꣳराजन्यस्य जगतीं वैश्यस्य सर्वेषां वा गायत्रीम् ॥ ४ ॥ अत्र समिदाधानं

पाणिनाऽग्निं परिसमूहत्यग्ने सुश्रवः सुश्रवसं मा कुरु यथा त्वमग्ने सुश्रवः सुश्रवा अस्येवं माᳫ सुश्रवः सौश्रवसं कुरु ॥ यथा त्वमग्ने देवानां यज्ञस्य निधिपा अस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति प्रदक्षिणमग्निं पर्युक्ष्योत्तिष्ठन्त्समिधमादधात्यग्नये समिधमहार्षं[2] बृहते जातवेदसे ॥ यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाऽऽचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासᳫस्वाहेत्येवं द्वितीयां तथा तृतीयामेषा त इति वा समुच्चयो वा पूर्ववत्परिसमूहनपर्युक्षणे पाणी प्रतप्य मुखं विमृष्टे तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो मे देहि ॥ अग्ने यन्मे तन्वा ऊनं तन्म आपृण ॥ मेधां मे देवः सविता आदधातु मेधां मे देवी सरस्वती आदधातु ॥ मेधामश्विनौ देवावाधत्तां पुष्करस्रजाविति। (अङ्गान्यालभ्य जपत्यङ्गानि च म आप्यायन्तां वाक्प्राणश्चक्षुः श्रोत्रं यशो बलमिति त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेᳫसे

---

१ पर्युक्ष्योत्थायेति वहूना पाठ. सम्मतः । २ माहार्यमित्यपि पाठो दृश्यते ।

हृदि च त्र्यायुषमिति प्रतिमन्त्रम्) ॥ ५ ॥ अत्र भिक्षाचर्यचरणम् । भवत्पूर्वां ब्राह्मणो भिक्षेत भवन्मध्याꣳराजन्यो भवदन्त्यां वैश्यास्तिस्रोऽप्रत्याख्यायिन्यः षड्द्वादशापरिमिता वा मातरं प्रथमामेक आचार्याय भैक्षं निवेदयित्वा वाग्यतोऽहःशेषं तिष्ठेदित्येकेऽहिꣳसन्नरण्यात्समिधमाहृत्य तस्मिन्नग्नौ पूर्ववदाधाय वाचं विसृजतेऽधःशाय्यक्षारालवणाशी स्याद्दण्डधारणमग्निपरिचरणं गुरुशुश्रूषा भिक्षाचर्या मधुमाꣳसमज्जनोपर्यासनस्त्रीगमनानृतादत्तादानानि वर्जयेदष्टाचत्वारिꣳशद्वर्षाणि वेदब्रह्मचर्यं चरेद्द्वादश द्वादश वा प्रतिवेदं यावद्ग्रहणं वा वासाꣳसि शाणक्षौमाविकान्यैणेयमाजिनमुत्तरीयं ब्राह्मणस्य रौरवꣳ राजन्यस्याऽऽजं गव्यं वा वैश्यस्य सर्वेषां वा गव्यमसति प्रधानत्वान्मौञ्जी रशना ब्राह्मणस्य धनुर्ज्या राजन्यस्य मौर्वी वैश्यस्य मुञ्जाभावे कुशाश्मन्तकबल्वजानां पालाशो ब्राह्मणस्य दण्डो बैल्वो राजन्यस्यौदुम्बरो वैश्यस्य केशसम्मितो ब्राह्मणस्य ललाटसम्मितः क्षत्रियस्य घ्राणसम्मितो वैश्यस्य सर्वे वा सर्वेषामाचार्येणाऽऽहुत उत्थाय प्रतिश‍ृणुयाच्छयानं चेदासीन आसीनं चेत्तिष्ठꣳस्तिष्ठन्तं चेदभिक्रामन्नभिक्रामन्तं चेदभिधावन्स एवं वर्त्तमानोऽमुत्राद्य वसत्यमुत्राद्य वस-

तीति तस्य स्नातकस्य कीर्तिर्भवति त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति समाप्य वेदमसमाप्य व्रतं यः समावर्त्तते स विद्यास्नातकः समाप्य व्रतमसमाप्य वेदं यः समावर्त्तते स व्रतस्नातक उभयꣳ समाप्य यः समावर्त्तते स विद्याव्रतस्नातक इत्याषोडशाद्वर्षाद्ब्राह्मणस्यानतीतः[1] कालो भवत्याद्वाविꣳशाद्राजन्यस्याचतुर्विꣳशाद्वैश्यस्यात ऊर्ध्वं पतितसावित्रीका भवन्ति नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्न चैभिर्व्यवहरेयुः कालातिक्रमे नियतवत्त्रिपुरुषं पतितसावित्रीकाणामपत्ये संस्कारो नाध्यापनं च तेषाꣳ संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा काममधीयीरन्व्यवहार्या भवन्तीति वचनात् ॥ ६ ॥ सूत्रस्यार्द्धः ॥ खण्डानि ॥ ३० ॥ अथोपनीतो ब्राह्मणस्त्रिशिखः शिखी जटिलो मुण्डो वाऽक्षारालवणाशी स्यात्सावित्रꣳ षड्रात्रं त्रिरात्रꣳ सद्यःकालं वा चरेत्तदेव व्रतमुदीक्ष्य दण्डमपो निधाय मेखलां यज्ञोपवीतं चाप्स्वन्तरिति प्रत्यृचं नमो वरुणायेति त्रिमधुरं दत्त्वा ततोऽस्याऽऽग्नेयं प्रथमं वेदव्रतमादिशेद्ब्राह्मणक्षत्रियविशां पञ्च सांवत्सरिकाणि

---

१ अनतीतः काल इति हरिहरगदाधरजयरामाः । नातीतः काल इति कर्कः ।

वेदव्रतानि भवन्त्याग्नेयꣳशुक्रियमौपनिषदꣳ शौलभं गोदानमिति पञ्च सांवत्सरिकाणि वेदव्रतानि चरित्वा स्नात्वोपव्रतं चरेत्त्रिष्ववगुण्ठनꣳ शुक्रियादिषु शुक्रियꣳ शुक्रभिः श्रावयेदौपनिषदमौपनिषद्भिः शौलभꣳ शौलभिनीभिरथवा विद्यमान आब्रह्मन्नुदीरतामानो भद्रा आशुः शिशान इमानुकमिति च वेदशिरसाऽवगुण्ठयेदवगुण्ठनीं त्रिवलिं पञ्चवलिं वा नाभिदेशात्प्रच्छाद्य वाग्यतोऽरण्येऽधः शयीत ग्रामे गोष्ठे देवतायतने वा व्युष्टायामवगुण्ठनीमरण्ये विसृजेदहश्श्रमस्योदुत्यं चित्रन्देवानामित्युदितेऽर्कं जपति वर्षति द्यौः शान्तिरिति शान्तिं करोति शान्तिभाजनं गुरवे दद्यादेवमेवावगुण्ठनीं च गोदाने गोमिथुनं तस्माद्गोदानमिति तस्माद्गोदानमिति ॥ ७ ॥ वेदꣳसमाप्य स्नायाद्ब्रह्मचर्यं वाऽष्टाचत्वारिꣳशकं द्वादशकेऽप्येके गुरुणाऽनुज्ञातो विधिर्विधेयस्तर्कश्च वेदः षडङ्गमेके न कल्पमात्रे कामं तु याज्ञिकस्योपसङ्गृह्य गुरुꣳ समिधोऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात्स्थित्वाऽष्टानामुदकुम्भानां येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषो मनोहास्खलो विरुजस्तनूदूषुरिन्द्रियहा तान्विजहामि यो रोचनस्तामिह गृह्णामीत्येकस्मादपो

गृहीत्वा तेनाभिषिञ्चते तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसायेति येन श्रियमकृणुतां येनावमृशताꣳसुरां येनाक्ष्यावभ्यषिञ्चतां यद्वा तदश्विना यश इत्यापोहिष्ठेति च प्रत्यृचं त्रिभिस्तूष्णीमितरैरुदुत्तममितिमेखलामुन्मुच्य दण्डं निधाय वासोऽन्यत्परिधायाऽऽदित्यमुपतिष्ठत उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मागमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शतसनिं मा कुर्वाविदन्मागमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायं यावभिरस्थात्सहस्रसनिरसि सहस्रसनिं मा कुर्वाविदन्मा गमयेति दधि तिलान्वा प्राश्य जटालोमनखान्[1] सꣳहृत्यौदुम्बरे दन्तान्धावेताऽन्नाद्याय व्यूहध्वꣳसोमो राजाऽयमागमत् ॥ स मे मुखं प्रमाक्ष्यते यशसा च भगेन चेत्युत्साद्य पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ मे तर्पय[2] चक्षुर्मे तर्पय श्रोत्रं मे तर्पयेति पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणानिषिच्यानुलिप्य जपेत्सुचक्षा अहमक्षीभ्यां भूयास-

१ "नखानि" इत्यपि पाठः । २ समानव्यानौ मे तर्पय इति पाठः ॥

ऽःसुवर्चा मुखेन ॥ सुश्रुत्कर्णाभ्यां भूयासमित्यहतं वासो धौतं वाऽमौत्रेणाच्छादयीत परिधास्यै यशो
धास्यै दीर्घायुत्वाय जरदष्टिरस्मि ॥ शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्य
इत्यथोत्तरीयं यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती ॥ यशो भगश्च मा विन्दद्यशो मा प्रति-
पद्यतामित्येकं चेत् पूर्वस्योत्तरवर्गेण प्रच्छादयीत सुमनसः प्रतिगृह्णाति या आहरज्जमदग्निः श्रद्धायै
कामायेन्द्रियाय ता अहं प्रतिगृह्णामि यशसा च भगेन चेत्यथावबध्नीते यद्यशोऽप्सरसामिन्द्रश्चकार
विपुलं पृथु ॥ तेन सङ्ग्रथिताः सुमनस आवध्नामि यशो मयीत्युष्णीषेण शिरो वेष्टयते युवा
सुवासा इत्यलङ्करणमसि भूयोऽलङ्करणं भूयादिति कर्णवेष्टकौ वृत्रस्येत्यपङ्क्तेऽक्षिणी रोचिष्णुरसी-
त्यात्मानमादर्शे प्रेक्षते छत्रं प्रतिगृह्णाति बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्द्धेहीति प्रतिष्ठेस्थो विश्वतो मा पातामित्युपानहौ प्रतिमुञ्चते विश्वाभ्यो मा नाष्ट्राभ्यस्परि-
पाहि सर्वत इति वैणवं दण्डमादत्ते दन्तप्रक्षालनादीनि नित्यमपि वासश्छत्रोपानहश्चापूर्वाणि
चेन्मन्त्रः ॥ ८ ॥ स्नातस्य यमान्वक्ष्यामः । कामादितरो नृत्यगीतवादित्राणि न कुर्यान्न च गच्छे-

त्कामं तु गीतं गायति वैव गीते वा रमत इति श्रुतेर्ह्यपरं क्षेमे नक्तं ग्रामान्तरं न गच्छेन्न च धावेदुद्पानावेक्षणवृक्षारोहणफलप्रपतनसन्धिसर्पणविवृतस्नानविषमलङ्घनशुष्कवदनसन्ध्याऽऽदित्यप्रेक्षणभैक्षणानि न कुर्यान्न ह वै स्नात्वा भिक्षेतापह वै स्नात्वा भिक्षां जयतीति श्रुतेर्वर्षत्यप्रावृतोव्रजेद्यं मे वज्रः पाप्मानमपहनदित्यप्स्वात्मानं नावेक्षेताजातलोम्नीं विपुंस्सीं षण्ढं च नोपहसेन्न गच्छेद्गर्भिणीं विजन्येति ब्रूयात्सकुलमिति नकुलं भगालमिति कपालं मणिधनुरितीन्द्रधनुर्गां धयन्तीं परस्मै नाचक्षीतोर्वरायामनन्तर्हितायां भूमावुत्सर्पीस्तिष्ठन्न मूत्रपुरीषे कुर्यात्स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत विकृतं वासो नाच्छादयीत दृढव्रतो वधत्रः स्यात्सर्वत आत्मानं गोपायेत् सर्वेषां मित्रमिव ॥ (शुक्रियमध्येष्यमाणः पाठः) ॥९॥ तिस्रो रात्रीर्व्रतं चरेदमांस्साश्यमृण्मयपायी स्त्रीशूद्रशवकृष्णशकुनिशूनां च दर्शनमसम्भाषणं च तैः शवशूद्रसूतकान्नानि च नाद्यान्मूत्रपुरीषे ष्ठीवनं चातपे न कुर्यात्सूर्याच्चात्मानं नान्तर्दधीत तप्तेनोदकार्थान्कुर्वीताऽवज्योत्य रात्रौ भोजनꣳसत्यवदनमेव वा दीक्षितोऽप्यातपादीनि कुर्यात्प्रवर्ग्यवाँश्चेत् ॥ १० ॥ इति षोडशाकर्म समाप्तम् ॥ अथातः

पञ्च महायज्ञा वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयाद्ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमत-
य इति भूतगृह्येभ्यो मणिके त्रीन् पर्जन्यायाद्भ्यः पृथिव्यै धात्रे विधात्रे च द्वार्ययोः प्रतिदिशं
वायवे दिशां च मध्ये त्रीन्ब्राह्मणेऽन्तरिक्षाय सूर्याय विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यस्ते-
षामुत्तरत उषसे भूतानां च पतये परं पितृभ्यः स्वधा नम इति दक्षिणतः पात्रं निर्णिज्योत्तरा-
परस्यां दिशि निनयेद्यक्ष्मैतत्त इत्युद्धृत्याग्रं ब्राह्मणायावनेज्य दद्याच्छन्तत इति यथार्हं भिक्षुकान-
तिथींश्च सम्भजेरन् बालज्येष्ठा गृह्या यथार्हमश्नीयुः पश्चाद्गृहपतिः पत्नी च पूर्वो वा गृहपतिः तस्मादु
स्वादि(द्वि)ष्टं गृहपतिः पूर्वोऽतिथिभ्योऽश्नीयादिति श्रुतेरहरहः स्वाहा कुर्यादन्नाभावे केनचिदा-
काष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात् ॥११॥ अथातो धर्मजिज्ञासा। केशान्तादूर्ध्वमपत्नीक
उत्सन्नाग्निरनग्निको वा प्रवासी ब्रह्मचारी चान्वग्निरिति ग्रामाग्निमाहृत्य पृष्ठो दिवीत्यधिष्ठाप्य
त्रिभिश्च सावित्रैः प्रज्वाल्य ताँसवितुस्तत्सवितुर्विश्वानि देवसवितरिति पूर्ववदक्षतैर्हुत्वा पाकं
पचेत्तत्र वैश्वदेवं ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृतऽ-

इत्युपस्पृश्य पूर्ववद्बलिकर्मैवं कृते न वृथा पाको भवति न वृथा पाकं पचेन्न वृथापाकमश्नीयादत्र पिण्डपितृयज्ञः पश्चाद्याग्रायणानि कुर्यात् ॥१२॥ अथातोऽध्यायोपाकर्मौषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्याᳬ श्रावणस्य पञ्चमीᳬ हस्तेन वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति पृथिव्या अग्नय इत्यृग्वेदेऽन्तरिक्षाय वायव इति यजुर्वेदे दिवे सूर्यायेति सामवेदे दिग्भ्यश्चन्द्रमस इत्यथर्ववेदे ब्रह्मणे छन्दोभ्यश्चेति सर्वत्र प्रजापतये देवेभ्य ऋषिभ्यः श्रद्धायै मेधायै सदसस्पतयेऽनुमतय इति चैतदेव व्रतादेशनविसर्गेषु सदसस्पतिमित्यक्षतधानास्त्रिः सर्वेऽनुपठेयुर्हुत्वा हुत्वौदुम्बर्यास्तिस्रास्तिस्रः सामिध आदध्युरार्द्राः सपलाशा घृताक्ताः सावित्र्या ब्रह्मचारिणश्च पूर्वकल्पेन शन्नो भवन्त्वित्यक्षतधाना अखादन्तः प्राश्नीयुर्दधिक्राव्ण्ण इति दधि भक्षयेयुः स यावन्तं गणमिच्छेत्तावतस्तिलानाकर्षफलकेन जुहुयात्सावित्र्या शुक्रज्योतिरित्यनुवाकेन वा प्राशनान्ते प्रत्यङ्मुखेभ्य उपविष्टेभ्य ॐकारमुक्त्वा त्रिश्च सावित्रीमध्यायादीन्प्रब्रूयादृषिमुखानि बह्वृचानां पर्वाणि छन्दोगानाᳩसूक्तान्यथर्वणानाᳩ सर्वे जपन्ति सह नोऽस्तु सह नोऽवतु सह न इदं वीर्यवदस्तु ब्रह्म ॥ इन्द्रस्तद्वेद येन यथा न

विद्विषामह इति त्रिरात्रं नाधीयीरँल्लोमनखानामनिकृन्तनमेके प्रागुत्सर्गात् ॥ १३ ॥ वातेऽमावा-
स्यायामिति सर्वानध्यायः ॥ श्राद्धाशने चोल्कावस्फूर्ज्जद्भूमिचलनाग्न्युत्पातेष्वृतुसन्धिषु चाकाल-
मुत्सृष्टेष्वभ्रदर्शने सर्वरूपे च त्रिरात्रं त्रिसन्ध्यं वा भुक्त्वाऽऽर्द्रपाणिरुदके महानिशायाꣳसन्धिवेल-
योरन्तःशवे ग्रामे ग्रामान्तर्दिवाकीर्त्ये[1] धावतोऽभिशस्तपतितदर्शनाश्चर्याभ्युदयेषु च तत्कालं नीहारे
वादित्रशब्द आर्त्तस्वने ग्रामान्ते श्मशाने श्वगर्दभोलूकशृगालसामशब्देषु शिष्टाचरिते च तत्कालं
गुरौ प्रेतेऽपोऽभ्यवेयाद्दशरात्रं चोपरमेत्सतानूनप्त्रिणि सब्रह्मचारिणि च त्रिरात्रमेकरात्रमसब्रह्मचा-
रिण्यर्द्धषष्ठान्मासानधीत्योत्सृजेयुरर्द्धसप्तमासान्वाऽथेमामृचं जपन्त्युभा कवी युवा यो नो धर्मः
परापतत् ॥ परिसंख्यस्य धर्मिणो विसंख्यानि विसृजामह इति त्रिरात्रꣳसहोष्य विप्रातिष्ठेरन् ॥ १४ ॥
पौषस्य रोहिण्यां मध्यमायां वाऽष्टकायामध्यायानुत्सृजेयुरुदकान्तं गत्वाऽद्भिर्देवाँश्छन्दाꣳसि वेदा-
नृषीन्पुराणाचार्यान् गन्धर्वानितराचार्यान्त्संवत्सरं च सावयवं पितॄनाचार्यान्स्वाँश्च तर्पयेयुः सावित्रीं

१ दिवाकीर्तिरिति कर्कसम्मतः पाठः ।

॥२३०॥

चतुरनुद्रुत्य विरता स्म इति प्रब्रूयुः क्षपणं प्रवचनं च पूर्ववत् ॥ १५ ॥ पुण्याहे लाङ्गलयोजनं ज्येष्ठया वेन्द्रदैवत्यमिन्द्रं पर्जन्यमश्विनौ मरुत उदलाकाश्यपꣳ स्वातिकारीꣳ सीतामनुमतिं च दध्ना तण्डुलैर्गन्धैरक्षतैरिष्ट्वाऽनडुहौ मधुघृते प्राशयेत्सीरा युञ्जन्तीति योजयेच्छुनꣳसुफाला इति कृषेत् फालं वा लभेत न वाऽभ्युपदेशाद्वपनाषङ्गाच्चाऽयमभिषिच्याकृष्टं तदा कृषेयुः स्थालीपाकस्य पूर्ववद्देवता यजेदुभयोर्व्रीहियवयोः प्रवपन्सीतायज्ञे च ततो ब्राह्मणभोजनम् ॥१६॥ (अथातो वापी-कूपतडागारामदेवतायतनानां प्रतिष्ठापनं व्याख्यास्यामस्तत्रोदगयन आपूर्यमाणपक्षे पुण्याहे तिथि-वारनक्षत्रकरणे च गुणान्विते तत्र वारुणं यवमयं चरुꣳ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति त्वन्नोऽअग्ने स त्वन्नोऽअग्नऽइमम्मे वरुण तत्त्वा यामि ये ते शतमयाश्चाग्नऽउदुत्तममुरुꣳहि राजा वरुणस्योत्तम्भनमग्नेरनीकमिति दशर्चꣳ हुत्वा स्थालीपाकस्य जुहोत्यग्नये स्वाहा सोमाय स्वाहा वरुणाय स्वाहा यज्ञाय स्वाहोग्राय स्वाहा भीमाय स्वाहा शतक्रतवे स्वाहा व्युष्ट्यै स्वाहा स्वर्गाय स्वाहेति

१ पुष्करिण्याम्

यथोक्तꣳ स्विष्टकृत्प्राशनान्ते जलचराणि क्षिप्त्वाऽलङ्कृत्य गां तारयित्वा पुरुषसूक्तं जपन्नाचार्याय वरं दत्त्वा कर्णवेष्टकौ वासाꣳसि धेनुर्दक्षिणा । ततो ब्राह्मणभोजनम् ॥ ) ॥ १७ ॥ अथातः श्रवणाकर्म श्रावण्यां पौर्णमास्याꣳस्थालीपाकꣳ श्रपयित्वाऽक्षतधानाश्चैककपालं पुरोडाशं धानानां भूयसीः पिष्ट्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहोत्यपश्वेतपदा जहि पूर्वेण चापरेण च ॥ सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहा ॥ न वै श्वेतस्याध्याचारेऽहिर्ददर्श कञ्चन ॥ श्वेताय वैदर्व्याय नमः स्वाहेति स्थालीपाकस्य जुहोति विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्चेति धानावन्तमिति धानानां घृताक्तान्सक्तून्सर्पेभ्यो जुहोत्याग्नेयपाण्डुपार्थिवानाꣳसर्पाणामधिपतये स्वाहा श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपतये स्वाहाऽभिभूःसौर्यदिव्यानाꣳ सर्पाणामधिपतये स्वाहेति सर्वहुतमेककपालं ध्रुवाय भौमाय स्वाहेति प्राशनान्ते सक्तूनामेकदेशꣳशूर्पे न्युप्योपनिष्क्रम्य बहिःशालायाः स्थण्डिल-मुपलिप्योल्कायां ध्रियमाणायां माऽन्तरागमतेत्युक्त्वा वाग्यतः सर्पानवनेजयत्याग्नेयपाण्डुपार्थिवा-नाꣳसर्पाणामधिपतेऽवनेनिक्ष्व श्वेतवायवान्तरिक्षाणाꣳसर्पाणामधिपतेऽवनेनिक्ष्वाभिभूःसौर्यदिव्या-

नाꣳ सर्पाणामधिपतेऽवनेनिक्ष्वेति यथावनिक्तं दर्व्योपघातꣳ सक्तून्सर्पेभ्यो बलिꣳ हरत्याग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपत एष ते बलिः श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपत एष ते बलिरभिभूःसौर्यदिव्यानाꣳसर्पाणामधिपत एष ते बलिरित्यवनेज्य पूर्ववत्कङ्कतैः प्रलिखत्याग्नेयपाण्डुपार्थिवानाꣳ सर्पाणामधिपते प्रलिखस्व श्वेतवायवान्तरिक्षाणाꣳ सर्पाणामधिपते प्रलिखस्वाभिभूःसौर्यदिव्यानाꣳसर्पाणामधिपते प्रलिखस्वेत्यञ्जनानुलेपनꣳस्रजश्चाञ्जस्वानुलिम्पस्व स्रजोऽपि नह्यस्वेति सक्तुशेषꣳस्थण्डिले न्युप्योदपात्रेणोपनिनीयोपतिष्ठते नमोऽस्तु सर्पेभ्य इति तिसृभिः स यावत्कामयेत न सर्पा अभ्युपेयुरिति तावत्सन्ततयोदधारया निवेशनं त्रिः परिषिञ्चन्परीयादपश्वेतपदा जहीति द्वाभ्यां दर्वीं शूर्पञ्च प्रक्षाल्य प्रतप्य प्रयच्छति द्वारदेशे मार्जयन्त आपोहिष्ठेति तिसृभिरनुगुप्तमेतꣳसक्तुशेषं निधाय ततोऽस्तामितेऽस्तामितेऽग्निं परिचर्य दर्व्योपघातꣳसक्तून्सर्पेभ्यो बलिꣳ हरेदाग्रहायण्यास्तꣳ हरन्तन्नान्तरेण गच्छेयुर्दर्व्याचमनं प्रक्षाल्य निदधाति धानाः प्राश्नन्त्यसꣳ

१ स्थालीपाकस्य जुहोतीन्द्राय स्वाहेति वैदिकपाठः ॥

स्यूतास्ततो ब्राह्मणभोजनम् ॥ १८ ॥ प्रौष्ठपद्यामिन्द्रयज्ञः । पायसमैन्द्रꣳश्रपयित्वाऽपूपाँश्चापूपैस्ती-र्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोतीन्द्रायेन्द्राण्या अजायैकपदेऽहिर्बुध्न्याय प्रौष्ठपदाभ्यश्चेति प्राशनान्ते मरुद्भ्यो बलिꣳ हरत्यहुतादो मरुत इति श्रुतेराश्वत्थेषु पलाशेषु मरुतोऽश्वत्थे तस्थु-रिति वचनाच्छुक्रज्योतिरिति प्रतिमन्त्रं विमुखेन च मनसा नामान्येषामेतानीति श्रुतेरिन्द्रं दैवीरिति जपति ततो ब्राह्मणभोजनम् ॥ १९ ॥ आश्वयुज्यां पृषातकाः पायसमैन्द्रꣳ श्रपयित्वा दधिमधुघृतमिश्रं जुहोतीन्द्रायेन्द्राण्या अश्विभ्यामाश्वयुज्यै पौर्णमास्यै शरदे चेति प्राशनान्ते दधिपृषातकमञ्जलिना जुहोत्यूनं मे पूर्यतां पूर्णं मे मा व्यगात्स्वाहेति दधिमधुघृतमिश्रममात्या अवेक्षन्त आयात्विन्द्र इत्यनुवाकेन मातृभिर्वत्सान्सꣳसृज्य ताꣳरात्रिमाग्रहायणीं च ततो ब्राह्मण-भोजनम् ॥ २० ॥ अथ सीतायज्ञो व्रीहियवाणां यत्र यत्र यजेत तन्मयꣳ स्थालीपाकꣳ श्रपये-त्कामादीजानोऽन्यत्रापि व्रीहियवयोरेवान्यतरꣳस्थालीपाकꣳश्रपयेन्न पूर्वचोदितत्वात्सन्देहोऽसम्भ-वाद्विनिवृत्तिः क्षेत्रस्य पुरस्तादुत्तरतो वा शुचौ देशे कृष्टे फलानुपरोधेन ग्रामे वोभयसम्प्रयोगाद-

विरोधाद्यत्र श्रपयिष्यन्नुपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय तन्मिश्रैर्दर्भैस्तीर्त्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति पृथिवी द्यौः प्रदिशो दिशो यस्मै द्युभिरावृताः । तमिहेन्द्रमुपह्वये शिवा नः सन्तु हेतयः स्वाहा । यन्मे किञ्चिदुपेप्सितमस्मिन्कर्मणि वृत्रहन् ॥ तन्मे सर्वꣳ समृध्यतां जीवतः शरदः शतꣳ स्वाहा ॥ सम्पत्तिर्भूतिर्भूमिर्वृष्टिर्ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ श्रीः प्रजामिहावतु स्वाहा ॥ यस्या भावे वैदिकलौकिकानां भूतिर्भवति कर्मणाम् ॥ इन्द्रपत्नीमुपह्वये सीताꣳ सा मे त्वनपायिनी भूयात्कर्मणि कर्मणि स्वाहा ॥ अश्वावती गोमती सूनृतावती बिभर्ति या प्राणभृतो अतन्द्रिता ॥ खलमालिनीमुर्वरामस्मिन्कर्मण्युपह्वये ध्रुवाꣳ सा मे त्वनपायिनी भूयात्स्वाहेति स्थालीपाकस्य जुहोति सीतायै यजायै शमायै भूत्या इति मन्त्रवत्प्रदानमेकेषाꣳ स्वाहाकारप्रदाना इति श्रुतेर्विनिवृत्तिः स्तरणशेषकुशेषु सीतागोप्तृभ्यो बलिꣳ हरति पुरस्ताद्ये त आसते सुधन्वानो निषङ्गिणः ॥ ते त्वा पुरस्ताद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममित्यथ दक्षिणतो निमिषा वर्मिण आसते ॥ ते त्वा दक्षिणतो गोपायन्त्वप्रमत्ता अनपायिनो

नम एषां करोम्यहं बलिमेभ्यो हरामीममित्यथ पश्चादाभुवः प्रभुवो भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिः ॥ ते त्वा पश्चाद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममित्यथोत्तरतो भीमा वायुः समाजवे ॥ ते त्वोत्तरतः क्षेत्रे खले गृहेऽध्वनि गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममिति प्रकृतादन्यस्मादाज्यशेषेण च पूर्ववद्बलिकर्म स्त्रियश्चोपयजेरन्नाचरितत्वात्सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत् सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत् ॥ २१ ॥ ॥ ॥ ॥ ॥

इति पारस्करगृह्यसूत्रे द्वितीयकाण्डं समाप्तम् ॥



# अथ तृतीयं काण्डम् ।

अनाहिताग्नेर्नवप्राशनन्नवᳪस्थालीपाकᳪश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति शतायुधाय शतवीर्याय शतोतये अभिमातिषाहे ॥ शतं यो नः शरदोऽजीजानिन्द्रो नेषदति दुरितानि विश्वा स्वाहा । ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति ॥ तेषां यो अज्यानिमजीजिमावहात्तस्मै नो देवाः परिधत्तेह सर्वे स्वाहेति । स्थालीपाकस्याऽऽग्रयणदेवताभ्यो हुत्वा जुहोति स्विष्टकृते च स्विष्टमग्ने अभितत्पृणीहि विश्वाँश्च देवः पृतना अविष्यत् । सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मध्ये ह्यजरन्न आयुः स्वाहेति । अथ प्राश्नात्यग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिर्भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावशेन समशीमहि त्वा । स नो मयोऽभूः पितो आविशस्व शं तोकाय तनुवे स्योन इत्यन्नपतीयया वाथ यवानामेत-

१ अन्नपतिशब्दो विद्यते यस्या सा अन्नपतीया तया अन्नपतीयया अत्र छप्रत्ययः ।

मुत्यं मधुना सञ्युतं यवꣳसरस्वत्या अधिवनाय चक्रुषुः ॥ इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव इति ततो ब्राह्मणभोजनम् ॥ १ ॥ मार्गशीर्ष्यां पौर्णमास्यामाग्रहायणीकर्म स्थालीपाकꣳ श्रपयित्वा श्रवणवदाज्याहुतीर्हुत्वाऽपरा जुहोति यां जनाः प्रतिनन्दन्ति रात्रीन्धेनुमिवायतीम् ॥ संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा ॥ संवत्सरस्य प्रतिमा या ताꣳ रात्रिमुपास्महे ॥ प्रजाꣳ सुवीर्यां कृत्वा दीर्घमायुर्व्यश्नवै स्वाहा ॥ संवत्सराय परिवत्सरायेदावत्सरायेद्वत्सराय वत्सराय कृणुते बृहन्नमः ॥ तेषां वयꣳसुमतौ यज्ञियानां ज्योग्जीता अहताः स्याम स्वाहा ग्रीष्मो हेमन्त उत नो वसन्तः शिवा वर्षा अभया शरन्नः । तेषामृतूनाꣳ शतशारदानां निवात एषामभये वसेम स्वाहेति स्थालीपाकस्य जुहोति सोमाय मृगशिरसे मार्गशीर्ष्यै पौर्णमास्यै हेमन्ताय चेति प्राशनान्ते सक्तुशेषꣳशूर्पे न्युप्योपनिष्क्रमणप्रभृत्यामार्जनान्मार्जनान्त उत्सृष्टो बलिरित्याह पश्चादग्नेः स्वस्तरमास्तीर्याहतं च वास आप्लुता अहतवाससः प्रत्यवरोहन्ति दक्षिणतः स्वामी जायोत्तरा यथाकनिष्ठमुत्तरतो दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रꣳशमी-

शाखसीतालोष्ठाश्मनो निधायाग्निमीक्षमाणो जपत्ययमग्निर्वीरतमोऽयं भगवत्तमः सहस्रसातमः ॥ सुवीर्योऽयं श्रैष्ठ्ये दधातु नाविति पश्चादग्नेः प्राञ्चमञ्जलिं करोति दैवीं नावमिति तिसृभिः स्रस्तरमारोहन्ति ब्रह्माणमामन्त्रयते ब्रह्मन्प्रत्यवरोहामेति ब्रह्मानुज्ञाताः प्रत्यवरोहन्त्यायुः कीर्त्तिर्यशो बलमन्नाद्यं प्रजामित्युपेता जपन्ति सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिधीयतान्नः ॥ शिवा नो वर्षाः सन्तु शरदः सन्तु नः शिवा इति स्योना पृथिवि नो भवेति दक्षिणपार्श्वैः प्राक्शिरसः संविशन्त्युपोदुत्तिष्ठन्त्युदायुषा स्वायुषोत्पर्जन्यस्य वृष्ट्या पृथिव्याः सप्तधामभिरित्येवं द्विरपरं ब्रह्मानुज्ञाता अधःशयीरंश्चतुरो मासान्यथेष्टं वा ॥२॥ ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्येत्यपूपमाꣳसशाकैर्यथासङ्ख्यं प्रथमाऽष्टका पक्षाष्टम्याꣳस्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति त्रिꣳशत्स्वसार उपयन्ति निष्कृतꣳसमानं केतुं प्रतिमुञ्चमानाः ॥ ऋतूँस्तन्वते कवयः प्रजानतीर्मध्ये छन्दसः परियन्ति भास्वतीः स्वाहा ॥ ज्योतिष्मती प्रतिमुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि ॥ विपश्यन्ति पशवो जायमाना नानारूपामातुरस्या उपस्थे स्वाहा ॥ एकाऽष्टका तपसा

तप्यमाना जजान गर्भं महिमानमिन्द्रम् ॥ तेन दस्यून्व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः स्वाहा ॥ अनानुजामनुजां मामकर्त्त सत्यं वदन्त्यन्विच्छ एतत् ॥ भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त स्वाहा ॥ अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम् ॥ भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्रयुक्त स्वाहा ॥ पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नी मृतवोऽनु पञ्च ॥ पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरधिलोकमेकꣳ स्वाहा ॥ ऋतस्य गर्भः प्रथमा व्यूषिष्यपामेका महिमानं बिभर्ति । सूर्यस्यैका चरति निष्कृतेषु धर्मस्यैका सवितैकान्नियच्छतु स्वाहा । या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे ॥ सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाꣳ स्वाहा ॥ शुक्रऋषभा नभसा ज्योतिषाऽगाद्विश्वरूपा शबली, अग्निकेतुः ॥ समानमर्थꣳ स्वपस्यमाना विभ्रती जरामजर उष आगाः स्वाहा ॥ ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजानाम् ॥ एका सती बहुधोषो व्योच्छत्सा जीर्णा त्वं जरयसि सर्वमन्यत्स्वाहेति । स्थालीपाकस्य जुहोति शान्ता पृथिवी शिवमन्तरिक्षꣳशन्नो द्यौरभयं कृणोतु ॥ शन्नोऽदिशः प्रदिश

आदिशो नोऽहोरात्रे कृणुतं दीर्घमायुर्व्यश्नवै स्वाहा ॥ आपो मरीचीः परिपान्तु सर्वतो धाता समुद्रो अपहन्तु पापम् । भूतं भविष्यदकृन्तद्विश्वमस्तु मे ब्रह्माभिगुप्तः सुरक्षितः स्याᳪस्वाहा ॥ विश्वे आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतश्च सन्तु ॥ ऊर्जं प्रजाममृतन्दीर्घमायुः प्रजापति-र्मयि परमेष्ठी दधातु नः स्वाहेति च । अष्टकायै स्वाहेति मध्यमा गवा तस्यै वपां जुहोति वह वपां जातवेदः पितृभ्य इति श्वोऽन्वष्टकासु सर्वासां पार्श्वसक्थिसव्याभ्यां परिवृते पिण्डपितृयज्ञवत्स्त्री-भ्यश्चोपसेचनञ्च कर्षूषु सुरया तर्पणेन चाञ्जनानुलेपनᳪस्रजश्चाचार्यायान्तेवासिभ्यश्चानपत्येभ्य इच्छन् मध्या वर्षे च तुरीया शाकाष्टका ॥ ३ ॥ अथातः शालाकर्म पुण्याहे शालां कारयेत्तस्या अवटमभिजुहोत्यच्युताय भौमाय स्वाहेति स्तम्भमुच्छ्रयतीमामुच्छ्रयामि भुवनस्य नाभिं वसोर्धारां प्रतरणीं वसूनाम् ॥ इहैव ध्रुवान्निमिनोमि शालां क्षेमे तिष्ठतु घृतमुक्षमाणा ॥ अश्वावती गोमती सूनृतावत्युच्छ्रयस्व महते सौभगाय ॥ आ त्वा शिशुराक्रन्दत्वा गावो धेनवो वाश्यमानाः ॥ आ त्वा कुमारस्तरुण आवत्सो जगदैः सह ॥ आ त्वा परिस्रुतः कुम्भ आदध्नः कलशैरुप क्षेमस्य

पत्नी बृहती सुवासा रयिन्नो धेहि सुभगे सुवीर्यम् ॥ अश्वावद्गोमदूर्जस्वत्पर्णं वनस्पतेरिव ॥ अभि-
नः पूर्य्यताꣳरयिरिदमनुश्रेयो वसान इति चतुरः प्रपद्यतेऽभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो
ब्रह्माणमुपवेश्योत्तरत उद्पात्रं प्रतिष्ठाप्य स्थालीपाकꣳश्रपयित्वा निष्क्रम्य द्वारसमीपे स्थित्वा
ब्रह्माणमामन्त्रयते ब्रह्मन्प्रविशामीति ब्रह्मानुज्ञातः प्रविशत्यृ(चं)तं प्रपद्ये शिवं प्रपद्य इत्याज्यꣳ-
सँस्कृत्येहरातिरित्याज्याहुतीर्हुत्वाऽपरा जुहोति वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशो अनमीवो
भवा नः ॥ यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे स्वाहा ॥ १ ॥ वास्तोष्पते
प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो ॥ अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति तन्नो
जुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे स्वाहा ॥२॥ वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रण्वया
गातुमत्या ॥ पाहि क्षेम उत योगे वरन्नो यूयम्पात स्वस्तिभिः सदा नः स्वाहा ॥ ३ ॥ अमीवहा
वास्तोष्पते विश्वा रूपाण्याविशन् ॥ सखा सुशेव एधि नः स्वाहेति स्थालीपाकस्य जुहोत्यग्निमिन्द्रं
बृहस्पतिं विश्वान्देवानुपह्वये ॥ सरस्वतीं च वाजीं च वास्तु मे दत्त वाजिनः स्वाहा ॥ सर्पदेव-

जनान्सर्वान् हिमवन्तꣳसुदर्शनम्। वसूँश्च रुद्रानादित्यानीशानं जगदैः सह॥ एतान्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा॥ पूर्वाह्णमपराह्णञ्चोभौ मध्यन्दिना सह॥ प्रदोषमर्द्धरात्रं च व्युष्टां देवीं महापथाम्॥ एतान्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा। कर्तारं च विकर्तारं विश्वकर्माणमोषधींश्च वनस्पतीन्॥ एतान्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा॥ धातारं च विधातारं निधीनां च पतिꣳसह॥ एतान्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा॥ स्योनꣳ शिवमिदं वास्तु दत्तं ब्रह्मप्रजापती॥ सर्वाश्च देवताः स्वाहेति प्राशनान्ते काꣳस्ये सम्भारानोप्यौदुम्बरपलाशानि ससुराणि शाड्वलं गोमयं दधि मधु घृतं कुशान्यवाँश्चासनोपस्थानेषु प्रोक्षेत्पूर्वे सन्धावभिमृशति श्रीश्च त्वा यशश्च पूर्वे सन्धौ गोपायेतामिति। दक्षिणे सन्धावभिमृशति यज्ञश्च त्वा दक्षिणा च दक्षिणे सन्धौ गोपायेतामिति पश्चिमे सन्धावभिमृशति॥ अन्नं च त्वा ब्राह्मणश्च पश्चिमे सन्धौ गोपायेतामित्युत्तरे सन्धावभिमृशत्यूर्क्च त्वा सूनृता चोत्तरे सन्धौ गोपायेतामिति निष्क्रम्य दिश उपतिष्ठते केता च मा सुकेता च पुरस्ताद्गोपायेतामित्यग्निर्वै

केतादित्यः सुकेता तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पुरस्ताद्गोपायेतामित्यथ दक्षिणतो गोपायमानं च मा रक्षमाणा च दक्षिणतो गोपायेतामित्यहर्वै गोपायमानꣳरात्री रक्षमाणा ते प्रपद्ये ताभ्यां नमोऽस्तु ते मा दक्षिणतो गोपायेतामित्यथ पश्चाद्दीदिविश्च मा जागृविश्च पश्चाद्गोपायेतामित्यन्नं वै दीदिविः प्राणो जागृविस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पश्चाद्गोपायेतामित्यथोत्तरतः स्वप्नश्च मानवद्राणश्चोत्तरतो गोपायेतामिति चन्द्रमा वा अस्वप्नो वायुरनवद्राणस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मोत्तरतो गोपायेतामिति निष्ठितां प्रपद्यते धर्मस्थूणा राजꣳश्रीस्तूपमहोरात्रे द्वारफलके ॥ इन्द्रस्य गृहा वसुमन्तो वरूथिनस्तानहं प्रपद्ये सह प्रजया पशुभिः सह ॥ यन्मे किञ्चिदस्त्युपहूतः सर्वगणसखायसाधुसंवृतः । तां त्वा शालेरिष्टवीरा गृहान्नः सन्तु सर्वत इति ततो ब्राह्मणभोजनम् ॥ ४ ॥ अथातो मणिकावधानमुत्तरपूर्वस्यां दिशि यूपवदवटं खात्वा कुशानास्तीर्याक्षतानरिष्टकाँ( सुमनसः कपर्दिकान् )श्चान्यानि चाभिमङ्गलानि तस्मिन्मिनोति मणिकꣳ समुद्रोऽसीत्यप आसिञ्चत्यापो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च ॥

रायश्च स्थ स्वपत्यस्य पत्नी सरस्वती तद्गृणते वयोऽधादित्यापोहिष्ठेति च तिसृभिस्ततो ब्राह्मणभोजनम् ॥ ५ ॥ अथातः शीर्षरोगभेषजं पाणी प्रक्षाल्य भ्रुवौ विमार्ष्टि चक्षुर्भ्यां श्रोत्राभ्यां गोदानाच्छुबुकादधि । यक्ष्मꣳशीर्षण्यꣳरराटाद्विवृहामीमामित्यर्द्धश्चेदवभेदकविरूपाक्ष श्वेतपक्ष महायशः । अथो चित्रपक्ष शिरो मास्याभिताप्सीदिति क्षेम्यो ह्येव भवति ॥ ६ ॥ उतूलपरिमेः ह्स्वपतो जीवविषाणे स्वं मूत्रमासिच्यापसल(मेव)वि त्रिः परिषिञ्चन्परीयात् परित्वा गिरेरहं परिमातुः परिस्वसुः परिपित्रोश्च भ्रात्रोश्च सख्येभ्यो विसृजाम्यहम् ॥ उतूल परिमीढोऽसि परिमीढः क्व गमिष्यसीति स यदि भ्रम्याद्वावाग्निमुपसमाधाय घृताक्तानि कुशेण्डुानि जुहुयात्परित्वा ह्वलनो ह्वलनिर्वृत्तेन्द्रवीरुधः ॥ इन्द्रपाशेन सित्वा मह्यं मुक्त्वाऽथान्यमानये दिती क्षेम्यो ह्येव भवति ॥ ७ ॥ शूलगवः स्वर्ग्यः पशव्यः पुत्र्यो धन्यो यशस्य आयुष्य औपासनमरण्यꣳहृत्वा वितानꣳसाधयित्वा रौद्रं पशुमालभेत साण्डं गौर्वा शब्दाद्वपाꣳश्रपयित्वा स्थालीपाकमवदानानि च रुद्राय वपामन्तरिक्षाय वसाꣳस्थालीपाकमिश्राण्यवदानानि जुहोत्यग्नये रुद्राय

शर्वाय पशुपतय उग्रायाशनये भवाय महादेवायेशानायेति च वनस्पतिस्विष्टकृदन्ते ॥ दिग्व्याघारणं व्याघारणान्ते पत्नी सव्याजयन्तीन्द्राण्यै रुद्राण्यै शर्वाण्यै भवान्या अग्निं गृहपतिमिति लोहितं पालाशेषु कूर्चेषु रुद्राय सेनाभ्यो बलिꣳ हरति यास्ते रुद्र पुरस्तात्सेनास्ताभ्य एष ते बलिस्ताभ्यस्ते नमो यास्ते रुद्र दक्षिणतः सेनास्ताभ्य एष ते बलिस्ताभ्यस्ते नमो यास्ते रुद्र पश्चात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमो यास्ते रुद्रोत्तरतः सेनास्ताभ्य एष ते बलिस्ताभ्यस्ते नमो यास्ते रुद्रोपरिष्टात्सेनास्ताभ्य एष ते बलिस्ताभ्यस्ते नमो यास्ते रुद्राधस्तात्सेनास्ताभ्य एष ते बलिस्ताभ्यस्ते नम इत्यूवध्यँल्लोहितलिप्तमग्नौ प्रास्यत्यधो वा निखनत्यनुवातं पशुमवस्थाप्य रुद्रैरुपतिष्ठते प्रथमोत्तमाभ्यां वाऽनुवाकाभ्यां नैतस्य पशोर्ग्रामꣳहरत्येतेनैव गोयज्ञो व्याख्यातः पायसेनानर्थलुप्तस्तस्य तुल्यवया गौर्दक्षिणा ॥ ९ ॥ अथ वृषोत्सर्गो गोयज्ञेन व्याख्यातः कार्त्तिक्यां पौर्णमास्याꣳ रेवत्यां वाऽऽश्वयुजस्य मध्येगवाꣳसुसमिद्धमग्निं कृत्वाऽऽज्यꣳसंस्कृत्येहरतिरिति षट् जुहोति प्रतिमन्त्रं पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः ॥ पूषा वाजꣳसनोतु नः स्वाहेति

पौष्णस्य जुहोति रुद्रान् जपित्वैकवर्णं द्विवर्णं वा यो वा यूथं छादयति यं वा यूथं छादयेद्रोहितो वैव स्यात्सर्वाङ्गैरुपेतो जीववत्सायाः पयस्विन्याः पुत्रो यूथे च रूपस्वित्तमः स्यात्तमलङ्कृत्य यूथे मुख्याश्चतस्रो वत्सतर्यस्ताश्चालङ्कृत्य एतं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण ॥ मानः साप्तजनुषाऽसुभगा रायस्पोषेण समिषा मदेमेत्येतयैवोत्सृजेरन्नभ्यस्थमभिमन्त्रयते मयोभूरित्यनुवाकशेषेण ( वामे चक्रं दक्षिणे त्रिशूलम् )। सर्वासां पयसि पायसं श्रपयित्वा ब्राह्मणान्भोजयेत् पशुमप्येके कुर्वन्ति तस्य शूलगवेन कल्पो व्याख्यातः ॥ १० ॥ अथोदककर्माद्विवर्षे प्रेते मातापित्रोराशौचं शौचमेवेतरेषामेकरात्रं त्रिरात्रं वा शरीरमदग्ध्वा निखनन्त्यन्तःसूतके चेदोत्थानादाशौचं सूतकवन्नात्रोदककर्म द्विवर्षप्रभृति प्रेतमाश्मशानात्सर्वेऽनुगच्छेयुर्यमगाथां गायन्तो यमसूक्तं च जपन्त इत्येके यद्युपेतो भूमिजोषणादिसमानमाहिताग्नेरोदकान्तस्य गमनाच्छालाग्निना दहन्त्येनमाहितश्चेत्तूष्णीं ग्रामाग्निनेतरं सञ्युक्तं मैथुनं वो याचेरन्नुदकं करिष्यामह इति कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते कुरुध्वमित्येवेतरस्मिन् सर्वे ज्ञातयोऽपोऽभ्यवयन्त्यासप्तमात्पुरुषाद्द-

शमाद्वा समानग्रामवासे यावत्सम्बन्धमनुस्मरेयुरेकवस्त्राः प्राचीनावीतिनः सव्यस्यानामिकयाऽपनोद्यापनः शोशुचदघमिति दक्षिणामुखा निमज्जन्ति प्रेतायोदकꣳ सकृत्प्रसिञ्चन्त्यञ्जलिनाऽसावेतत्त उदकमित्युत्तीर्णाञ्छुचौ देशे शाड्वलवत्युपविष्टांस्तत्रैतानपवदेयुरनवेक्षमाणा ग्राममायान्ति रीतीभूताः कनिष्ठपूर्वा निवेशनद्वारे पिचुमन्दपत्राणि विदश्याचम्योदकमग्निं गोरसमयं गौरसर्षपाँस्तैलमालभ्याश्मानमाक्रम्य प्रविशन्ति त्रिरात्रं ब्रह्मचारिणोऽधःशायिनो न किञ्चन कर्म कुर्युर्न प्रकुर्वीरन् क्रीत्वा लब्ध्वा वा दिवैवान्नमश्नीयुरमाꣳसं प्रेताय पिण्डं दत्त्वाऽवनेजनप्रत्यवनेजनेषु नामग्राहं मृन्मये हताꣳ रात्रौ क्षीरोदके विहायसि निदध्युः प्रेतायात्र स्नाहीति त्रिरात्रꣳशावमाशौचं दशरात्रमित्येके न स्वाध्यायमधीयीरन् नित्यानि निवर्तेरन्वैतानवर्जꣳ शालाग्नौ चैकेऽन्य एतानि कुर्युः प्रेतस्पर्शिनो ग्राममप्र प्रविशेयुरानक्षत्रदर्शनाद्रात्रौ चेदादित्यस्य प्रवेशनादि समानमितरैः पक्षं द्वौ वौऽऽशाचमाचार्ये चैवं मातामहयोश्च स्त्रीणां चाप्रत्तानां प्रत्तानामितरे कुर्वीरन् ताश्च तेषां प्रोषितश्चेत्प्रेगा——णप्रभृति कृतोदकाः कालशेषमासीरनतीतश्चेदेकरात्रं त्रिरात्रं वाथ कामोदकान्यृत्वि-

वश्वशुरसखिसम्बन्धिमातुलभागिनेयानां प्रत्तानां चैकादश्यामयुग्मान्ब्राह्मणान्भोजयित्वा मांस-
वत्प्रेतायोद्दिश्य गामप्येके घ्नन्ति पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात्पुत्रवाँश्चेन्निवर्तेत चतुर्थः
संवत्सरं पृथगेके न्यायस्तु न चतुर्थः पिण्डो भवतीतिश्रुतेरहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्या-
त्पिण्डमप्येके निपृणन्ति ॥ ११ ॥ पशुश्चेदाप्लव्या गामग्रेणाग्नीन्परीत्य पलाशशाखान्निहन्ति परिव्यय-
णोपाकरणनियोजनप्रोक्षणान्यावृता कुर्याद्यच्चान्यत्परिपशव्ये हुत्वा तूष्णीमपराः पञ्च वपोद्धरणं
चाभिघारयेद्देवताश्चादिशेदुपाकरणनियोजनप्रोक्षणेषु स्थालीपाके चैवं वपाꣳहुत्वाऽवदानान्यवद्यति
सर्वाणि त्रीणि पञ्च वा स्थालीपाकमिश्राण्यवदानानि जुहोति पश्वङ्गं दक्षिणा यद्देवते तद्दैवतं यजे-
त्तस्मै च भागं कुर्यात्तं च ब्रूयादिममनुप्रापयेति नद्यन्तरे नावं कारयेन्न वा ॥ १२ ॥ अथातोऽवकीर्णि-
प्रायश्चित्तममावास्यायां चतुष्पथे गर्दभं पशुमालभते निर्ऋतिं पाकयज्ञेन यजेताप्स्ववदानहोमो भूमौ
पशुपुरोडाशश्रपणं तां ऊर्विं परिदधीतोर्ध्वबालामित्येके संवत्सरं भिक्षाचर्यं चरेत्स्वकर्म परिकीर्तयन्नथा-
परमाऽऽज्याहुतीर्जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि कामकामाय स्वाहा ॥ कामाभिदु(द्रु)ग्धोऽ-

स्म्यभिदु(द्रु)ग्धोऽस्मि कामकामाय स्वाहेत्यथोपतिष्ठते सम्मा सिञ्चन्तु मरुतः समिन्द्रः सम्बृहस्पतिः सम्मायमग्निः सिञ्चतु प्रजया च धनेन चेत्येतदेव प्रायश्चित्तम् ॥ १३ ॥ अथातः सभाप्रवेशनᳬ सभामभ्येति सभाङ्गिरसि नादिर्नामासि त्विषिर्नामासि तस्यै ते नम इत्यथ प्रविशति सभा च मा समितिश्चोभे प्रजापतेर्दुहितरौ सचेतसौ ॥ यो मानविद्यादुपमास तिष्ठेत्सचेतनो भवतु शᳬसथे जन इति पर्षदमेत्य जपेदभिभूरहमागमविराडप्रतिवाश्याः ॥ अस्याः पर्षद ईशानः सहसा सुदुष्टरो जन इति स यदिमन्येत क्रुद्धोऽयमिति तमभिमन्त्रयते यात एषा रराव्या तनूर्मन्योः क्रोधस्य नाशनी ॥ तां देवा ब्रह्मचारिणो विनयन्तु सुमेधसः ॥ द्यौरहं पृथिवी चाहं तौ ते क्रोधं नयामसि गर्भमश्वतर्या सहासावित्यथ यदि मन्येत द्रुग्धो यमिति तमभिमन्त्रयते तां ते वाचमास्य आदत्ते हृदय आदधे यत्र यत्र निहिता वाक्तां ततस्तत आददे यदहं ब्रवीमि तत्सत्यमधरोमत्तांद्यस्वेत्येतदेव वशीकरणम् ॥ १४ ॥ अथातो रथारोहणं युङ्क्तेतिरथᳬ सम्प्रेष्य युक्त इति प्रोक्ते सा विराडित्येत्य चक्रे अभिमृशति रथन्तरमसीति दक्षिणं बृहदसीत्युत्तरं वामदेव्यमसीति कूबरीᳬ हस्तेनोपस्थमभि-

मृशत्यङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनुसञ्चरन्तं दूरेहेतिरिन्द्रियवान्पतत्रि ते नाग्नयः पप्रयः पारयन्त्विति नमो माणिचरायेति दक्षिणं धुर्यं प्राजति (गवां मध्ये स्थापयति) अप्राप्य देवताः प्रत्यवरोहेत्सम्प्रति ब्राह्मणान्मध्ये गा अभिक्रम्य पितॄन्न स्त्रीब्रह्मचारिणौ सारथी स्यातां मुहूर्त्तमतीयाय जपेदिहरतिरिहरमध्वमेके मास्त्विहरेतिरिति च स यदि दुर्बलो रथः स्यात्तमास्थाय जपेदयं वामश्विनारथो मा दुर्गे मास्तरोरिषदिति स यदि भ्रम्यात्स्तम्भमुपस्पृश्य भूमिं वा जपेदेष वामाश्विना रथो मा दुर्गे मास्तरोरिषदिति तस्य न काचनार्त्तिर्न रिष्टिर्भवति या त्वा ध्वानं विमुच्य रथं यवसोदके दापयेदेष उ ह वाहनस्यापह्नय इति श्रुतेः ॥ १५ ॥ अथातो हस्त्यारोहणमेत्य हस्तिनमभिमृशति हस्तियशसमसि हस्तिवर्चसमसीत्यथावरोहतीन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मा सम्पारयेत्येतेनैवाश्वारोहणं व्याख्यातमुष्ट्रमारोक्ष्यन्नभिमन्त्रयते त्वाष्ट्रोऽसि त्वष्टृदेवत्यः स्वस्ति मा सम्पारयेति रासभमारोक्ष्यनभिमयन्त्रते शूद्रोऽसि शूद्रजन्माग्नेयो वै द्विरेताः स्वस्ति मा सम्पारयेति नावमारोक्ष्यनभिमन्त्रयते सुनावमित्युत्तरिष्यनभिमन्त्रयते सुत्रामाणमिति वनम-

भिमन्त्रयते नमो रुद्राय वनसदे स्वस्ति मा सम्पारयेति गिरिमभिमन्त्रयते नमो रुद्राय गिरिषदे स्वस्ति मा सम्पारयेति चतुष्पथमभिमन्त्रयते नमो रुद्राय पथिषदे स्वस्ति मा सम्पारयेति नदीमुत्तरिष्यन्नभिमन्त्रयते नमो रुद्रायाप्सुषदे स्वस्ति मा सम्पारयेति श्मशानमभिमन्त्रयते नमो रुद्राय पितृषदे स्वस्ति मा सम्पारयेति गोष्ठमभिमन्त्रयते नमो रुद्राय शकृत्पिण्डसदे स्वस्ति मा सम्पारयेति यत्र चान्यत्रापि नमो रुद्रायेत्येव ब्रूयाद्रुद्रो ह्येवेदꣳसर्वमिति श्रुतेः सिचाऽवधुतोऽभिमन्त्रयते सिगसि न वज्रोऽसि नमस्तेऽस्तु मा मा हिꣳसीरिति स्तनयित्नुमभिमन्त्रयते शिवा नो वर्षाः सन्तु शिवा नः सन्तु हेतयः शिवा नस्ताः सन्तु यास्त्वꣳसृजसि वृत्रहन्निति शिवां वाश्यमानामभिमन्त्रयते शिवो नामेति शकुनिं वाश्यमानमभिमन्त्रयते हिरण्यपर्ण शकुने देवानां प्रहितं गम ॥ यमदूत नमस्तेऽस्तु किन्त्वाकार्क्षारिणोऽब्रवीदिति क्षेम्यो ह्येव भवति लक्षण्यं वृक्षमभिमन्त्रयते मा त्वाशनिर्मा परशुर्मा वातो मा राजप्रेषितो दण्डः ॥ अङ्कुरास्ते प्ररोहन्तु निवाते त्वाऽभिवर्षत्वग्निष्टे मूलं मा हिꣳसीत्स्वस्ति तेऽस्तु वनस्पते स्वस्ति मेऽस्तु वनस्पत इति स यदि किञ्चिल्लभेत तत्प्रतिगृह्णाति

द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्विति साऽस्य न ददतः क्षीयते भूयसी च प्रतिगृहीता भवत्यथ यद्योदनं लभेत तत्प्रतिगृह्य द्यौस्त्वेति तस्य द्विः प्राश्नाति ब्रह्मा त्वाऽश्नातु ब्रह्मा त्वा प्राश्नात्वित्यथ यदि मन्थं लभेत तत्प्रतिगृह्य द्यौस्त्वेति तस्य त्रिः प्राश्नाति ब्रह्मा त्वाऽश्नातु ब्रह्मा त्वा प्राश्नातु ब्रह्मा त्वा पिबत्विति ॥ अथातोऽधीत्याधीत्यानिराकरणं प्रतीकं मे विचक्षणं जिह्वा मे मधु यद्वचः। कर्णाभ्यां भूरि शुश्रुवे मात्वंहार्षीः श्रुतं मयि ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोऽसि सनिरसि शान्तिरस्यनिराकरणमसि ब्रह्मकोशं मे विश ॥ वाचा त्वा पिदधामि वाचा त्वा पिदधामीति ( तिष्ठ प्रतिष्ठ ) स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवत्वाप्यायन्तु मेऽङ्गानि वाक्प्राणश्चक्षुः श्रोत्रं यशो बलम्। यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु ॥ १६ ॥

इति श्रीपारस्करगृह्यसूत्रे तृतीयकाण्डः समाप्तः ॥ ३ ॥



# ( अथ पारस्करगृह्यसूत्रपरिशिष्टम् । )

## अथ श्राद्धसूत्रम् ।

अपरपक्षे श्राद्धं कुर्वीतोर्ध्वं वा चतुर्थ्या यदहः सम्पद्येत तदहर्ब्राह्मणानामन्त्र्य पूर्वेद्युर्वा स्नातकानेके यतीन् गृहस्थान् साधून् वा श्रोत्रियान् वृद्धाननवद्यान् स्वकर्मस्थानभावेऽपि शिष्यान् स्वाचारान् द्विर्नग्नशुक्लविक्लिधश्यावदन्तविद्धप्रजननव्याधितव्यङ्गिश्वित्रिकुष्ठिकुनखिवर्जमनिन्द्येनामन्त्रितो नापक्रामेदामन्त्रितो वाऽन्यदन्नं न प्रतिगृह्णीयात्स्नाताञ्छुचीनाचान्तान्प्राङ्मुखानुपवेश्य दैवे युग्मानयुग्मान्यथाशक्ति पित्र्य एकैकस्योदङ्मुखान्द्वौ वा दैवे त्रीन् पित्र्य एकैकमुभयत्र वा मातामहानाञ्चैवं तन्त्रं तत्र वा वैश्वदेविकꣳश्रद्धान्वितः श्राद्धं कुर्वीत शाकेनापि वाऽपरपक्षमतिक्रामेन्मासि मासि वोशनमिति श्रुतेस्तदहः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यादध्वमैथुनश्रमस्वाध्यायान्वर्जयेदावाहनादि वाग्यत उपस्पर्शनादामन्त्रिताश्चैवम् ॥ १ ॥ दैवपूर्वꣳ श्राद्धं पिण्डपितृयज्ञवदुपचारः पित्र्ये द्विगुणास्तु दर्भाः पवित्रपाणिर्दद्यादासीनः सर्वत्र प्रश्नेषु पङ्क्ति-

मूर्धन्यं पृच्छति सर्वान्वासनेषु दर्भानास्तीर्य विश्वान्देवानावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञातो विश्वे देवासऽआगतेत्यनयाऽऽवाह्यावकीर्य विश्वेदेवाः श‍ृणुतेममिति जपित्वा पितॄनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञत उशन्तस्त्वेत्यनयाऽऽवाह्यावकीर्याऽऽयन्तु न इति जपित्वा यज्ञिय-वृक्षचमसेषु पवित्रान्तर्हितेष्वेकैकस्मिन्नप आसिञ्चति शन्नो देवीरित्येकैकस्मिन्नेव तिलानावपति तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः ॥ प्रत्नमद्भिः प्रक्तः स्वधया पितॄनिमाँल्लोकान्प्रीणाहि नः स्वाहेति सौवर्णराजतौदुम्बरखड्गमणिमयानां पात्राणामन्यतमेषु यानि वा विद्यन्ते पत्रपुटेष्वे-कैकस्यैकेन ददाति सपवित्रेषु हस्तेषु या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थि-वीर्याः ॥ हिरण्यवर्णा यज्ञियास्ता न आपः शिवाः शꣳस्योनाः सुहवा भवन्त्वित्यसावेष तेऽर्घ इति प्रथमे पात्रे सꣳस्रवान्समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रं निदधात्यत्र गन्धपुष्पधूपदीप-वाससाञ्च प्रदानम् ॥ २ ॥ उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्य इति कुरुष्वेत्यनुज्ञातः पिण्ड-पितृयज्ञवद्धुत्वा हुतशेषं दत्त्वा पात्रमालभ्य जपति पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे

अमृते अमृतं जुहोमि स्वाहेति वैष्णव्यर्चा यजुषा वाऽङ्गुष्ठमन्नेऽवगाह्यापहता इति तिलान्प्रकीर्योष्णꣳस्विष्टमन्नं दद्याच्छक्त्या वाऽश्नत्सु जपेत् व्याहृतिपूर्वां गायत्रीꣳ सप्रणवाꣳ सकृत्त्रिर्वा राक्षोघ्नीः पित्र्यमन्त्रान्पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणि तृप्तान् ज्ञात्वाऽन्नं प्रकीर्य सकृत्सकृदपो दत्त्वा पूर्ववद्गायत्रीं जपित्वा मधुमतीर्मधु मध्विति च तृप्ताः स्थेति पृच्छति तृप्ताः स्म इत्यनुज्ञातः शेषमन्नमनुज्ञाप्य सर्वमन्नमेकतोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन्पिण्डानवनेज्य दद्यादाचान्तेष्वित्येक आचान्तेषूदकं पुष्पाण्यक्षतानक्षय्योदकं च दद्यादघोराः पितरः सन्त्वित्युक्ते गोत्रं नो वर्धतां वर्धतामित्युक्ते दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ॥ श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्वित्याशिषः प्रतिगृह्य स्वधावाचनीयान्सपवित्रान्कुशानास्तीर्य स्वधां वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तु स्वधेत्युच्यमाने स्वधावाचनीयेष्वपो निषिञ्चत्युर्जमित्युत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्याद्ब्राह्मणेभ्यो विश्वेदेवाः प्रीयन्ता-

मिति दैवे वाचयित्वा वाजेवाजेवतेति विसृज्यामावाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्योपविशेत् ॥ ३ ॥ अथैकोद्दिष्टमेकोऽर्घ एकं पवित्रमेकः पिण्डो नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तिप्रश्नः सुस्वदितमितीतरे ब्रूयुरुपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गोऽभिरताः स्म इतीतरे ॥ ४ ॥ ततः संवत्सरे पूर्णे त्रिपक्षे द्वादशाहे वा यदहर्वा वृद्धिरापद्येत चत्वारि पात्राणि सतिलगन्धोदकानि पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्यामेतेनैव पिण्डो व्याख्यातोऽत ऊर्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्याद्यस्मिन्नहनि प्रेतः स्यात् ॥ ५ ॥ आभ्युदयिके प्रदक्षिणमुपचारः पूर्वाह्णे पित्र्यमन्त्रवर्जं जपः ऋजवो दर्भा यवैस्तिलार्थाः सम्पन्नमिति तृप्तिप्रश्नः सुसम्पन्नमितीतरे ब्रूयुर्दधिबदराक्षतमिश्राः पिण्डा नान्दीमुखान्पितॄनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञातो नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने नान्दीमुखान्पितॄन्वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातो नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति न स्वधां प्रयुञ्जीत युग्माना-

शयेदत्र ॥ ६ ॥ अथ तृप्तिर्ग्राम्याभिरोषधीभिर्मासं तृप्तिस्तदभाव आरण्याभिर्मूलफलैरोषधीभिर्वा सहान्नेनोत्तरास्तर्पयन्ति छागोस्रमेषानालभ्य क्रीत्वा लब्ध्वा वा न स्वयं मृतानाहृत्य पचेन्मासद्वयं तु मत्स्यैर्मासत्रयं तु हारिणेन चतुर औरभ्रेण पञ्च शाकुनेन षट् छागेन सप्त कौर्मेणाष्टौ वाराहेण नव मेषमाꣳसेन दश माहिषेणैकादश पार्षतेन संवत्सरं तु गव्येन पयसा पायसेन वा वार्ध्रीण-समाꣳसेन द्वादश वर्षाणि ॥ ७ ॥ अथाक्षय्यतृप्तिः खड्गमाꣳसं कालशाकं लोहच्छागमाꣳसं मधु महाशल्को वर्षासु मघाश्राद्धꣳहस्तिच्छायायाश्च मन्त्राध्यायिनः पूताः शाखाध्यायी षडङ्गविज्ज्येष्ठ-सामगो गायत्रीसारमात्रोऽपि पञ्चाग्निः स्नातकस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णी द्रोणपाठको ब्राह्मोढा-पुत्रो वागीश्वरो याज्ञिकश्च नियोज्या अभावेऽप्येकं वेदविदं पङ्क्तिमूर्द्धनि नियुञ्ज्यात् पङ्क्तिं पुनातीति वचनात् ॥ ८ ॥ अथ काम्यानि भवन्ति स्त्रियोऽप्रतिरूपाः प्रतिपदि द्वितीयायाꣳस्त्री-जन्म श्वास्तृतीयायां चतुर्थ्यां क्षुद्रपशवः पुत्राः पञ्चम्यां द्यूतर्द्धिः षष्ठ्यां कृषिः सप्तम्यां वाणिज्य-मष्टम्यामेकशफं नवम्यां दशम्यां गावः परिचारका एकादश्यां धनधान्यानि द्वादश्यां कुप्यꣳ

हिरण्यं ज्ञातिश्रैष्ठ्यं च त्रयोदश्यां युवानस्तत्र म्रियन्ते शस्त्रहतस्य चतुर्दश्याममावास्यायाᳪसर्व-
मित्यमावास्यायाᳪसर्वमिति ॥ ९ ॥

इति कात्यायनप्रोक्तं पारस्करगृह्यसूत्रस्य परिशिष्टं समाप्तम् ।



## श्रीकात्यायनोक्तं त्रिकण्डिकास्नानसूत्रम् ।

अथातो नित्यस्नान नद्यादौ मृद्गोमयकुशतिलसुमनस आहृत्योदकान्त गत्वा शुचौ देशे स्थाप्य प्रक्षाल्य पाणिपाद कुशोपग्रहो बद्धशिखी यज्ञोपवीत्याचम्योरुᳪहीति तोयमामन्त्र्यावर्तयेद्येतेशतमिति सुमित्रियान इत्यपोऽञ्जलिनाऽऽदाय दुर्मित्रिया इति द्वेष्य प्रति निषिञ्चेत्कटि वस्त्यूरू जङ्घे चरणौ करौ मृदा त्रिस्त्रि प्रक्षाल्याचम्य नमस्योदकमालभेदङ्गानि मृदेद विष्णुरिति सूर्याभिमुखो निमज्जेदापो अस्मानिति स्नात्वोदिदाभ्य इत्युन्मज्य निमज्योन्मज्याचम्य गोमयेन विलिम्पेन्मानस्तोक इति ततोऽभिषिञ्चेदिमम्मे वरुणेति चतसृभिर्माप उदुत्तम मुञ्चन्त्ववभृथेत्यन्ते चैतन्निमज्योन्मज्याचम्य दर्भै पावयेदापोहिष्ठेति तिसृभिरिदमापो हविष्मतीर्देवीराप इति द्वाभ्यामपोदेवा द्रुपदादिव शन्नो देवीरपाᳪ रसमपोदेवी पुनन्तुमेति नवभिश्चित्पतिर्मेत्योङ्कारेण व्याहृतिभिर्गायत्र्या चादावन्ते चान्तर्जलेऽघमर्षण त्रिरावर्त्तयेद् द्रुपदादिवायङ्गौरिति वा तृच प्राणायाम वा सशिरसमोमिति वा विष्णोर्वां स्मरणम् ॥ १ ॥ उत्तीर्य धौते वाससी परिधाय मृदोरू करौ प्रक्षाल्याचम्य त्रिरायम्यासून् पुष्पाण्यम्बुमिश्राण्यूर्ध्वं क्षिप्त्वोर्ध्वबाहु सूर्यमुदीक्षन्नुद्वयमुदुत्य चित्र तच्चक्षुरिति गायत्र्या च

यथाशक्ति विभ्राडित्यनुवाकपुरुषसूक्तशिवसङ्कल्पमण्डलब्राह्मणैरित्युपस्थाय प्रदक्षिणीकृत्य नमस्कृत्योपविशेत् दर्भेषु दर्भपाणि स्वाध्यायञ्च यथाशक्त्या-दावारभ्य वेदम् ॥ २ ॥ ततस्तर्पयेद्ब्रह्माण पूर्वं विष्णुꣳ रुद्र प्रजापति देवाꣳश्छन्दाꣳसि वेदानृषीन् पुराणाचार्यान् गन्धर्वानितराचार्यान्संवत्सरञ्च सावयव देवीरप्सरसो देवानुगान्नागान्सागरान्पर्वतान्सरितो मनुष्यान् यक्षान् रक्षाꣳसि पिशाचान्सुपर्णान् भूतानि पशून् वनस्पतीनोषधीर्भूतग्रामश्चतुर्विधस्तृ-प्यतामिति ॐकारपूर्वं ततो निवीती मनुष्यान् । सनकञ्च सनन्दन तृतीयञ्च सनातनम् । कपिलमासुरिञ्चैव वोढुं पञ्चशिखन्तथा । ततोऽपसव्य तिलमिश्र कव्यवाडनलꣳ सोम यममर्यमणमग्निष्वात्तान् सोमपो बर्हिषदो यमाꣳश्चैके । यमाय धर्मराजाय मृत्यवे चान्तकाय च । वैवस्वताय कालाय सर्वभूतक्षयाय च । औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदराय चित्राय चित्रगुप्ताय वै नम इति "एकैकस्य तिलैर्मिश्रांस्त्रीस्त्रीन्दद्याजलाञ्जलीन् । यावज्जीवकृत पाप तत्क्षणादेव नश्यति जीवत्पितृकोऽप्येतानन्याꣳश्चेतर उदीरतामङ्गिरस आयन्तु न ऊर्जं वहन्ती पितृभ्यो ये चेह मधुव्वाता इति तृचञ्जपन् प्रसिञ्चेत्तृप्यध्वमिति त्रिर्नमो व इत्युक्त्वा मातामहानाञ्चैव गुरुशिष्यर्त्विग्ज्ञातिबान्धवानतर्पिता देहाद्रुधिर पिबन्ति वासो निष्पीड्याचम्य ब्राह्मवैष्णवरौद्रसावित्रमैत्रवारुणैस्तल्लिङ्गैर-र्चयेदहश्चꣳ हꣳस इत्युपस्थाय प्रदक्षिणीकृत्य दिशश्च देवताश्च नमस्कृत्योपविश्य ब्रह्माग्निपृथिव्योषधिवाग्वाचस्पतिविष्णुमहद्भ्योऽद्भ्योऽपाम्पतये वरुणाय नम इति सर्वत्र संवर्चसेति मुख विमृष्टे देवागातुविद इति विसर्जयेदेष स्नानविधिरेष स्नानविधि ॥ ३ ॥ इति श्रीकात्यायनोक्त त्रिकण्डिकास्नानसूत्र समाप्तम् ॥

# ॥ अथ भोजनसूत्रम् ॥

अथातः श्रुतिस्मृतीरनुसृत्य भोजनविधिं व्याख्यास्यामः ॥ आचान्तो धृतोत्तरीयवस्त्रो धृतश्रीखण्ड-गन्धपुण्ड्रो भोजनशालामागत्य गोमयेनोपलिप्य शुचौ देशे विहितपीठाधिष्ठितो नित्यं प्राङ्मुखो

न दक्षिणामुखो न प्रत्यङ्मुखो न विदिङ्मुखो श्रीकामश्चेत्प्रत्यङ्मुख सत्यकामश्चेदुदङ्मुखो यशस्कामश्चेद्दक्षिणामुखो जीवन्मातृकवर्जं हस्तपादास्येषु पञ्चस्वार्द्रो नीवारचूर्णैर्गोमृदा भस्मनोदकेन वा मण्डलं कुर्याच्चतुष्कोणं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य मण्डलाकृति वैश्यस्याभ्युक्षणः शूद्रस्य यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति ॥ एवं मण्डलभस्मैतत्सर्वभूतानि रक्षत्विति तत्र भूमौ निहितपात्रेऽन्ने परिविष्टे पितुन्नुस्तोषमित्यन्नँ स्तुत्वा मानस्तोके नमो वः किरिकेभ्यो नमः शम्भवायेत्यभिमन्त्र्य प्रोक्षयेत् ॥ सत्यं त्वर्त्तेन परिषिञ्चामीति प्रातर्ऋतं त्वा सत्येन परिषिञ्चामीति सायं तेजोसि शुक्रमस्यमृतमसीति यजुषाऽन्नमभिमृश्याऽग्निरस्मीत्यात्मानमग्निं ध्यात्वा भूपतये भुवनपतये भूतानां पतये इति चित्राय चित्रगुप्ताय सर्वेभ्यो भूतेभ्यो नम इति दिवा प्रणवादिकैः स्वाहा नमोऽन्तैर्मन्त्रैः प्रतिमन्त्रं बलीन्हरेदन्तश्चरति भूतेषु गुहायां विश्वतोमुखः ॥ त्वं ब्रह्म त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारस्त्वं विष्णोः परमं पदममृतोपस्तरणमसि स्वाहेति विष्णुमन्त्रमभिध्यायन्नाचम्यान्नममृतं ध्यायन्मौनी हस्तचापल्यादिरहितो मुखे पञ्च प्राणाहुतीर्जुहोति प्राणाय

स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहोदनाय स्वाहेति क्रमं याज्ञवल्क्यो मन्यत उदानाय स्वाहेति शौनकबौधायनौ याज्ञवल्क्योदितक्रमो वाजसनेयिनां दन्तैर्नोपस्पृशेज्जिह्वया ग्रसेदङ्गुष्ठप्रदेशिनीमध्यमाभिः प्रथमामङ्गुष्ठमध्यमानामिकाभिर्द्वितीयामङ्गुष्ठानामिकाकनिष्ठिकाभिस्तृतीयां कनिष्ठिकातर्जन्यङ्गुष्ठैश्चतुर्थीꣳ सर्वाभिरङ्गुलीभिः साङ्गुष्ठाभिः पञ्चमीमङ्गुष्ठानामिकाकनिष्ठिकाह्यान्नेनैता आहुतय इति हारीतव्याख्यातारः सर्वाभिरेता इति बौधायनः ॥ मौनं त्यक्त्वा प्रागद्रवरूपमश्नीयान्मध्ये कठिनमन्ते पुनर्द्रवाशी स्यान्मधुरं पूर्वं लवणाम्लौ मध्ये ॥ कटुतिक्तादिकान्पश्चाद्यथासुखं भुञ्जीत भुञ्जानो वामहस्तेनान्नन्न स्पृशेन्न पादौ न शिरो न बस्तिं न पराभोजनꣳ स्पृशेदेवं यथारुचि भुक्त्वा भुक्तशेषमन्नमादाय ॥ "मद्भुक्तोच्छिष्टशेषं ये भुञ्जते पितरोऽधमाः ॥ तेषामन्नं मया दत्तमक्षय्यमुपतिष्ठतु" इति ॥ १ ॥ पितृतीर्थेन दत्वाऽमृतापिधानमसि स्वाहेति हस्तगृहीतानामपामर्धं पीत्वाऽर्धं भूमौ निक्षिपेत् ॥ "रौरवे पूयनिलये पद्मार्बुदनिवासिनाम् ॥ अर्थिनाꣳ सर्वभूतानामक्षय्यमुपतिष्ठतु" इति तस्माद्देशादपसृत्य गण्डूषशलाकादिभिस्तर्जनीवर्जमा-

स्यꣳशोधयेन्न भार्यादर्शनेऽश्नीयान्न भार्या सह न सन्ध्ययोर्न मध्याह्ने नार्धरात्रे नायज्ञोपवीती नार्द्र-
शिरा नार्द्रवासा नैकवासा न शयानो न ताम्रभाजने न भिन्नेन राजतसौवर्णशङ्खस्फाटिककाँस्य-
भाजनवर्जं न लौहे न मृन्मये न सन्धिसꣳस्थिते न भुवि न पाणौ न सर्वभोजी स्यात्किञ्चिद्भोज्यं
परित्यजेदन्यत्र घृतपायसदधिसक्तुपललमधुभ्यः साध्वाचान्तो दक्षिणपादाङ्गुष्ठे पाणिं निःस्रावये-
दङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ॥ ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुगिति श्वात्राः
पीता इति नाभिमालभेत अमृता इत्यतः प्राग् "अगस्त्यं वैनतेयं च शनिश्च वडवानलम्। आहार-
परिणामार्थं स्मरेद्भीमञ्च पञ्चमम्" ॥ इत्युदरमालभ्य "शर्यातिं च सुकन्याञ्च च्यवनं शक्रमश्विनौ ॥
भोजनान्ते स्मरेन्नित्यं तस्य चक्षुर्न हीयते" इति स्मृत्वा मुखशुद्धिं कुर्यान्नमो भगवते वाजसनेयाय
याज्ञवल्क्याय नमो भगवते वाजसनेयाय याज्ञवल्क्याय ॥ ॥ ॥

इति परिशिष्टे भोजनसूत्रम् ॥

इति याज्ञवल्क्यशिक्षा-प्रतिज्ञासूत्र-सर्वानुक्रमसूत्र-
पारस्करगृह्यसूत्र-परिशिष्टप्रकरणानि समाप्तानि ॥

## श्लोकपञ्चकम् ।

द्विसप्तत्युत्तरे शाके ह्यष्टादशशते युते । चैत्रे तिथौ प्रतिपदि शुक्ले च रविवासरे ॥ १ ॥
सौराष्ट्रान्तर्गतश्रीमज्जामनगरवासिना । आचार्यामृतलालेन त्रिकंजित्तनुजन्मना ॥ २ ॥
शार्ङ्गिणा, श्रीयजुर्वेदसंहिता विदुषां कृते । पीयूषवर्षिणीनाम्न्या टिप्पण्या समलङ्कृता ॥ ३ ॥
याज्ञवल्क्यकृतां शिक्षामालोक्यैव यथामति । इयं संशोधिता सुष्ठु प्रातिशाख्यानुसारतः ॥ ४ ॥
प्रसन्नमानसाः सन्तु पितरो गुरवस्तथा । प्रीणातु ललितादेवी चास्मच्छ्रीकुलदेवता ॥ ५ ॥

ग्रन्थोऽयं मोहमय्यां सत्यभामाबाई पाण्डुरङ्ग इत्येताभिर्निर्णयसागरमुद्रणालयस्य कृते
तत्रैव मुद्रापयित्वा प्रकाशितः ।

शकाब्दाः १८७२, सनाब्दाः १९५०.

पब्लिशर—सत्यभामाबाई पाण्डुरंग
प्रिंटर— रामचंद्र येसू शेडगे
निर्णयसागर प्रेस, २६।२८ कोलभाट स्ट्रीट, मुंबई

इति प्रास्ताविक-संहितामन्त्राणामकाराद्यनुक्रमणिका-वेदपारायणविध्यनुवाकसूत्राध्यायार्षविकृति-
याज्ञवल्क्यशिक्षा-प्रतिज्ञासूत्र-सर्वानुक्रमसूत्र-पारस्करगृह्यसूत्रादिसमलङ्कृता

# शुक्लयजुर्वेदमाध्यन्दिनीयसंहिता समाप्ता ॥